वैदर्भमार्गापेक्षया वक्ष्यमाणाः। अत एव सामान्येनाह- गुणदोषानशास्त्रज्ञः कथं विभजते जनः इति। सर्वमपि सा[मान्यं प]कस्याप्यर्थस्य प्रकृतापेक्षया विशेषनिष्ठं भविष्यतीति निपुणेयं वाचोयुक्तिः। तान् गुणदोषान् यो न वेत्ति पुरुषः [स] कथं विभजते [विभक्तान्करो]ति एते गुणाः [एते दोषा इ]ति। य[तो गुणानाद]त्ते दोषान् हास्यति कथञ्चित्। किं न विभजते, अशास्त्रज्ञो यतः। शास्त्रादेव हि गुणदोषा विवेच्यन्ते। यश्च शास्त्रं गुणदोषविवेक[विष] [6a]यं न वेत्ति, कथं तस्याप्रतिपन्नोपायस्य गुणदोषविवेकलक्षणमुपेयं सेत्स्यति। यथा त्वस्य रूपव..............किमन्धस्येत्यादि। अन्धस्य चक्षुर्विकलस्य रूपभेदानां नीलपीतादीनां रूपविशेषाणां उप[ल]ब्धिषु दर्शने[षु नाधिकारः। इ]ह सामान्येन रूपं नाम किञ्चिदस्तीति श्रुतिमात्रकमपश्यतः स्यात्। न तु रूपविशेषसाक्षात्का[रः। विशेषज्ञानाभावे] न च तत् क्वचिदुपयुज्यते। ततो यदाहमनुष्ठाना[?]भावाद् विभागेन तु सर्वात्मना शास्त्र......[विभ]जत इत्याह। तदेवमियता ग्रन्थेन शास्त्रादेव सर्वगुणदोषविवेकतो नान्यथा काव्येऽपि......

अतः प्रजानां व्युत्पत्तिमभिसन्धाय सूरयः।
वाचां विचित्रमार्गाणां निबबन्धुः क्रियाविधिम् ॥९॥

अतः कारणात् सूरयः पूर्वाचार्याः क्रियाविधिं निबबन्धुरिति संबन्धः। क्रियाविधिं क्रियाकल्पम्.........[मल्ल]नागेन[1] विद्यासमुद्देशे क्रियाकल्प इति काव्यालङ्कार उक्तः। तदनुसारेणानेन क्रियाकल्पः क्रिया.........[विधी]यतेऽनेनेति क्रियाविधिः। क्रियाकल्पोऽपि एवमिति नार्थतः कश्चिद् भेदः। काव्यलक्षणं शास्त्रं कृतवन्तः। [शास्त्रानुसारेण मूर्खो]ऽपि प्रवर्तते। किं पुनर्बुद्धिमान् लोकः। तस्मात् सर्वत्र नमतमिति। व्युत्पत्तिमभिसन्धाय काव्ये यथावद् गुणदोषपरिज्ञान[हेतुभिः शास्त्र]-संगृहीतैर्गुणदोषविवेको व्युत्पत्तिः तदुपादानहानिफलाऽभिधेया। चतुर्वर्ग इति च नानाप्रकारः सर्वपुरुषार्थः संगृहीतः। अस्यैव तु [शास्त्रस्य प्रमेयश्च]तुर्वर्गः। तत्प्रतिपादकं शास्त्रं तादर्थ्यात्। एतावानेव च पुरुषार्थः। तत्र सर्वत्र गुणाश्च दोषाश्च ज्ञातव्याः। तत्र गुणा वस्तुतः पुरुषार्थमया एव। ततस्त उपादेय[ाः] उपादेयतया [च] ज्ञेयास्तथात्वेनाज्ञातानामुपादानासम्भवात्। दोषास्तु तदाभासास्तत्संभविनो हेयाः। तेऽपि हेयतया ज्ञेयास्तथाभावेनाज्ञातानां हानासंभवात्। [6b] [वि]वेकश्च सम्यक्

१ तत्र- क्रियाकल्पः काव्यकरणविधिः काव्यालंकार इत्यर्थः। -- कामसूत्र[१. ३ १६]- जयमङ्गला—पृ: ३५



शास्त्रादेव दृष्टार्थाददृष्टार्थाद् वेति सर्वशास्त्रस्थितिरेषा। काव्यमप्येतत् त्रिविधं चतुर्वर्गरूपं चतुर्वर्गस्तदुपायश्चानेन रसान्तरपरिग्रहेण प्रतिपाद्य[प्रतिपा]दकत्वात्। शब्दात्मकमपि काव्यशरीरं चतुर्वर्गस्तादर्थ्यात्। उपायोऽपि तादर्थ्याच्चतुर्वर्गः।

मुख्यस्तावच्चतुर्वर्गः पुमर्थाशेषसंग्रहः।
तदुपायेऽपि तादर्थ्याच्छास्त्रेष्वपि [समादरः] ॥

इति संग्रहश्लोकः।

किं च काव्येनेष्टदेवताविषयविचित्रस्तोत्रलक्षणेन सम्यग्विरचितेन धर्मोऽप्रमेयः। तथात्वे च कदाचिद् वरलाभादिकोऽर्थः। सुख[म]प्येतत्पुरुषार्थ[द्वय]निष्ठमुक्तम्।

बुद्धस्तोत्रग्रन्थनव्यापृतानां भक्तिप्रह्वेष्विन्द्रियेषु द्रवत्सु।
एकैकस्मिन् यः क्षणे पुण्यकोशो नासर्वज्ञस्तं प्रमातुं समर्थः ॥ इति।

गुणज्ञराजादि[वर्णनातोऽप्यर्थाति]शयप्राप्तिस्तदर्थाच्च धर्मः सुखं च सम्पत्स्येते। किं बहुना, न सोऽस्ति पुरुषार्थः कश्चिद् यः काव्यात् परिगृहीताश्रयविशेषा[न्न जायते। इ]हानुषङ्गे गुणदोषविभागः करणीयः। स च शास्त्रादेव नान्यथेति विस्तरेण पूर्वमेव प्रतिपादितम्। ततः का[व्यक्रिया]विधिमिति प्रकृतम्। कस्य व्युत्पत्तिमभिसन्धायेत्याह- प्रजानामिति। लोकस्य सन्ताने का व्युत्पत्तिः कथं [केषां ?] नाम...... [व्युत्पादनक्रि]यामभिसन्धाय क्रियाविधिं निबबन्धुरित्याह- वाचां विचित्रमार्गाणामिति। विचित्रो नानाप्रकारः शब्दालंकार[ार्थालंकारादियुक्तो मार्गः] काव्यान्येव। ततः काव्यविषयां लोककर्तृकां काव्यगुणदोषविभागविज्ञानलक्षणां व्युत्पत्तिमुद्दिश्य [शास्त्रनिर्माण[ं]]। तत्संक्षेपत्वाद् इदमपि सप्रयोजनमिति कर्त्तव्यमेव। ततश्च सामान्येन काव्यलक्षणशास्त्राज्ज्ञेय इयता विशिष्योच्यते ॥

[काव्यल]क्षणमिदानीं कर्तुमारभते—

तैः शरीरं च काव्यानामलङ्कारश्च दर्शितः।
शरीरं तावदिष्टार्थव्यवच्छिन्ना पदावली ॥१०॥

इह यानि कानिचित् काव्यानि संभवन्ति तेषां [शरीरमलङ्कारश्च] तैः पूर्वाचार्यैः लोकस्य काव्यव्युत्पत्तये क्रियाकल्पे निबद्धे। तयोः कीदृशं शरीरम् [शब्दरूपम्। अर्थे][7a]नाविष्टत्वात्। यथा हि पुरुषशरीरे हारकेयूरादिरलंकारो न्यस्यते येन

शोभते, तथा काव्यशरीरे [शब्दमयेऽप्युपमादिरर्थ्य]ते, यतः शोभा। [व]क्ष्यते [च]-

काव्यशोभाकरान् धर्मानलंकारान् प्रचक्षते ॥ इति। [२.१]

पश्चादलङ्कारो वक्ष्यते। पदानां सुबन्तति[ङन्तानां आवली श्रेणी, तया] परिपूर्णं काव्यं [तस्य] श्लोकादयोऽवयवा अवान्तरवाक्यानि। कविना वक्तुमिष्टेऽभिप्रेतेऽर्थे कस्मिंश्चिद् रघुवंशादौ। व्यवच्छिन्ना गमकत्वे[न]...स्वीकृता। विशेषे[ण]......[शरी]रं विज्ञेयमितीष्टार्थव्यवच्छिन्ना पदावली प्रसिद्धत्वादनूद्याप्रसिद्धं शरीरं विधीयते। यथा यः...........

[श]रीरं कतिविधमित्याह—

पद्यं गद्यं च मिश्रं च तत् त्रिधैव व्यवस्थितम्।
पद्यं चतुष्पदी तच्च वृत्तं जातिरिति द्विधा ॥११॥

यदनन्तरं लक्षणतः कथितं तच्छरीरं प्रभेदतः त्रिधैव त्रिप्रकारमेव व्यवस्थितं बोद्धव्यम्।.........[के]वलपद्यात्मकं......[केवलगद्यात्मकं गद्यपद्योभयात्मकं च]... इत्यनेकेन प्रकारेण त्रिधैव व्यवस्थितमिति प्रकृतम्। तत्र पद्यं न ज्ञायते किंरूपमित्यत आह—पद्यं चतुष्पदीत्यादि।.........अनूद्य पद्यमिति ज्ञ[ापयति चतुष्पदी] तत् पद्यं ज्ञेयमिति। तच्च पद्यं द्विधा द्विप्रभेदमवसेयम्। कथम्—वृत्तं जातिरित्यनेन रूपेण ॥

तदपि न ज्ञायते किं वृत्तं जाति[र्वा कीदृशी]ति। तदाह—

छन्दोविचित्यां सकलस्तत्प्रपञ्चो निदर्शितः।
सा विद्या नौर्विविक्षूणां गम्भीरं काव्यसागरम् ॥१२॥

तयोर्वृत्तजा[त्योः प्रपञ्चो] विचित्रः प्रभेदः वक्त्रादिरूपः, आर्यादिलक्षणश्च सकलः सर्वो निदर्शितः लक्षणतो लक्षितश्च प्रतिपादितः। कुत्र छन्दो[विचित्यां छन्दांसि] विचीयन्ते [संगृह्यन्ते यत्र] यया वा तस्याम्। सा चेयं विद्या पद्यलक्षणस्य काव्यशरीरस्य साधिका। यदन[या] प्रसाध्यते ततः साप्यादरेण द्रष्टव्येति वक्रोक्त्या तदभ्यासे श्रोतृजनं नियोज[यति- सा विद्येति] काव्यमे[व सागरः तद्वद्]गम्भीरं यतः,



भावार्थगाम्भीर्यात्। न तु शब्दगाम्भीर्येण। अन्यथा प्रमादो न स्यात्। नानारसामृतत्वात्। सूक्तरत्नाकरत्वात्। अकृतधियां च [वैरस्याधायकत्वात्] काव्यसागरं वि[विक्षूणां अवगा]हि[तु]मिच्छतां स्वयं कर्तुं परकीयं वा ज्ञातुमिच्छतामित्यर्थः। सा छन्दोविचितिविद्या नौरूपा। सापि ज्ञातव्येति भावः॥

संघाताद्यपि वृत्तजातिप्रकारोऽस्ति छन्दःशास्त्रोक्तः [7b] [स इ]ह किं न दर्शित इति चेत्, आह—

मुक्तकं कुलकं कोशः संघात इति तादृशः।
सर्गबन्धांशरूपत्वादनुक्तः पद्यविस्तरः ॥१३॥

एकः श्लोकः समाप्तार्थः स्वतन्त्रः श्लोकान्तरनिरपेक्ष इति मुक्तकम्, न तु निबद्धमिति सर्गबन्धेन [वैषम्यं] बन्धेऽनिबन्धनात्। यद् वक्ष्यति-

सर्गबन्धांशरूपत्वात [१.१३] इति।

एकक्रियाद्वारेण परस्परसापेक्षाः समाप्तार्थाः प्रत्येकमसमाप्तार्थाः श्लोकाः कुलकम्। तद्विशेष एव युगलकम्। नानाभित्तयो भिन्नक्रियाः स्वतन्त्राः श्लोकाः कोशवत् स्था[पिताः कोशः]। एकां भित्तिं प्रावृडादिकां वर्णयितुं समुदायेन प्रवृत्ता भिन्नक्रियाः श्लोकाः संघातः। इति तादृशः। इत्येवंरूपश्चतुर्विधपद्यप्रकारोऽनुक्तो [विशिष्य] पृथगिह ल[क्षणतः अनुक्तः अकथित]स्त्यक्त एव। किं कारणम्। सर्गबन्धांशरूपत्वात् सर्गबन्धस्य अंशरूपा,एकदेशस्वभावास्तेषां भावस्तत्त्वम्। तस्मात् ते हि सं[गृहीताः। न] मुक्तक[ादिव्यति]रेकेण सर्गबन्धः से[त्स्य]ति, तन्तुव्यतिरेकेण पटवत्। स च लक्षणत उच्यत एव। ततस्तेऽपि तदव्यतिरेका[त्] पृथगसर्गब[न्धरूप]तो नोक्ता इत्यर्थः।

नन्वेवं स्तोत्रावदानपरिकथादिपद्यप्रपञ्चो न संगृहीतः स्यात्। संगृहीत एव। [उक्त]लक्षणयोगात्......[सं]घातः आर्या कोश इति संघातादिसंज्ञाप्रवृत्तिमात्रेण संघातादित्वं सर्गबन्धांशस्य संघातादेरत[स्तद्रूप]त्वं स्तोत्रादीनां......। नहि सर्गबन्धस्य शिशुपालवधादिनामान्तरकरणमात्रेण सर्गबन्धत्वं हीयते। तस्मात् स्तोत्रादिरपि लक्षण[तः संघा]तादिसंगृहीतः '...नहि कर्कादिव्यपदेशान्तरयोगादश्वत्वं हीयते, अश्वविशेषाः कर्कादय इति चेत्–स्तोत्रादयोऽपि यथालक्ष[णं]......निमित्तं(?) यथे[ह सर्ग]बन्धे च संघातादिः परिस्फुटं लक्ष्यत एव। तत्र हि प्रावृडवर्णनादिः

संघातः। मन्त्राद्यवसरे च यथा[मुक्तकादिस्तथो]क्तं प्राक्। मुक्तकं......[इत्यत्र]त्र परिस्फुटमेवेत्यलं विस्तरेण ॥

कः पुनः सर्गबन्धो यस्यावयवाः संघातादय इत्याह–

सर्गबन्धो महाकाव्यमुच्यते त्वस्य लक्षणम् ।
आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखम् ॥१४॥

यदेतत् प्रसिद्धं गुणतः सन्निवेशतश्च महाकाव्यमिति सर्गबन्धः...[स]...विज्ञय इति महाकाव्यानुवादेन सर्गबन्धो विधीयते। सर्गैः सर्गाख्यैः परिच्छेदविशेषैर्बध्यतेऽसाविति सर्गबन्धः। ततश्चानेकसर्गात्मकः सर्गबन्धो महाकाव्यम्। सर्गाश्च संघातादिचतुष्टयस्वभावा इति द्रष्टव्यम्।

अथवा अन्यथावतार्यते। ननु मुक्तकादयो महाकाव्यस्यांशाः, तत् किमुच्यते–

सर्गबन्धांशरूपत्वात [ १. १३ ]

इत्याह – सर्गबन्धो महाकाव्यमिति। सर्गबन्ध इत्यपि महाकाव्यमुच्यते। ततो ये [म]हाकाव्यस्यांशास्ते सर्गबन्धस्यापीत्यविरोध इत्यर्थः। शेषं समानम्।

सर्गबन्धस्य तर्हि किं लक्षणं यत् तदंशस्य संघातादेरपि स्यादित्याह – उच्यते त्वस्य लक्षणम्। तुशब्दो भिन्नक्रमः। अस्य तु महाकाव्यस्य लक्षणं स्वरूपमुच्यते। तुशब्देनैतदाह – संघातादीनामवयवानां पृथग् लक्षणं नोच्यते। अवयविनस्तु महाकाव्यस्य लक्षणं क्रियते। ततस्तेऽपि तल्लक्षणा एव, वस्तुतस्तदव्यतिरेकादिति। किं पुनस्तदिति तदेव वक्तुमुपक्रमते– आशीरित्यादि। तस्य महाकाव्यस्य मुखमादिः आशीरिष्टाशंसनं वा प्रयुज्यते, नमस्क्रिया प्रणामो वा, प्रबन्धसम्बन्धिनः कस्यचिद् वस्तुनोऽर्थस्य निर्देशः कथनं वा क्रियत इति विकल्पेन त्रिविधं मुखं प्रतिपत्तव्यम्। न समुच्चयेन। तत्र

श्रीमद्विशुद्धगुणरत्नस[मि]द्धमूर्त्ति-
र्ब्रह्मेन्द्रशेखरितपादसरोजरेणुः ।



शौद्धोदनिः सकलसत्त्वहितैकदीक्षः
पायादपायबहुलाज्जगदाविमुक्तेः ॥

इत्येवंविधा आशीः।

नमस्त्रयाय रत्नानां त्रैलोक्य[महित]ात्मने ।
स्थिताय सुरदैत्यनरनागेन्द्रमौलिषु ॥

इत्येवंविधा नमस्क्रिया। वस्तुनिर्देशस्तु
श्रियः पतिः श्रीमति [ शिशुपालवधे १.१ ]

इत्यादिः प्रसिद्ध एव।

गद्यमिश्रबन्धयोरप्येतदेव मुखं द्रष्टव्यमिति ॥

किमाश्रयं तदित्याह—

इतिहासकथोद्भूतमितरद्वा सदाश्रयम् ।
चतुर्वर्गफलायत्तं चतुरोदात्तनायकम् ॥१५॥

इतिहासः पुरावृत्तम्, तत्प्रतिपादिका कथा रामायणादिका इतिहासकथा तत उद्भूतं जातम्, इतिहासकथाश्रयमित्यर्थः। का[व्यमि]ति वक्ष्यति। किमितिहासकथाश्रयमेव महाकाव्यं कर्तव्यम्। नेत्याह– इतरदिति। इतिहासकथाश्रयादपरं वा। नात्र नियमः, विशिष्टाश्रयमेव तु तत् कर्तव्यमिति– सदाश्रयमिति। सन् शोभनः अधिगुणराजचरितादिलक्षण आश्रयो भित्तिर्यस्य तत्तथा। अनेन महाकाव्यस्य द्विधाश्रयसम्पदुक्ता।

चतुर्विषयत्वं प्रतिपादयन्नाह– चतुर्वर्गफलायत्तम् चतुर्णां धर्मार्थकाममोक्षाणां वर्गः समूहः, स एव फलं पुरुषार्थरूपत्वात्। तत्राऽभ्युदयनिःश्रेयसहेतुर्धर्मः[1]। विद्याभूम्यादीनां यथान्यायमर्जनमर्जितानां च रक्षणमर्थः। निरपायो विषयोपभोगः कामः। [त्रैकालिक]सांसारिकदुःखनिवृत्तिर्मोक्षः। विस्तरस्तु त[त्त]च्छास्त्रेभ्यो द्रष्टव्यः। तस्मिन्नायत्तं प्रतिबद्धं तद्विषयत्वात्। अत्र न नियमोऽवश्यं चत्वारोऽपि पुरुषार्था निबध्यन्त इति। यथासंभवं क्वचिच्चतुर्वर्गः, [क्वचि]त् त्रिवर्ग इति

१. तुल॰- वं॰ सू॰ १. १. २.

प्रतिपत्तव्यम् । एतच्च स्वयमेव वक्ष्यति–

न्यूनमप्यत्र यैः कैश्चित् [१. २०]

इत्यादौ । चतुरोदात्तनायकम् । चतुरः कुशलः उत्साहशक्त्यादियोगात् । उदात्त उदारस्त्यागातिशयादिसंबन्धात् नायकः विपक्षः प्रतिपक्षश्च[1] । द्वयोरपि नायकत्वात् , यस्मिन् तत् तथा ॥

पुनः किं विशिष्टमित्याह–

नगरार्णवशैलर्तुचन्द्रार्कोदयवर्णनैः ।
उद्यानसलिलक्रीडामधुपानरतोत्सवैः ॥१६॥

चन्द्रश्चार्कश्च तयोरुदयः । नगरं च अर्णवश्च शैलश्च ऋतुश्च चन्द्रार्कोदयश्चेति चार्थं कृत्वा तेषां वर्णनानि गुणोद्भावनानि इति षष्ठीसमासः । तानि च यथासम्भवमादौ मध्येऽन्ते वा । न चानुक्रमनिय[मेन] एतानि निबध्यन्त इति एवंपरमेतत् । तैरलंकृतमिति [१. १८] वक्ष्यति । उद्यानं सलिलं च तयोः क्रीडा विहारः । सा च मधुपानकं च रतोत्सवश्चेति चार्थः । रतमेवोत्सवः प्रीतिविशेषः, तेषां तु क्रमो दृश्यते । अनेन सम्भोगात्मकः शृङ्गार उक्तः । तैरलंकृतम् ॥

पुनर्विशेषयन्नाह–

विप्रलम्भैर्विवाहैश्च कुमारोदयवर्णनैः ।
मन्त्रदूतप्रयाणाजिनायकाभ्युदयैरपि ॥१७॥

विप्रलम्भा विरहाः । अयं विप्रलम्भात्मकः शृङ्गारः । विवाहाः शास्त्रोक्ता गन्धर्वादयः । कुमाराणामुदया जन्मानि वर्धनानि च बाल्यादिवयःप्राप्तिलक्षणानि । तैश्चालंकृतम् । मन्त्रः क्रियारम्भदेशकालविभागपुरुषद्रव्यसम्यग्विनिपातक्रियाकार्यसिद्धिलक्षणपञ्चाङ्गात्मककार्यनिश्चयः । यदाह माघः–

सर्वकार्यशरीरेषु मुक्त्वाङ्गस्कन्धपञ्चकम् ।
सौगतानामिवात्मान्यो नास्ति मन्त्रो महीभृताम् ॥
[शिशुपालवधे २. २८]

---

1. प्रतिपक्षो विजिगीषुरित्यर्थः ।



इति । विस्तरस्तु तच्छास्त्रात् । दूतः वाग्मित्वादिगुणयुक्तः सन्धानप्रवृत्तः पुरुषः ।

दूते सन्धानमायत्तं चरे चर्या प्रति[ष्ठि]ता ।
[कामन्दकीयनीतिसारे १२.३३]

इति वचनात् । चरविशेषश्चायम् । प्रयाणं संग्रामादिनिमित्तं गमनम् । आजिर्विग्रहः सन्ध्यभावे । अभ्युदयं विपक्षविजयादिलक्षण उत्सवः । नायकस्य प्रतिपक्षस्य । एषामप्य[ा]नुपूर्वी दृश्यते । तैरपि ।

अलंकृतमसंक्षिप्तरसभावनिरन्तरम् ।
सर्गैरनतिविस्तीर्णैः श्रव्यवृत्तैः सुसन्धिभिः ॥१८॥

अलंकृतं विभूषितम् । असंक्षिप्ताः [बहु]भूयांसः । रसाः शृङ्गारवीरादयः । भावा रत्युत्सवादयः । विस्तरस्तु तच्छास्त्रात् । तैर्निरन्तरं व्याप्तम् । सर्गैरुपेतमिति [१. १९] वक्ष्यति । अनतिविस्तीर्णैर्नातिमहद्भिर्मध्यमैरित्यर्थः । श्रव्यं श्रुति[सु]भगं वृत्तं पद्यमिन्द्रवज्रादिकं येषां तैः । सुसन्धिभिः शोभनः स्पष्टः सन्धिः परस्परसङ्गतत्वम् अन्योऽन्यव्यपेक्षा अर्थतो येषां तैः । परस्परसंबद्धार्थाः सर्गाः कर्तव्याः । नत्वयःशलाकाकल्पा इत्यर्थः ॥

सर्वत्र भिन्नवृत्तान्तैरुपेतं लोकरञ्जनम् ।
काव्यं कल्पान्तरस्थायि जायते सदलंकृति ॥१९॥

भिन्नः प्रकृतवृत्तापेक्षया अन्यवृत्तलक्षणः सर्गाणामन्तोऽवसानं येषाम् । किं क्वचिदेव सर्गे नेत्याह–सर्वेषु सर्गेषु । सर्गाः प्रस्तुतपद्यापेक्षया वृत्तान्तरैः समापनीया इत्यर्थः । तैरेवंरूपैः सर्गैरुपेतं युक्तम् । सदलंकृति सत्यः शोभनाः सुप्रयुक्तत्वात् । नत्वलंकृतयः स्वरूपेण शोभना नाम । अलंकृतयः शब्दार्थालंकाराः यस्य यस्मिन् वा तत् तथा । सत्यो वा विद्यमाना अलंकृतयो यस्य तदेवंविधं काव्यं लोकरञ्जनं जायते । लोकं रञ्जयति गुणसंपदा परितोषयति इति लोकरञ्जनम् । ततश्च प्रतिग्राहकभूयस्त्वात् कल्पान्तरं तिष्ठन्तीति कल्पान्तरस्थायि.........[जा]यते भवति प्रवचनवत् यावज्जगत् प्रवर्तत इत्यर्थः ॥

ननु सर्वत्र महाकाव्ये चतुर्वर्गादीन्यङ्गानि यथोक्तानि न दृश्यन्ते । कानिचिदेव क्वचिद् [दृश्यन्ते] । तत्र किञ्चिदिदानीं महाकाव्यं स्यादित्याह–

न्यूनमप्यत्र यैः कैश्चिदङ्गैः काव्यं न वर्ज्यते ।
यद्युपात्तेषु सम्पत्तिराराधयति तद्विदः ॥२०॥

अत्रोक्तेष्वङ्गेषु अवयवेषु यैः कैश्चिद् यथासम्भवं तु मधुपानकुमारोदयपर्वत-वर्णनादिभिर्न्यूनं रहित[म]पि, न के[व]लं पूर्णं काव्यं, महाकाव्यं न वर्ज्यते सद्भिरुपादीयत इत्यर्थः । न दुष्यतीत्यपि पाठः । अस्तु स एव । अस्योत्सर्गस्यापवादमाह- यदीत्यादि । उपात्तेषु [गृहीते]षु सम्पत्तिर्विभूतिः शब्दार्थसाद्गुण्यलक्षणा । तद्विदः तां काव्यसम्पत्तिं ये विदन्ति तान् पुरुषान् आराधयति रञ्जयति यदि, तदा न वर्ज्यते । अर्थोपात्तान्यङ्गानि । यद् वि[गतार्थं] तद् हेयमित्यर्थाद् गम्यते ।

अत्रेदं चिन्त्यते । कथमत्र क्रमः । किं पूर्ववर्णितेन नायकेन रिपोर्जयात् नायकस्योत्कर्षः कथ्यते । अथ प्राग्वर्णि[तस्य रि]पोर्नायकेन जयात् तदुत्कर्षः ख्याप्यत इति । अत्र भामहः पूर्वकमेव क्रममिच्छति, द्वितीयं तु द्वेष्टि-

नायकं प्रागुपन्यस्य वंशवीर्यश्रुतादिभिः ।
न तस्यैव वधं कुर्यादन्योत्कर्षाभिधित्सया ॥
यदि काव्यशरीरस्य न स व्यापितयेष्यते ।
न चाभ्युदयभाक् तस्य मुधाऽऽदौ ग्रहणं स्तवे ॥
[ काव्यालङ्कारे १. २२-२३ ]

इति । दण्डी तु प्रकारद्वयमपि युक्तमिच्छन्नाह-

गुणतः प्रागुपन्यस्य नायकं तेन विद्विषाम् ।
निराकरणमित्येष मार्गः प्रकृतिसुन्दरः ॥२१॥

ना[यकं प्रति]पक्षं प्राक् प्रथममुपन्यस्याभिधाय गुणतो गुणैः शौर्यादिभिरभिलक्षितं नायकं पूर्वं वर्णयित्वेत्यर्थः । तेन पूर्ववर्णितेन नायकेन विद्विषां विपक्षाणां निराकरणमभिभ[वः पराज]यः कथ्यत इति एष मार्गः क्रमः प्रकृत्या सुन्दरः शोभनः । स्वरूपसिद्ध ऋजुरयं क्रम इति मन्यते ॥

द्वितीयं क्रममाह, यो भामहेन द्विष्टः-

वंशवीर्यश्रुतादीनि वर्णयित्वा रिपोरपि ।
तज्जयान्नायकोत्कर्षकथनं च धिनोति नः ॥२२॥



रिपो[र्नायकवि]पक्षस्यापि न केवलं प्रतिपक्षस्य वंशोऽन्वयः वीर्यं विक्रमः श्रुतं शास्त्रकौशलं आदिर्येषां त्यागसत्यक्षान्त्यादीनां तानि गुणवस्तूनि वर्णयित्वा प्रकाश्य [तस्य] वर्णितवंशादेर्विपक्षस्य जयाद् अभिभवात् कारणात् प्रतिपक्षेण, नायकस्य प्रतिपक्षस्य उत्कर्षो विशेषः तस्य कथनमभिधानं यत्, तन्न नोऽस्मान् धिनोति प्रीणयति । चकारात् पूर्वकं च । अयमपि क्रमोऽस्माकं प्रिय एवेत्यर्थः ।

अयमभिप्रायः- काव्यं हि वक्रोक्तिप्रधानम् । अयं च क्रमः वक्रोक्तिस्वभावः, यद्विपक्षवर्णनद्वारेण प्रतिपक्षोत्कर्षकथनम् । एवं नामायमुत्कृष्टः, यदेवंगुणोऽपि विपक्षो[ऽनेन] निर्जित इति । अन्यश्च वर्णितोऽन्यस्योत्कर्षः ख्याप्यत इति चतुरोऽयं [न]यः ।तस्मादयमस्मान् धिनोतीति । काव्येषु हि द्वावपि वर्ण्येते केवलं पौर्वापर्ययोर्विवादः । अत्र हि प्रतिपक्षोत्कर्षो विधेयः । स चोभयथाऽपि गम्यत एव । हयग्रीववधादौ चायं [प्र] [10a]कारो दृश्यते ऋजुनैव क्रमेण । प्रतिपक्षोत्कर्षः किं न कथ्यते वक्रोक्त्या किं न ख्याप्यते वक्रोक्तिप्रधानत्वात् काव्यस्येति चेत् । यत्किञ्चिदेतत् । [1]अशोकवनिकाचोद्यमिदम् ।

यदुच्यते काव्यशरीराव्यापकत्वात्, अनभ्युदयभागित्वाच्च विपक्षस्य प्रागुपन्यासवर्णने विफल इति । तदसत् । कथं प्रतिपक्षोत्कर्षख्यापनपरं विपक्षवर्णनं प्राक्क्रियमाणं विफलं ना[म] । एवं हि प्राक्प्रतिपक्षनायकवर्णनम्, तेन च विपक्षनायकनिराकरणमितीदमपि प्रतिपक्षोत्कर्षार्थं क्रियमाणं विफलं स्यात् । अथ प्रतिपक्षोत्कर्षकथनार्थत्वात् ननु[2] चैतत् प्रतिप[क्ष]वर्णनमपि प्रतिपक्षोत्कर्षख्यापनार्थत्वात् न मुधेति न कश्चिद् विशेषोऽन्यत्राभिनिवेशात् । तस्मात् काव्यशरीराव्यापकस्य-नभ्युदयभागिनोऽपि विपक्षस्य प्राक् ग्रह[ण]स्तवौ न मुधैव, प्रतिपक्षोत्कर्षख्यापनार्थत्वात्, प्रतिपक्षवर्णनादिवदिति द्वयमपि साधु दृश्यतामिति ॥

यत् पूर्वं काव्यशरीरं त्रिविधोद्दिष्टं पद्यं गद्यं च मिश्रं चेति [१. ११]तत्रैता[वता] पद्यं निर्दिष्टम् । गद्यमधिकृत्याह-

अपादः पदसंतानो गद्यमाख्यायिका कथा ।
इति तस्य प्रभेदौ द्वौ

न विद्यते पादः पादव्यवस्था यस्मिन्निति न पादो वा अपादः पादस्वभावो न भवती-

1. अशोकवतितेति आदर्शे 2. ननु वतत्प्रात्विप आदर्शे

त्यर्थः। एवलक्षणं गद्यम्। पद्यं तु पादस्वभावः पदसन्तान इत्यसङ्करः। कतिविधं तदित्याह– आख्यायिकेत्यादि। तस्य गद्यस्य भेदौ प्रकारौ द्वौ विज्ञेयौ। कथम्। आख्यायिकाकथेत्येवं[रू]पौ। [न] अनयोर्भेदः। भामहमतेन भेदमाह—

तयोराख्यायिका किल ॥२३॥

नायकेनैव वाच्यान्या नायकेनेतरेण वा।

स्वगुणाविष्क्रियादोषो नात्र भूतार्थशंसतः ॥२४॥

तयोराख्यायिकाकथयोरयं भेदः किलेति परमतसूचने। आख्यायिका नायकेनैव [स्वयम्] [10b] उच्यते, यस्य चरितप्रतिपादनार्थमाख्यायिका प्रवृत्ता। नान्येनेति वक्तृनियमः आख्यायिकायाम्। तदुक्तम् –

वृत्तमाख्यायते यस्यां नायकेन स्वचेष्टितम्। इति।

[ काव्यालङ्कारे १. २६ ]

अन्या कथा उक्ताया आख्यायिकाया अन्यत्वात्। नायकेन वाच्या यच्चरित-प्रकाशनाय प्रवृत्ता, इतरेण वा नायकादन्येन वा, तत्सहायादिना वाच्येति न वक्तृनियमः कथायाम्। अयं तावदनयोर्भेदः।

न[न्विय]माख्यायिका स्वयं नायकेनोच्यते न कथा। एवं हि स्वगुणोद्भावन-प्रसङ्गः। तच्चानुचितमभिजातस्य। तदुक्तम् –

स्वगुणाविष्कृतिं कुर्यादभिजातः कथं जनः। इति।

[काव्यालङ्कारे १.२६]

अत्राह– स्वगुणाविष्क्रियेत्यादि। अयं तावददोषः। यतः स्वस्यात्मनः स्वेषां वा गुणानां वंशस्य वीर्यादीनामाविष्क्रिया प्रस्ताववशात् कथनं न दोषः न दुष्यति। कस्य—भूतं यथावृत्तमर्थं स्वच[ारित्र्य]लक्षणं शंसतो ब्रुवतो नायकस्य। अत्राख्या-यिकायां कथायां वा। तेन हि यथावृत्तं स्वचरितमभिधेयं दोषरूपं गुणरूपमन्यद्वा, न विपरीतम्। तत् [अ]विपरीतं यथावृत्तमात्मनः कथयतः प्रस्तावववशप्राप्तं स्वगुणकथनं कथमाभिजात्यं हापयेत्। प्रत्युत विपरीताभिधाने आभिजात्यं हीयेत। आत्म-व[श्चन]रूपं तु स्वगुणाविष्करणमनुचितमाभिजात्ये।



ननु नात्र दोष इत्येतावदुक्तम्। गुणस्तु न कश्चित्। अयमेव गुणो यो दोषा-भावः। तल्लक्षणत्वात्तस्य सर्वत्रेति यत्किञ्चिदेतत्। अ[नेन] चैतन्निरस्तं भङ्ग्या यदुक्तं भामहेन, आख्यायिकायां सुखदुःखरूपं स्वचरितं यथावृत्तमाख्यायते नायकेन न तु गुणरूपमिति। वृत्तमाख्यायते यस्यां नायकेन स्वचेष्ट[11a]नादिति।

ननु सामान्यवचनमेतत्। न त्वयं विशेषो दृश्यते दुःखरूपं स्वचरितं वाच्यं न गुणरूपमिति। अर्थादेतदुक्तं तेन। यत्पश्चात् वक्ष्यति-

स्वगुणाविष्कृतिं कुर्यादभिजातः

[ काव्यालङ्कारे १. २६ ]

इति। अन्यथा पूर्वापरविरोधस्तत्र स्यात्॥

किं तर्हि न युक्तमिति स्वमतमाह–

अपि त्वनियमो दृष्टस्तत्राप्यन्यैरुदीरणात्।

अन्यो वक्ता स्वयं वेति कीदृग् वा भेदकारणम् ॥२५॥

किं त्विदमत्र ब्रूमः। यः परेण नियमः कृतः आख्यायिका नायकेनैव वाच्येति, स नास्ति। यतस्तत्राख्यायिकायामपि न केवलं कथायाम्, अनियमः नायकेनैव वाच्ये-त्यस्य नियमस्याभावो दृष्टः उपलब्धः कृतः। अन्यैरुदीरणात् नायकादन्यैरपि तदनु-चरादिभिराख्यायिकाया उदीरणात् वचनात्। हर्षचरितादिकायामाख्यायिकाया-मन्यैरपि नायकचरितकथनदर्शनादिति मन्यते। सर्वथा कविरिह वक्ता, तन्मुखेन नायको वा, स्वातन्त्र्यमत्र कवेः। ननु भामहेन कथायाः परोदीरणमिष्टं, यदाह—

अन्यैः स्वचरितं तस्य नायकेन तु नोदितम्।

[ काव्यालङ्कारे १. २६ ]

इति। तत्र किमुच्यते कथा नायकेनेतरेण वा वाच्येति। अनुक्तोपालम्भोऽयम्। एतदेव सिद्धं कथायामप्यनियमदर्शनात् उक्तेन न्यायेनोभयथाप्यदोषात्। भवतु वायं नियमः आख्यायिका नायकेनोच्यते कथा त्वन्येनेति। तथापि नैतावता आख्यायिकाकथयोर्भिन्नजातीयत्वमिति परमतमभ्युपगम्यापि तयोरभेदमन्यतः कथ-यन्नाह– अन्यो वक्तेत्यादि। कथायामन्यो वक्ता, आख्यायिकायां स्वयमिति कीदृक् किं नामेदं तयोर्भेदस्य वि[11b]जातीयत्वस्य कारणं निमित्तम्। नैवेदं जातिभेदस्य

कारणमित्यर्थः। अन्यथैवंविधस्य भेदस्य सर्वत्र सुलभत्वात् तावता विजातीयत्वेऽति-प्रसङ्गः स्यादिति भावः। वाच्यं हि द्वयमप्येतत्। तत् केनाप्युच्यतां स्वयं परेण [वा] यथायोगम्। किमेतावता जातेर्भेदः स्यात्। अर्थतस्त्वेकैव जातिरियं नाममात्रात्तु भिद्यते। यद्वक्ष्यति– एका जातिः संज्ञाद्वयाङ्किता [१. २८]। एवं तर्हीदमनयोर्भेद-कारणम्, यत्र वक्त्रापरवक्त्रयोः पद्ययोर्भविष्यदर्थसूचकयोः प्रवेशः साश्वासा च या सा आख्यायिका। तद्विपरीता कथेति। तदुक्तम्—

वक्त्रं चापरवक्त्रं च कालभाव्यर्थशंसि च।

[काव्यालङ्कारे १. २६]

इति। तथा–

साश्वासाख्यायिका मता।

[काव्यालङ्कारे १. २५]

न वक्त्रापरवक्त्राभ्यां युक्ता नाश्वासवत्यपि।
संस्कृतासंस्कृता चेष्टा कथाऽपभ्रंशता तथा॥ इति॥

[काव्यालङ्कारे १. २८]

तदेवं तदुद्भाव्य परिहरन्नाह–

**वक्त्रं चापरवक्त्रं च साश्वासत्वं च भेदकम्।**
**चिह्नमाख्यायिकायाश्चेत् प्रसङ्गेन कथास्वपि ।.२६॥**

**आर्यादिवत् प्रवेशः किं न वक्त्रापरवक्त्रयोः।**
**भेदश्च दृष्टो लम्भादिराश्वासो वास्तु किं ततः ।.२७॥**

वक्त्रं चापरवक्त्रं च पद्यद्वयं सहाश्वासेन वर्त्तते तद्भावः तत्त्वम्। तच्चैतत् त्रयम् आख्यायिकायाश्चिह्नं लक्षणं भेदकं कथायाः सकाशाद्विशेषकं चाप्यस्यास्य कथा-यामभावादितिचेन्मन्यसे, ननु यतः [प्रसङ्गेन] तत्र गद्याधिकारात् प्रस्तावेन भाव्यर्थ-सूचनादिलक्षणेन हेतुभूतेन नाधिकारितया वक्त्रापरवक्त्रयोः कथास्वपि आख्या-यिकावत् किं कस्मान्न प्रवेशः न प्रयोगः स्यादेवेत्यर्थः। किंवत्? आर्यादिवत्।



आर्यादेरिव यथाप्रस्तावमन्यस्यापि पद्यस्य न स्तवादेः प्रवेशादिग्रहणम्, त्रयाणामपि पद्यत्वेनाविशेषादयमपि नियमो नास्तीत्यर्थः। तथाहि यदि तादृशः प्रस्तावः स्यात्, तदा कथास्वपि अनयोः प्रभेदो न दुष्यति, यथा आ[12a]र्यादेः। आख्यायिकायामपि हि प्रसङ्गेन तयोः प्रवेशः नाधिकारितया, [तत्र] गद्याधिकारात् तथा कथायामपि इति नेदं भेदकमसाधारणं चि[न्तनीयम्। लम्भ]स्तर्हि भेदकं चिह्नमस्तु कथायां तस्याभावात्। अत्राह– भेदश्चेत्यादि। लम्भादिर्भेदो विशेषः। आदिग्रहणात् यव[?]विश्रामादिव्यवहारः आख्यायिकाविषयः [कथायाम]पि दृष्टः। ततश्चाश्वासोऽपि यदि भवेत् को नामात्र दोषः। लम्भादिर्वा भेदो भवतु, आश्वासो वा व्यवहारः, किं ततः तस्माद् व्यवहारमात्रात्, किंजातीयत्वमनयोर्भवेत्। नैवा-र्थभेदः, अभेदादित्यर्थः। परिच्छेदा हि तत्र सम्पन्नाः कर्तव्या इतीदमत्र तात्प-र्यम्, विपन्नानां हेयत्वात्। ते च लम्भादिव्यपदेश्या वा भवन्तु, आश्वासव्यव-हार्या वेति स्वातन्त्र्यमत्र कवेः, विशेषाभावात्।

ननु भामहकृतो निषेधोऽस्ति।

न वक्त्रापरवक्त्राभ्यां युक्तो नाश्वासवत्यपि।

[काव्यालङ्कारे १. २८]

कथेति।

ननु दण्डिकृतो विधिरस्ति, लम्भादिर्वाश्वासो वा भवत्विति। तदप्रमाण-मिति चेत्। भामहकृतो निषेधः प्रमाणमिति कोशपानमत्र करणीयं स्यात्। द्वयो-रपि शास्त्रकारत्वात् प्रामाण्यम्, न वा कस्यापि। मतभेदस्तत्र भवत्विति चेत्? अस्तु तत्किमस्थानाभिनिवेशः क्रियते। युक्तिपुरस्कृतं तु दण्डिमतं दृश्यत इति॥

**तत्कथाख्यायिकेत्येका जातिः संज्ञाद्वयाङ्किता।**
**अत्रैवान्तर्भविष्यन्ति शेषाश्चाख्यानजातयः ॥२८॥**

यत एवं निरूप्यमाणो नानयोः कश्चिज्जातिभेदो लभ्यते अन्यत्र संज्ञाभेदात्, ततस्तावदेका जातिरियं गद्यजातिः। आख्यायिकेयं कथेयमिति अनेन संज्ञाद्वयेन द्वाभ्यां नामभ्याम[12b]ङ्किता लक्षिता व्यवहरणीया। न च नामभेदमात्रकेन जातिभेद एव सर्वथा स्यात्। ब्राह्मणक्षत्रियादिभेदेऽपि मनुष्यत्वात्तेषाम्। क्रियाभेदोऽत्र

संज्ञाभेदनिमित्तमिति चेत—किं वै सर्वा नैमित्तिकी संज्ञा, यादृच्छिक्यपि हि सा दृश्यते, मण्डपादिवत्। निमित्तं वा किंचिन्मृग्यतां यदि तेन विना दौःस्थ्यम्। नन्वपरेऽपि गद्यप्रभेदा दृश्यन्ते, किं ते नोक्ता इति चेदाह- अत्रैवेत्यादि। शेषाः आख्यानपर्याया ये सम्भवन्ति आख्यानजातयः, आख्यानकप्रभेदाः ता अत्रैवानयोरेव कथाख्यायिकयोरन्तर्भविष्यन्ति गद्यजातित्वेनाभेदात् लक्षणतः। चकारः [अन्]उक्तसमुच्चये। तस्मात् पृथक् तासां लक्षणं नोक्तम्। तल्लक्षणेनैव कृतलक्षणत्वादित्यर्थ इति॥

अयं तर्हि विशेष आख्यायिकायाः। सा हि–

कन्याहरणसंग्रामविप्रलम्भोदयान्विता।

[ काव्यालङ्कारे १. २७ ]

आख्यायिका न कथेति भामहः। तत्राह—

कन्याहरणसंग्रामविप्रलम्भोदयादयः।
सर्गबन्धसमा एव न ते वैशेषिका गुणाः॥२९॥

कन्याया हरणं संग्रामस्तन्निमित्तोऽन्यो वा, विप्रलम्भो वियोगः, उदयोऽभ्युदयः रिपुविजयादिलक्षणः। आदिशब्देन मत्ततासुरतोत्सवादिपरिग्रहः। ननु भामहेन तावदुक्तम्—

कन्याहरणसंग्रामविप्रलम्भोदयान्विता। इति।

[ काव्यालङ्कारे १. २७ ]

तत्किमपि सूच्यते। एवं मन्यते। सोऽपि नियमो न[ापो]ह्यते, अधिकदर्शनात्। उपलक्षणं वा तद्वचनं, तेऽपि गुणाः [अ]थ न वैशेषिकाः, कथायाः सकाशादाख्यायिकां न भेदयन्तीत्यर्थः। विशेषा [भे]दाः [यैः] कथ्यन्ते आख्यायिकायाः, प्रयोजनमेषामिति वैशेषिकास्तथा न भवन्तीत्यर्थः। किं कारणम्। यतः सर्गबन्धेऽपि समानाः। सा[धारणाः, तेषां त]त्रापि दर्शनात्। तद् यदि [कथा] (13a)यामपि यथाप्रस्तावं भवन्ति को निषेद्धा। भामह इति चेत्। उक्तमत्र, किं चर्वितचर्वणेन। दृश्यन्ते च कथायां लीलावतीत्यादिकायामपि तेऽर्थास्तत्कथं भित्स्यते आख्यायिकां कथात इति॥



यत्र तर्हि कवेरभिप्रायेण कथनमङ्कनं किञ्चिद् दृश्यते सा आख्यायिका तदन्या कथेति भामहः।

कवेरभिप्रायकृतैरङ्कनैः कैश्चिदङ्किता इति।

[ काव्यालङ्कारे १. २७ ]

तदेतदुभयं परिहरन्नाह–

कविभावकृतं चिह्नमन्यत्रापि न दुष्यति।
मुखमिष्टार्थसंसिद्धौ किं हि न स्यात् कृतात्मनाम्॥३०॥

कवेः प्रयोक्तुर्भावेनाभिप्रायेण कृतं प्रयुक्तं चिह्नमङ्कनम् अन्यत्रापि कथायामपि सर्गबन्धेऽपि वा, न केवलमाख्यायिकायाम् न दुष्यति न दोषाय कल्पते निषेधाभावात्।

ननु निषिद्धमेव [तद्] भामहेन कथायाम्, आख्यायिकामेव कविभावकृतचिह्नविधानात्। उक्तमत्र। तेनापि च नियमो न कृतः काचिदङ्कितेति वचनात्। तस्मादिदमपि सर्गबन्धादिसाधारणं न समर्थयति कथात आख्यायिकाया भेदम्। किरातादौ च लक्ष्म्या ग्रहणादिकं कविभावकृतं चिह्नं दृश्यते, स्यादेतत् आख्यायिकायामिति। तदसत्। यस्मान्मुखमिष्टार्थसंसिद्धौ किं हि न स्यात् कृतात्मनाम्। कृतः संस्कृतः व्युत्पन्न आत्मा चित्तं येषां, कृतात्मनां सुधियाम्। इष्टस्यार्थस्य स्वनामाङ्कनादेरन्येनापदेशेन विदग्धेन क्रमेण किं नाम मुखमुपायो न स्यात्। सर्वमेव हि तेषामिष्टसिद्धिद्वारीभवति कौशलविशेषात्। तस्माद् यदीच्छन्ति कथायामन्यत्र वा सर्वत्रेदृशं कर्तुमुपायज्ञास्ते [कु]र्वन्त्येव, न चेत् न कश्चिद्रीति। नेदमपि भेदकं चिह्नम्। तस्मा[13b]देतदेव स्थितम्–

तत्कथाख्यायिकेत्येका जातिः संज्ञाद्वयाङ्किता इति।

[ १. २८ ]

स्यादेतत्, आख्यायिका संस्कृतेनैव दृश्यते। आख्यायिकापि भाषान्तरेण दृश्यते, असंस्कृतापेक्षयेति। किं न कथा। अथ संस्कृतापेक्षया भाषान्तरेण [न] दृश्यते आख्यायिका सर्वसंस्कृता कथाप्येवमिति माभूत् कथा। अथ मिश्रापि कथा दृश्यते नाख्यायिका। तथा अमिश्रा सर्वसंस्कृता साख्यायिका स्यात्, कादम्बर्यादिवत्।

कथं तर्हि आख्यायिकेति व्यपदिश्यते इति चेत्। अत एवं संज्ञाद्वयाङ्किता एका जातिरित्युक्तम्। जातिभेदोऽत्र निषिध्यते, न संज्ञाभेदः। एवं कथाविशेषः आख्यायिका स्यात्, न जातिभेदः। यथा कथाविशेषाणां संज्ञाभेदा यथेष्टम्। न च भाषाभेदमात्राद्विजातीयत्वम्। कथानामपि परस्परविजातीयत्वप्रसङ्गात् एतावन्तः स्यात्। काचित् कथा संस्कृतमयी। काचित् प्राकृतमयी। काचित् अपभ्रंशस्वभावा। काचित् भूतभाषामयी। काचित् मिश्रेति। यथा वाचां भाषाभेदेऽपि न कथात्वं हीयते गद्यमयत्वात्, प्रसङ्गे तु पद्यप्रवेशः, तथा संस्कृतमय्या आख्यायिकायाः कथात्वं न विरुद्ध्यते। अत एवोक्तम्। एका जातिः कथाजातिरेव यथेष्टं संज्ञा अनुभवति, यथा मनुष्यजातिरेका क्षत्रियजातिसंज्ञाम्। भाषान्तरमयोनामपि कथानां गद्येनार्थोपक्षेपः लम्भादिपरिच्छेदादौ न दूष्यते निषेधाभावात्। भामहेन निषिद्धमिति चेत्। दण्डिना विहितमिति किं न प्रत्येषि। तस्मात् काचित् कथा [आश्वासादौ] गद्याक्षिप्तार्था, काचिन्न। [न]ह्येतावता आख्यायिका कथात्वं नानुभवति। कथा वाऽऽख्यायिका[14a]संज्ञामित्येकैव जातिः संज्ञाद्वयाङ्कितेति सूक्तमेव ॥

तदेवं लक्षणतः [प्रचि]न्वन् कथां, आश्वासादिभेदं च गद्यं निर्दिश्य, तृतीयं मिश्रकाव्ये शरीरमधिकृत्याह–

मिश्राणि नाटकादीनि तेषामन्यत्र विस्तरः।
गद्यपद्यमयो कापि चम्पूरित्यभिधीयते ॥३१॥

नाटकमादिर्येषाम् प्रकरणादीनां तानि नाटकादीनि काव्यानीत्यत्र मिश्राणि गद्यपद्यमयानि वेदितव्यानि इति मिश्रविधिः। ननु कथादिकमपि मिश्रं तत्रापि पद्यप्रवेशात्। प्रसङ्गेन तत्र पद्यप्रवेशः, नाधिकारितया। अतएवोक्तं प्रसङ्गेन कथास्वपीति [१.२६]। नाटकादिपूभयमपि अधिकृतमिति नाटकान्येव मिश्राणि। किमेषां लक्षणं लक्षणप्रभेदो वेत्यत आह– तेषामित्यादि। तेषां नाटकादीनां मिश्राणां मिश्रप्रबन्धानामन्यत्र भरतकोहलादौ नाट्यशास्त्रे विस्तरः नान्दीप्ररोचनादिस्वरूपनिरूपणादिरूपः प्रपञ्चोऽधिकृतो नेह। ततस्ततोऽसौ द्रष्टव्यः। गद्यपद्यप्रबन्धस्त्विह विस्तरतोऽधिकृतः। स चोक्तः। किं नाटकादिकमेव मिश्रं नेत्याह– गद्यपद्येत्यादि। गद्यपद्ययोर्विकारः गद्यपद्यमयी मिश्रा चम्पूरित्यपेक्ष्य स्त्रीत्वम्। यदाह चम्पूरिति। चम्पूर्नाम विद्यते। कापि काचिदित्यसाकल्य[म्]। अपिशब्दो न केवलं पूर्वकमिति समुच्चिनोति। अयमपि



मिश्रप्रकारोऽस्ति। यद्भट्टचम्पूरिति यावत्। सा च जातकमालादमयन्त्यादि ॥

तदेवं शरीरभेदकृतं त्रैविध्यं काव्यानां परिसमाप्य भाषाभेदकृतं चातुर्विध्यं दर्शयन्नाह–

तदिदं वाङ्मयं भूयः संस्कृतं प्राकृतं तथा।
अपभ्रंशश्च मिश्रं चेत्याहुराप्ताश्चतुर्विधम् ॥३२॥

यत् काव्यशरीरं त्रिविधमुक्तं तदिदं वाङ्मयं काव्यशरीरं भूयः पुनश्चत्वारो विधाः प्रकारा भाषामया यस्य [14b] तत् प्रत्येकं चतुर्विधमाहुरामनन्ति। आप्ता आचार्याः। कथं– पद्यं काव्यशरीरं संस्कृतं शुद्धम्, प्राकृतं शुद्धम्, अपभ्रंशः शुद्धः, मिश्रं च तैः पैशाचिकेन चाशुद्ध्यधिका तु पृथगुक्ता। [यथा] पश्चाद्वक्ष्यति, भूतभाषामयीमित्यादिना। एवं गद्यं मिश्रं च काव्यशरीरं योज्यम्। पूर्वं गद्यपद्याभ्यां मिश्रमुक्तमिदानीं संस्कृतप्राकृतापभ्रंशैः प्रत्येकं त्रिविधं शरीरं मिश्रमुक्तमिति मिश्रयोर्भेद इति ॥

संस्कृतादीनां स्वरूपं प्रतिपादयन्नाह,

संस्कृतं नाम दैवी वागन्वाख्याता महर्षिभिः।
तद्भवं तत्समं देशीत्यनेकः प्राकृतक्रमः ॥३३॥

देवानामियं दैवी वाक् भाषा संस्कृतमिति विज्ञायते। यद्येवं कथमिह संस्कृतं ज्ञातमिति चेदाह– अन्वाख्याता महर्षिभिरिति महद्भिरुदात्तैर्गुणमाहात्म्यात् ऋषिभिर्मुनिभिर्देशभाषावद्भिरन्वाख्याता अनुशिष्टा सतीह संस्कृतमिति ज्ञातेत्यर्थः। ततश्चैकप्रकारं संस्कृतं, प्राकृतं त्वनेकप्रकारम्। यदाह, तद्भवमित्यादि। प्राकृतस्य क्रमः प्रकारः अनेको भिन्नः। कथं तद्भवं तस्मात् संस्कृतात् वर्णान्यत्वेन उत्पत्तिर्यस्य तत्तद्भवं शब्दभवमित्यर्थः। तच्च महिन्दसिन्धववहिरादिकं यथोक्तं हरिवृद्धेन। तत्समम् तेन संस्कृतेन समं तत्समम्, प्राकृतशब्दमपीत्यर्थः। तच्च हरिहरकमलादिकं यथोक्तं तत्रैव। देशी प्राकृतं महाराष्ट्रप्रसिद्धम्। तदुक्तम्—मरहट्ठादेससंकेतएहि सद्देहि भण्णए देसी इति। तच्च बोक्कणकं केल्लिचिरिहिरहेरसिच्छादिकम्। यथोक्तं तत्रैव। इत्येवमनेन रूपेणानेकः प्राकृतक्रम इति ॥

किमत्रोत्कृष्टं प्राकृतमित्याह–

महाराष्ट्राश्रयां भाषां प्रकृष्टं प्राकृतं विदुः ।
सागरः सूक्तरत्नानां सेतुबन्धादि यन्मयम् ॥३४॥

महाराष्ट्राः कुन्तलामुरलासकविदर्भमहिषावरत्रैश्यादिप्रभेदाः (?) आश्रयः अधिष्ठानं यस्यास्तां महा[15a]राष्ट्राश्रयां भाषां वाचं प्रकृष्टं प्राकृतेषु शोभनतमं प्राकृतं विदुः उपदिशन्ति बहुज्ञाः । तदुक्तम्–

ऊहइ अ विविह भासा परिरि (?) हिअअं य मोत्तूणं ।
मरहअठिअया अ अत्थि गहिअं कइल्लेहि ॥ [ ? ]

इति । कुत्रैतद् दृश्यते इति चेदाह– सागर इत्यादि । सेतुबन्धः प्रवरसेनरचितः । स्कन्धकमयः आदिर्यस्य मथनादेस्तत्सेतुबन्धादि काव्यम् यन्मयं यस्य प्राकृतस्य विकारः, तत्प्राकृतं प्रकृष्टमिति प्रकृतम् । तत्काव्यं सदिति प्रशंसयन्नाह– सागरः सूक्तरत्नानामिति । सूक्तानि शब्दार्थोत्कर्षयोगात् । तान्येव प्रीतिकरत्वादिसाधर्म्येण रत्नानि, तेषां सागर आस्पदम् । रत्नानां हि सागर आश्रयः, सूक्तानां च रत्नकल्पानां तत्काव्यमाश्रय इति सागर उक्त इति । ननु प्राकृतान्तरमयमपि सेतुबन्धादि, तत् किमुच्यते महाराष्ट्रप्राकृतमयमिति । न चात्र पठ्यते महाराष्ट्रप्राकृतमयमेवेति । प्राधान्यात्तत् तन्मयमुक्तम् । यथा हयमयमनीकमिति ततेन्नश्यत(?) इत्येवंपरमेतत् ॥

ननु सामान्यभाषापि प्राकृतप्रकारोस्ति । यदुक्तं हरिवृद्धेन–
अण्णेहि अ एएहि अ सरिसं च अ होइ सामण्णे इति ।

अन्योऽस्तीत्याह—

सौरसेनी च गौडी च लाटी चान्या च तादृशी ।
याति प्राकृतमित्येव व्यवहारेषु सन्निधिम् ॥३५॥

सूरसेनाश्रया सौरसेनी, गौडाश्रया गौडी, [1]लाटाधिष्ठाना लाटी । अन्या च पाञ्चालीमागधीत्यादिका तादृशी तथाविधा एवंप्रकारा सामान्यभाषा प्राकृतमित्यनेनैव नाम्ना नापभ्रंश इत्यनेन सन्निधिं प्रयोगं याति । कुत्र, व्यवहारेषु नाटकादिषु । व्यवह्रियते [शि]क्षणं व्यवहारः [तत्र] पवर्तते एभिरिति सा च मुसुमुरिअ मूअच्छि[15b]अच्छिक्केत्यादिका यथोक्तं हरिवृद्धेन । एवं कृत्वा चतस्रः प्राकृ[त]मय्यो भाषा दर्शिताः भवन्ति । तदुक्तम्–

1. लात इत्यादर्शे ।



सद्भवा सद्समा देसीत्ति अ तिण्णिया अ अण्णेहि ।
सामण्णया अइ सहि आया अअय इतराणि आउ ॥ इति ।
[ ? ]

विस्तरस्तु तच्छास्त्रात् ॥

अपभ्रंशः कतम इत्याह—

आभीरादिगिरः काव्येष्वपभ्रंश इति स्मृताः ।
शास्त्रे तु संस्कृतादन्यदपभ्रंशतयोदितम् ॥३६॥

Ratnaśrī has śāstreṣu — cites in the explanation on vs. 1.3 ! (p. 2)

आभीरा वाहिकाः । आदिशब्देन ढक्कादिपरिग्रहः । तेषां गिरो भाषा अपभ्रंश इति, अपभ्रंशनाम्ना व्यपदिश्यन्त इति स्थितिर्व्यवस्था । कुत्रेत्याह- काव्येषु गद्यपद्यमिश्रात्मकेषु कविप्रयोगेषु । अपभ्रंशोऽपि प्राकृतवच्चतुर्धा स्मर्यते । यदुक्तम्—

शब्दभवं शब्दसमं देशीयं सर्वशब्दसामान्यम् ।
प्राकृतवदपभ्रंशं जानीहि चतुर्विधमाहितम् ॥ इति

त्रिधाप्याम्नायते । यथोक्तम् – अपरं त्रिप्रकारत्वं शास्त्रस्थित्या प्राकृतमपभ्रंशः पैशाचिकं चेति ॥

संस्कृतं वाङ्मयं कतमदिति सर्वं दर्शयन्नाह—

संस्कृतं सर्गबन्धादि प्राकृतं स्कन्धकादि यत् ।
ओसरादिरपभ्रंशो नाटकादि तु मिश्रकम् ॥३७॥

यत् सर्गबन्धादि तत्सर्वं संस्कृतं वाङ्मयं वेदितव्यम् । आदिशब्देन पृथक् संघातादिपरिग्रहः । यत् स्कन्धकादिवाङ्मयं तत्सर्वं प्राकृतं वेदितव्यम् । अत्रापि आदिशब्देन गाथ्याद्युपादानं सेतुबन्धादिवद् द्रष्टव्यम् । [1]ओसरादीनि काव्यानि यानि तानि सर्वा[ण्य]पभ्रंशो विज्ञायताम् । तानि वलयकरम्बकादीनि । आदिशब्देन रासकादिपरिग्रहः । नाटकादि तु यत्तत् मिश्रकं संस्कृतादिभिर्वेदितव्यम् । आदिशब्देन भाणकादिपरिग्रहः ॥

कथादिकं कथमित्याह—

1 हेसरादीति आदर्शे

कथादिः सर्वभाषाभिः संस्कृतेन च पठ्यते ।
भूतभाषामयीं त्वाहुरद्भुतार्थां बृहत्कथाम् ॥३८॥

कथा आदिर्यस्याख्यानकादेः स कथादिः प्रबन्धः । सर्वाभिर्भाषाभिः संस्कृतप्राकृतापभ्रंशपैशाचिका[दि]भिः । समुच्चयविकल्पाभ्यां यथासम्भवं [16a]पठ्यते विरच्यते । संस्कृतेन चेति गतार्थमपि पृथगुक्तम् । प्राधान्यख्यापनार्थं न तु केवलार्थम्, प्राकृतादेरत्रातिपृथगभिधानप्रसङ्गात् । यथा संस्कृतप्राकृतापभ्रंशाख्यं भाषात्रयं शुद्धमपि प्रयुक्तं दृश्यते, न तथा पैशाचिकम् । भाषानुगतमेव तु दृश्यते चेदाह । भूतभाषामयीत्यादि । भूतभाषा पैशाचिकवाक् तद्विकारस्तन्मयीं शुद्धपैशाचिकार् । तुशब्दोऽर्थान्तरविवक्षायाम् । बृहत्कथामाहुः कथयन्ति तद्विदः । केवलपैशाचिकी बृहत्कथा दृश्यते इत्यर्थः । किंविशिष्टामित्याह– अद्भुतार्थामिति । अद्भुतः प्रकृष्टो नानाविधः अपूर्वः अर्थोऽभिधेयं यस्यां तामाहुरिति प्रकृतं प्रधानकथनं चैतत् । अत एवाद्भुतार्थामिति । न त्वयमेव, अन्यस्या अपि भूतभाषामय्या रत्नप्रभादिकाया दर्शनात् ॥

यदेतत्त्रिविधं काव्यशरीरं भाषाभेदाच्चतुर्विधमुक्तम्, तदेव द्विधाविनियोगभेदाद् दर्शयन्नाह–

लास्यच्छलिनशम्यादि प्रेक्षार्थमितरत्पुनः ।
श्रव्यमेवेति सैषापि द्वयी गतिरुदाहृता ॥३९॥

लास्यं शृङ्गारप्रधानं नृत्तम् । तदुक्तम् —

ताण्डवमशक्नुवत्या नर्त्तितमाविद्धकरणसंकीर्णम् ।
प्रियकारिणा प्रियाया हरेण लास्यं पुरा सृष्टम् ॥ इति ।

छलिनं [छद्म]प्रधानं नृत्तम् । लस्या तालविशेषप्राधान्यम् । सा च दक्षिणपाणिपातलक्षणा । यथोक्तम् –

सव्यहस्तनिपातश्च [ल]स्या तालस्तु वामकः ।
करयोरुभयोः पातः सन्निपात इति स्मृतः ॥

तत्प्रतिपादकं काव्यं लास्याद्युक्तं तादर्थ्यात् । आदिशब्देन च स्कन्धकादि-



परिग्रहः । तदेतत् प्रेक्षार्थम् । प्रेक्षा प्रेक्षणं चक्षुषा ग्रहणम् । तस्यै इदं प्रेक्षार्थं प्रयोजनं तदालम्ब्य प्रवृत्तिर्यस्य तत् प्रेक्षार्थम् । प्रेक्षा तदर्थस्याभिनयप्रधानत्वात् प्रेक्षणे विनियुज्यते, तत्श्रव[16b]णं तु सदपि न विवक्षितम् । तस्माल्लास्यादेरितरत् अन्यत् सर्गबन्धादि श्रव्यमेव श्रवण एव विनियुज्यते, अनभिनेयार्थत्वात्, न प्रेक्षणे इति । सैषा एवं रूपा द्वयी द्विविधा गतिर्व्यवस्था विनियोगकृता उदाहृता कथिता । तस्य त्रिविधस्य काव्यस्य न केवलं चतुर्विधेत्यपि शब्दः । यदुक्तम्–

तैः शरीरं च काव्यानामलङ्काराश्च दर्शिताः
[१. १०]

इति । तत्रेयता शरीरमलङ्काराधिष्ठानं निर्दिष्टम् ॥

इदानीमलङ्कारं तस्य निर्दिदिक्षुः प्रस्थानं रचयन्नाह–

अस्त्यनेको गिरां मार्गः सूक्ष्मभेदः परस्परम् ।
तत्र वैदर्भगौडीयौ वर्ण्येते प्रस्फुटान्तरौ ॥४०॥

गिरां काव्यानां मार्गो रचनाप्रकारः, अनेको भिन्नो विजातीयः उदीच्यादिदिग्देशभेदेन अस्ति प्रवर्त्तते । किमेकान्तविसदृशोऽसौ, नेत्याह–सूक्ष्मभेदः परस्परमिति । परस्परमन्योन्यम् सूक्ष्मः स्वल्पः भेदोऽन्तरं यस्य स तथा । विजातीयत्वेऽपि सदृशोऽस्ति मार्गः, गोगवयादिवदित्युत्सर्गः । तस्यापवादमाह– तत्रेत्यादि । तत्र तस्मिन्ननेकस्मिन् मार्गे वैदर्भगौडीयौ प्रस्फुटान्तरौ । विदर्भा दाक्षिणात्याः, एकदेशेन समुदायोपलक्षणत्वात् । तेषामयं वैदर्भः । गौडाः पौरस्त्याः तेषामयं गौडीयः । तौ मार्गौ प्रस्फुटौ । महदन्तरं भेदोऽनयोरिति प्रस्फुटान्तरौ । विजातीयत्वेऽपि शेषो मार्गो वैदर्भेण सदृशः, गवेव गवयः । गौडीयस्तु विसदृशः । गवेव करभः । व्यक्तिभेदस्त्वेकैकस्यामप्यनन्तः प्रतिकविस्थितः स इह न विवक्षितः । तद् वक्ष्यति–

तद्भेदास्तु न शक्यन्ते वक्तुं प्रतिकविस्थिताः । इति ।
[१. १०१]

यदि नामैवं ततः किमित्याह– ततश्च तावेव वर्ण्येते विभज्येते । प्रस्फुटान्तरयोः सुविभजत्वात् । शेषस्तु वैदर्भप्रायत्वात् पृथग् नोच्यते ।

[17a] एवं च कृत्वा यदुक्तं भामहेन—

वैदर्भमन्यदस्तीति मन्यन्ते सुधियोऽपरे ।
तदेव च किल ज्यायः सदर्थमपि नापरम् ॥
गौडीयमिदमेतत्तु वैदर्भमिति किं पृथक् ।
गतानुगतिकन्यायान्नानाख्येयममेधसाम् ॥

[ काव्यालङ्कारे १. ३१-३२ ]

इति, तद् भङ्ग्या निरस्तम् । तथाहि- कश्चित्काव्यरचनाप्रकारः शब्दालंकारलक्षणो दाक्षिणात्यानां निजो वैदर्भमार्ग इति व्यवह्रियते, यथा यानविशेषो दक्षिणमार्ग इति । तद्विपरीतस्तु पौरस्त्यानां काव्यरचनाप्रकारो गौडीय इति व्यपदिश्यते । यथा दक्षिणमार्गविलक्षणो यानप्रकार उत्तरमार्ग इति । ततश्च वास्तवीयं नानाता कथममेधसाम् । या हि भ्रान्तिकृता सा भवेदमेधसां विपरीतदृशाम्, यथैकस्मिन्न[पि] चन्द्रमसि । इयं तु सुमेधसामपि, विपरीतदृशामेव, वस्तुभेदकृतत्वात् सूय[ा]चन्द्रमसोरिव । तस्मात् स्वभावत एव विलक्षणावेतौ मार्गौ । यद्वक्ष्यति-

इति मार्गद्वयं भिन्नं तत्स्वरूपनिरूपणात् । इति ।

[ १. १०१ ]

अथ मतं कथं तर्हि पौरस्त्येषु वैदर्भो दृश्यते पक्षसाधारणो यथा दाक्षिणात्यानामेव । दाक्षिणात्येषु वा गौडीय इति । तदिदमेतावता तेषामसौ निजः स्यात् । तेष्वसौ दृश्यमानोऽपि न निजः दक्षिणमार्गवत्, यथा दाक्षिणात्यानाम् । नहि चन्दनं देशान्तरे दृश्यत इति तज्जमेव स्यात् । देशान्तरदृष्टमपि हि मलयजमेव तत् । तथा वैदर्भः पौरस्त्येषु कथञ्चित् दृश्यमानोऽपि वैदर्भ एव, यो दाक्षिणात्यानां सहजः । गौडीयोऽपि दाक्षिणात्येषु कथञ्चिद् दृश्यते तथापि पौरस्त्यानामेवासौ निजत्वात् । तदेतौ काव्यरचनाप्रकारौ मार्गौ प्रकृतिविलक्षणौ दाक्षिणात्यैर्गौडैश्च व्यपदिश्ये[17b]ते । निजत्वाद् देशभाषादिवत् वैदर्भगौडीय इति । एतावत्तु स्यात् ।

किं लक्षणौ तौ को वाऽनयोः [1]प्रतिविशिष्ट इति नच मार्गद्वयमिदानीं विभज्यते । प्रतिविशेषे तु सन्तः प्रमाणमिति विभजन्नाह-

श्लेषः प्रसादः समता माधुर्यं सुकुमारता ।
अर्थव्यक्तिरुदारत्वमोजःकान्तिसमाधयः ॥४१॥

१. प्रतिविशिष्टो भेदकधर्म इत्यर्थः ।



श्लिष्टिः श्लेषो बन्धगौरवम् । प्रसत्तिः प्रसादः प्रकाशार्थता । समता पद्यापेक्षया [बन्धतुल्यतो]पादानम् । माधुर्यं शब्दे अर्थे च रसवत्ता । सुकुमारता अपरुषाक्षरबाहुल्यम् । अर्थस्याभिधेयस्य व्यक्तिः शब्देन न्यायेन वा ग्रहणम् । अन्यथा दुष्प्रापत्वाद वक्ष्यति—

नहि प्रतीतिः सुभगा शब्दन्यायविलङ्घिनी । इति ।

[ १. ७५ ]

उदारत्वं प्रकृष्टता केनचिदर्थेन सनाथत्वम् । ओजः समासवृत्तिबाहुल्यम् । कान्तिः सर्वलोकमनोहरत्वम् । समाधिर्भगवत्प्रतीत्यनुसारिणी गौणार्थता ।

इति वैदर्भमार्गस्य प्राणा दशगुणाः स्मृताः ।
एषां विपर्ययः प्रायो दृश्यते गौडवर्त्मनि ॥४२॥

इत्येवंरूपा दश गुणाः शब्दालङ्कारस्वभावाः प्राणाः जीवितं स्मृता दृश्यन्त इति यावत् । कस्य वैदर्भमार्गस्य दाक्षिणात्यकाव्यपद्धतेः सम्बन्धिनः । तैर्हि वैदर्भमार्गः काव्यशरीरं प्राणिति । तदभावे त्वसन्नेव । ततश्च शब्दालङ्कारभूतः श्लेषादिदशगुणात्मकः काव्यरचनाविशेषो दाक्षिणात्यानां स्वाभाविको वैदर्भमार्ग इत्यर्थः सम्पद्यते । एवंरूपस्तावद्वैदर्भमार्गः । गौडीयः किंरूपः, तद्विपरीतस्वभाव इति दर्शयन्नाह- एषामित्यादि । एषां श्लेषादीनां विपर्ययो विपक्षोऽश्लेषादिः लक्ष्यते दृश्यते, कुत्र ? गौडानां वर्त्मनि काव्ये । अर्थव्यक्त्यादेः कस्यचिद् गुणस्य साधारणत्वात् प्राय इत्याह । बाहुल्येनेत्यर्थः । प्रायोग्रहणसंगृहीतं साधारणगुणं स्वयमेव यथावसरं दर्शयिष्यति । स्वाभाविकस्तेषामेषा रच[18a]नाप्रकारः । वैदर्भस्तु [1]कृत्रिमभावेन भवेदिति भावः ॥

इदानीं यथोद्देशमेषां निर्देशं सविपर्ययं सोदाहरणं कुर्वन्नाह-

श्लिष्टमस्पृष्टशैथिल्यमल्पप्राणाक्षरोत्तरम् ।
शिथिलं मालतीमाला लोलालिकलिला यथा ॥४३॥

शिथिलस्य भाव शैथिल्यं बन्धलाघवम् । अस्पृष्टं त्यक्तम् । अस्पृष्टं शैथिल्यं

१. कृत्रिमो भवनेत्यादर्शे

येन तदस्पृष्टशैथिल्यमित्यत्र श्लिष्टं विधीयते। यद् दृढबन्धकाव्यं तत् श्लिष्टं श्लेषयोगाद्वेदितव्यमिति। स्वतन्त्रस्य धर्मस्यासम्भवात् धर्मिनिष्ठः श्लेषो दर्शितः प्राक्। तन्मते विवक्षया स्वशब्देनोपात्तः। एवं प्रसादादिष्वप्यनुसर्त्तव्यम्। श्लेषविपर्ययं दर्शयन्नाह– अल्पप्राणेत्यादि। अल्पप्राणानि वर्गप्रथमादीनि अक्षराणि उत्तराणि भूयांसि यस्मिन् तैर्वोत्तरमधिकं तदनूद्य शिथिलं विधीयते। अल्पप्राणवर्णप्रायं तच्छिथिलं श्लिष्टविपरीतं काव्यं वेदितव्यम् इति। यथेत्युदाहरति। यथेदं शिथिलं तथान्यदप्येवंजातीयकं द्रष्टव्यमिति यथाशब्दार्थः। एवमुत्तरत्राप्यनुगन्तव्यम्। मालतीमाला जातिपुष्पस्रगियं लोलैः कुसुमसौरभलोलुपैरलिभिर्भ्रमरैः कलिला व्याप्ता इत्यर्थः॥

यदि शैथिल्यं दुष्टमेवंविधं गौडैरादृतम्, तदिहापि केनचित् गुणेन भवितव्यम् अन्यथा सर्वथा निर्गुणं कथमाद्रियत इत्याह–

अनुप्रासधिया गौडैस्तदिष्टं बन्धगौरवात्।
वैदर्भैर्मालतीदाम लंघितं भ्रमरैरिति ॥४४॥

तदिति शिथिलमिष्टमादृतं गौडैरनुप्रासो माधुर्यसंगृहीतः शब्दालङ्कारस्तस्य तस्मिन् बुद्धयाऽनुप्रासः शब्दरसो गुणोऽस्तीति तैरेवंविधमिष्टम्। शैथिल्यं तु दोषो न दृष्टः। अनुप्रासधियेत्यनेन चैतत् कथयति। ध्नुप्रासोऽपि गौडानामेवंविधो यः शैथिल्यमा[18b]वहति। पारुष्यं चेति। यद्वक्ष्यति–

इत्यादि बन्धपारुष्यं शैथिल्यं च नियच्छति।
अतो नैवमनुप्रासं दाक्षिणात्याः प्रयुञ्जते॥
[१.६०]

इति दाक्षिणात्येष्टं पश्चाद् दर्शयिष्यति। श्लेषमुदाहरन्नाह– वैदर्भैः दाक्षिणात्यैर्मालतीदाम लंघितं भ्रमरैरिति ईदृशं श्लिष्ट[मिष्ट]मिति प्रकृतम्। कुतः ? बन्धस्य रचनायागौरवात् शैथिल्यात् कारणात्। अर्थस्तु पूर्वक एव। नन्वत्रापि दोषोऽस्ति माधुर्यलक्षणस्यानुप्रासस्याभावात्। अमाधुर्यं लक्षणम् (?)॥

प्रसादः कीदृश इत्याह–

प्रसादवत् प्रसिद्धार्थमिन्दोरिन्दीवरद्युतिः।
लक्ष्म लक्ष्मीं तनोतीति प्रतीतिसुभगं वचः ॥४५॥



प्रसिद्धः प्रकाशः सुगमोऽर्थोऽभिधेयं शब्दार्थौ यस्य तत्तथा। नतु भावार्थः, तस्य स्वभावगम्भीरत्वात्। तदुक्तम्–

कवेरभिप्रायमशब्दगोचरं स्फुरत्प्रकाशेषु पदेषु केवलम्।
विशन्ति भावज्ञतया कृतश्रमाः [प्रकाशयन्त्याशयमर्थगौरवम्॥]
[ ]

इति। ततः प्रसिद्धार्थमनूद्य प्रसादवत्प्रसादगुणयुक्तं प्रसन्नं वेदिव्यमिति विधीयते। कथयन्नेव उदाहरति– इन्दोश्चन्द्रस्य लक्ष्म चिह्नम् इन्दीवरद्युति नीलोत्पलशोभं लक्ष्मीं श्रियं तनोति विस्तारयति इन्दावेव। नीलोत्पलरुचिना चिह्नेन चन्द्रः शोभत इत्यर्थः। इत्येवंविधं वचः काव्यम्। प्रतीत्या झटित्यर्थावगमेन सुतरां मनोहरं प्रसन्नमिति यावत्। भावार्थगम्भीरं तु यद् भवेत् तदपि प्रसन्नमेव। शब्दार्थप्रसत्तेः प्रतिविशिष्टमेव च तादृशम्। यदाह भारविः–

प्रवर्त्तते नाकृतपुण्यकर्मणां प्रसन्नगम्भीरपदा सरस्वतीति।
[किरातार्जुनीये १४.३]

पतन्तः पद्मगर्भेषु लोहिताः सूर्यरश्मयः।
चरणेषु वरस्त्रीणां शोभ[न्ते विद्रु]मा इव॥

इत्यपरमुदाहरणम्॥

प्रसादविप[19a]र्ययमितरस्मिन् मार्गे दर्शयन्नाह–

व्युत्पन्नमिति गौडीयैर्नातिरूढमपीष्यते।
यथानत्यर्जुनाब्जन्मसदृक्षाङ्को बलक्षगुः ॥४६॥

गौडीयैः पौरस्त्यैर्नातिरूढमपि अतिरूढमत्यन्तप्रसिद्धार्थम्। तद्विपरीतं नातिरूढमत्यन्ताप्रसिद्धार्थमपि। न केवलमप्रसिद्धमित्यपिशब्दः। अप्रसिद्धार्थमिष्यत एव। यद्यपि अतिशयेनाप्य प्रसिद्धार्थं गूढाभिधेयमप्रसन्नतरं तदपीष्यते इत्यर्थः। किं पुनः कारणं प्रसन्नं परित्यज्य अप्रसन्नमिष्यतो निष्कारणमेतन्न सम्भाव्यत इति चेदाह– व्युत्पन्नमिति कृत्वा प्रसिद्धं सुकरमेवायत्ने[ना]पूर्वशब्दकल्पनया व्युत्पन्नं संस्कृतं विशिष्टं तद् व्युत्पन्नगन्यैरेतदिष्यते इतीदमत्र कारणम्। यथेत्युदाहरति। बलक्षाः शुक्ला

गावो रश्मयो यस्य स वलक्षगुश्चन्द्रः अत्यर्जुनं [अति]शुक्लं [न] तथाऽनत्यर्जुनं नीलम् अप्सु जन्म यस्य तदब्जन्म तच्च नीलसन्निधानान्नीलोत्पलम्। तेन सदृक्षः समानः [अङ्कः] चिह्नं यस्य सः। तथा नीलोत्पलसमानचिह्नश्चन्द्र इत्येतावत्यर्थे इयती व्युत्पत्तिः कृतेति व्युत्पन्ना गौड़ा इति ॥

समत्वं निर्देशयन्नाह–

**समं बन्धेष्वविषमं ते मृदुस्फुटमध्यमाः ।**
**बन्धा मृदुस्फुटोन्मिश्रवर्णविन्यासयोनयः ॥४७॥**

बन्धेषु रचनासु विषये यदविषमम् समम् आदिमध्यान्तेषु चतुर्णामपि पादानां सजातीयबन्धत्वादित्यनूद्य तत्समं काव्यं ज्ञेयमिति विधीयते। कियन्तस्ते बन्धा येष्वविषमं समं स्यादिति चेदाह– त इत्यादि। ते बन्धा मृदुस्फुटमध्यमाः त्रयः सम्भवन्ति। मृदुरशिथिलः कोमलः। शिथिलकोमलस्य श्लेषविपर्ययत्वात्। यथोक्तं प्राक्। मृदुश्रुतिरिति यावत्। स्फुटोऽधिमात्रश्रुतिः। कुद्धोद्यस्य सुकुमारविपर्ययत्वात्। यद् वक्ष्यति– न्यक्षेणेत्यादि[१. ७२ ][19b] उन्मिश्रो मध्यमश्रुतिः। कः पुनरेषां प्रभव इत्याह– मृद्वित्यादि। मृदवो मृदुश्रुतयः ककारादयः यथासम्भवम्। स्फुटा अधिमात्रश्रुतयः घकारादयः। उन्मिश्रा मृदुस्फुटाः संसृष्टा ये वर्णास्तेषां विन्यासो रचना योनिः प्रभवो येषां ते तथा। ते च त्रयः मृदुमध्योऽधिमात्रभेदेन प्रत्येकं त्रिधा सम्भवन्ति। स[मे] तु तेषामेवा[वा]न्तरो भेदः स्यात्। मौलास्त्रय एव बन्धाः। तत्र पद्यं गद्यं द्विधा। यद्येकेन बन्धेन समाप्यते तदा[1] समं काव्यम्, विजातीयबन्धकृतवैषम्याभावात्। अत एवोक्तं बन्धेष्वविषममिति। साम्यं पृथगुदाहृतम् ॥

अथ विजातीयबन्धत्वसङ्करस्तदा विषमं काव्यं जायते विजातीयबन्धकृत-वैषम्ययोगात्। तदेवमुदाहरन्नाह–

**कोकिलालापवाचालो मामेति मलयानिलः ।**
**उच्छलच्छीकराच्छाच्छनिर्झराम्भःकणोक्षितः ॥४८॥**

कोकिलानामालापैः कूजितैर्वाचालो मुखरो मृदुवसन्ते कोकिलालापस्य मलयानिलस्य च सम्भवादेवमुक्तम्। उच्छलन्तः शीकरा येषां विकीर्यमाणकणानामच्छा-

1. पद्येकेन बन्धेन समाप्यते तथा इत्याकरे।



च्छानामत्यन्तप्रसन्नानां निर्झराणां प्रस्रवणानामम्भस उदकस्य कणैः बिन्दुभिरुक्षितः सिक्तः शीतः मलयानिलो दक्षिणमारुतः मामेति [मा]मुपसर्पतीति योज्यम्। एतद्द्वये मृदुस्फुटविजातीयवर्णसङ्करात् विषमम्। एतदेव च [वि]जातीयबन्धपूरित-मर्द्धद्वयं केवलमृदुबन्धं केवलस्फुटबन्धं च श्लोकद्वितयं भवत् समोदाहरणं सम्पद्यते। तद्यथा—

कोकिलालापवाचालो मामेति मलयानिलः।
आज्ञामुद्दामकामस्य कालस्य कथयन्निव ॥
बिभर्ति भ्रान्तिमुद्भूतो भ्रमराणां प्रभञ्जनः।
उच्छलच्छीकराच्छाच्छनिर्झराम्भःकणोक्षितः ॥

[कारणेन]।[ने]नैवार्येण दण्डिना पृथङ् नोदाहृतम् ॥

[20a] यत्तर्हि पादे विजातीयवत्त्वं संकीर्णं तदविषममिति कश्चित् मन्यते तन्निषेधार्थं पादमात्रेणापि विषममुदाहरन्नाह–

**चन्दनप्रणयोद्गन्धिर्मन्दो मलयमारुतः ।**
**स्पर्धते रुद्धमद्धैर्यो वररामामुखानिलैः ॥४९॥**

चन्दनानां तरूणां प्रणयः परिचयः सादेश्यात्। ततस्तेनोद्गन्धिः उद्गतो गन्धोऽस्येति चन्दनगन्धगर्भः सुरभिः शिशिरोऽपि वा। निरस्तं समाधिनिर्विकारत्वं येनोपनीतमन्मथविकारत्वात् स मन्दो मृदुर्मलयमारुतो दक्षिणपवनः। [वररामा-मुखानिलै]रुत्तमस्त्रीवदनश्वसनैः सह स्पर्द्धते [तान्] निगृह्णाति सुरभितया मृदुत्वेन [रुद्ध]मद्धैर्यतया च साम्यात्। स्पर्द्धायाश्च समानविषयत्वात् तैरुपमीयत इति यावत्। अत्र तृतीयपादेन स्फुटत्वेन विजातीयेन मध्यमबन्धं पादत्रयं संसृष्टमिति विषममेवे-दृशम्। एतदेव सजातीयैकपादप्रवेशे समं जायते। तद्यथा—

चन्दनप्रणयोद्गन्धिर्मन्दो मलयमारुतः।
स्पर्धते मन्मथक्षीबवररामामुखानिलैः ॥ इति।

तदेतद् गौड़ीयं निगमयन्नाह–

**इत्यनालोच्य वैषम्यमर्थालङ्कारडम्बरौ ।**
**अवेक्षमाणा ववृते पौरस्त्या काव्यपद्धतिः ॥५०॥**

इतीदृशं वैपम्यमसाम्यं विजातीयबन्धसंकरलक्षणम् अनालोच्य अदृष्ट्वाऽस्वीकृत्येति यावत्। काव्यपद्धतिः काव्यरचना ववृते प्रवर्त्तते। कालस्येहानन्तत्वादद्यापि प्रवृत्तेः। कतमा पौरस्त्या। पुरः शब्देन पूर्वस्यां दिशि देशे वा व्यवस्थितो जन उक्तः। तस्मात्तत्र भवा [पौरस्त्या]। गौड़ीयेति यावत्। बन्धविपममेवंविधं काव्यं गौड़ाः कुर्वन्ति। न दाक्षिणात्या इत्यर्थः। कस्तर्हि त्वया काव्यपक्षः स्वीकृतो येन काव्यपद्धतिरिति यदुच्यत इति चेदाह– अर्थालङ्कारो जात्यादि[20b]लक्षणः डम्बरोऽक्षरडम्बरः। 'गोडेष्वक्षरडम्बर' इति। तावुभौ [अवेक्ष]माणा स्वोकुर्वती ववृते इति प्रकृतम्। द्वयमेतन् गौड़वर्त्मनि दृश्यते। शब्दालङ्कारस्तु बन्धसाम्यलक्षणो नेक्षत इत्यर्थः। एते च बन्धास्त्रयोऽपि यथावसरं विनियुक्ताः शोभामा[त]न्वन्तीति दाक्षिणात्यैरिष्यत एव।

केचित्तु व्याचक्षते– उन्मिश्र एकैको बन्धो दाक्षिणात्यैरिष्यते। न तु मृदुः स्फुटश्च शैथिल्यकृच्छ्रोद्यत्वाभ्यां दुष्टत्वादिति। तदसत्, मृदुबन्धस्याप्यशिथिलस्य स्फुटबन्धस्यापि वा कृच्छ्रोद्यस्य रघुवंशजातकमालादौ दाक्षिणात्यमहाकविकाव्येषु दर्शनात्। तद्यथा—

तांम्बूलवल्लीपरिणद्धपूगास्वेलालतालि[ङ्गि]तचन्दनासु।
तमालपत्रास्तर[णा]सु रन्तुं कच्चिन्मनस्ते मलयस्थलीषु॥
[रघुवंशे ६. ६४]

समीक्ष्यमाणक्षतजः क्षितीशः क्षपाचरैर्हेमवपुश्चकाशे।
सन्ध्याभिताम्रैर्जलभारनम्रैः पयोधरैर्मेरुरिवोपगूढः॥ इति।
[जातकमालायाम् ८. ४१]

एतच्च दण्डिनाप्यत्यन्तसंराधितमिति श्रूयते। अपि च कियदिह वक्तुं शक्यते। सर्वमेव हि वैदर्भकाव्यं बन्धत्रयात्मकमुपलभ्यते। तदनेन व्याख्यानेन अवैदर्भः प्रसज्येत। नचैवम्। दृष्टविरोधात्। तदन[व]गाहितग्रन्थकाराभिप्रायस्यैतत् व्याख्या[न]मिति प्रतीमः। तस्मात्त्रयोऽपि बन्धा यथावसरमिष्यन्ते दाक्षिणात्यैः,बन्धवै[प]म्यमेव तु तैर्बहु मन्यते।

यत्पुनः–

बन्धशैथिल्यदोषस्तु दर्शितः स[र्व]कोमल इति।
[१. ६९]



यच्च कृच्छ्रोद्यं न्यक्षेणेत्यादि [१. ७२] तत्सुकुमारावसरे चिन्तितम्। बन्धशैथिल्यकरोऽनुप्रासः, दीप्तमिति च कृच्छ्रोद्यं गौडैर्बध्यते, न वैदर्भैरित्यन्यत्र वा तत्रार्थः। नत्वयं मृदुस्फुटबन्धनिपेधः। इति किं केन सं[21a]गतम्। तस्मात् त्रयोऽपि बन्धा दाक्षिणात्यैरिष्यन्ते, बन्धवैपम्यं तु नेष्टमिति॥

माधुर्यं निर्दिशन्नाह–

**मधुरं रसवद्वाचि वस्तुन्यपि रसः स्थितः।**
**येन माद्यन्ति धीमन्तो मधुनेव मधुव्रताः॥५१॥**

यत्काव्यं रसवत्सरसमित्यनूद्य मधुरमिति विधीयते। क पुनरसौ वर्त्तते येन युक्तं मधुरं स्यात्। शब्देऽर्थे च। प्रकर[ण]सम्भवादिति दर्शयन्नाह– वाचीत्यादि। [वाचि] शब्दे [वस्तुनि अ]र्थे च। रसः स्थितः तिष्ठति। उभयं रसवत् मधुरमित्यर्थः। किं तेनेति चेदाह– येनेत्यादि। येन रसेन येन रसवता काव्येन आस्वादितेन हेतुना माद्यन्ति प्रीतिविशेषं निर्विशन्ति धीमन्तः कवयो रसज्ञाः। कथमित्याह– मधुनेत्यादि। मधुना कुसुमासवेन मधुव्रता भ्रमरा इव। मधु व्रतं भोजनं येषामिति। यथा मधुनात्यन्तं प्रीयन्ते मधुलिहः तथा कवयस्तादृशेन काव्येनेत्यर्थः॥

न ज्ञायते कीदृशोऽसौ इति विशेषेण दर्शयन्नाह–

**यया कयापि श्रुत्या यत् समानमनुभूयते।**
**तद्रूपादिपदासत्तिः सानुप्रासा रसावहा॥५२॥**

यत् पदं समानं सदृशं पदान्तरेणानुभूयते श्रूयते। किं वर्णावृत्या नेत्याह– यया कयापि श्रुत्येति। येन केनचित् [का]रणेन पदावयवभूतेन यथाकथञ्चित् स्थानमात्रासंयोगादिकृतसाम्येन लक्षितं सत् तद्रूपस्तथाविधः सदृशपदलक्षण आदिरुत्तरोत्तरविजातीयपदापेक्षया येषां पदानां तानि तद्रूपादीनि पदानि तद्वा रूपं शब्दरूपं समानं पदमादिरादिरुत्तरोत्तरापेक्षया पूर्वं येषामिति विग्रहः। तेषामासत्तिरासन्नता यथाकथञ्चित् समानश्रुतीनां पदानामासन्नता रसमावहति श्रुतिसुभगतामातनोतीति रसावहा भवति। यथाकथञ्चित् समानश्रुतीनि पदानि [21b]अदूरवर्त्तीनि काव्ये रसवत्तां संपादयन्ति यतो मधुरं स्यात्। अयं च समानपदासत्तिर्नाम समानश्रुतिर्नाम वा

शब्दरसः दाक्षिणात्यैरत्यन्तमिष्यते। अनुप्रासोऽपि शब्दरसोऽस्ति, स किं दाक्षिणात्यैर्नेष्यते। सोऽपीष्यत इत्याह– सानुप्रासेति। अनुप्रासस्य लक्षणं वक्ष्यति। सह तेन वर्त्तते सानुप्रासा, रसावहा [इत्यने]नावधार्यते। समानश्रुतेरेव रसावहेति। अनुप्रासोऽपि च रसमावहति। ततश्च शब्दरसो द्विविधो दर्शितो भवति। समानपदासत्तिरनुप्रासश्च। अनयोश्च न सहभावनियमः। यथासम्भवं क्वचित् काव्ये समानपदासत्तिः। क्वचिदनुप्रासः। क्वचिदुभयम्। द्वयेन तु रहितं विरसं काव्यं न स्वाद्यते कविभिरितीदृशं माधुर्यं द्विविधं प्रतिपत्तव्यम्॥

समानपदासत्तिमुदाहरन्नाह–

एष राजा यथा लक्ष्मीं प्राप्तवान् ब्राह्मणप्रियः।
तदाप्रभृति धर्मस्य लोकेऽस्मिन्नुत्सवोऽभवत्॥५३॥

कश्चित् राजानमुद्दिश्योच्यते। एष राजा अयं नृपः यथा यतः प्रभृति राज्यलक्ष्मीं प्राप्तवान् नराधिपतामधिगतः, तदा प्रभृति तत आरभ्य धर्मस्य श्रुतिस्मृतिविहितस्य सनातनस्य वर्णाश्रमाचारमार्गस्य लोकयात्राया उत्सवोऽभ्युदयो निर्विशङ्का प्रवृत्तिरभवत्। लोकेऽस्मिन् अत्र वर्णाश्रमलक्षणे जगति। कुतः ब्राह्मणप्रियो यतः। ब्राह्मणाः प्रिया अस्येति। ब्राह्मणप्रियो हि तद्वचनानुवर्त्ती शास्त्रविहितं [धर्मं] प्रवर्त्तयतीत्यर्थः। क्वचिदिह दीर्घकृतं सादृश्यं क्वचित् स्थानकृतं क्वचित् संयोगकृतं क्वचित् कथञ्चिदित्यनुवचनगम्यमेतत्। अत एवाह– यया कयापि श्रुत्या यत्समा-[22a]नमनुभूयते [१.४२] इति।

नमः सम्पन्नकृत्याय बुद्धाय जगदर्थिने।
कन्दर्पविभ्रमच्छेदवेधसे क्लेशविद्विषे॥

इत्यपरमुदाहरणम्॥

अस्य समानश्रुतिलक्षणस्य माधुर्यस्य गौडवर्त्मनि विपर्ययं दर्शयन्नाह–

इतीदं नादृतं गौडैरनुप्रासस्तु तत्प्रियः।
अनुप्रासादपि प्रायो वैदर्भैरिदमीप्सितम्॥५४॥

इतीदम् एवंविधं समानपदासत्तिलक्षणं माधुर्यं गौडैर्नादृतम्, न बहु मन्यते। तेषामिदमविदितमिति यावत्। नीरसं तर्हि तेषां काव्यमिति चेदाह– अनुप्रासस्तु तत्प्रिय इति। तेषां गौडानां प्रियो बहुमान्यः। विदितानुप्रास[स्य] तु अनुप्रास एव शब्दरसः। दाक्षिणात्यानां तु समानपदासत्तिलक्षणः शब्दरसः प्रेयानित्याह– अनुप्रासादपीत्यादि। अनुप्रासादप्यधिकमिदं समानपदासत्तिलक्षणं माधुर्यमीप्सितमिष्टं वैदर्भैर्दाक्षिणात्यैः प्रायो बाहुल्येन तत्प्रयोगात्। ततश्च अनुप्रासोऽपि तैरिष्यत इत्युक्तं भवति। न तु तथासौ प्रियस्तेषां यथा समानपदासत्तिः। तादृशं हि माधुर्यं व्यापकं सर्वत्र सम्भवात्। अनुप्रासस्तु न तथा व्यापकः क्वचिद् दर्शनात्। अत एव प्राय इदमीप्सितमित्युक्तम्। शब्दरसस्तूभयमपि। द्वयेन तु हीनं नीरसं नास्वाद्यते कविभिरिति॥



कः पुनरसावनुप्रासो यो गौडानां प्रियः? दाक्षिणात्यानां चेत्यवसरप्राप्तमनुप्रासं लक्षणतो लक्ष्यतश्च दर्शयन्नाह–

वर्णावृत्तिरनुप्रासः पादेषु च पदेषु च।
पूर्वानुभवसंस्कारबोधिनी यद्यदूरता॥५५॥

वर्णस्य स्वरव्यञ्जनलक्षणस्य आवृत्तिः पुनःपुनरुच्चारणम् इत्यनूद्यानुप्रासो वेदितव्य इति विधीयते। प्रथमस्तस्य प्रथमप्रयुक्तस्याक्षरस्य [22b] अनु पश्चादास उपक्षेपः प्रयोगः अनुप्रासः। क्वासौ सम्भवतीत्याह– पादेष्वित्यादि। पादेषु पद्यापेक्षया पदेषु चेत्येतत्तु गद्यापेक्षया द्रष्टव्यम्। द्वयोरपि काव्यतयाधिकारात्। यद्वक्ष्यति–

एतद् गद्यस्य जीवितमिति।
[१.८०]

अनुष्टुबादौ बृहति च वृत्ते गद्ये च सर्वत्र सन्निकर्षतो द्रष्टव्यः यतः प्रत्यासन्नतयाऽनुप्रासो गृह्येत। यदाह– पूर्वानुभवेत्यादि। पूर्वस्य पूर्वप्रयुक्तस्य वर्णस्य अनुभवः श्रोत्रेण ग्रहणं पूर्वो वा पूर्वप्रयुक्तवर्णविषयत्वात् तस्य सम्बन्धी तदन्वितत्त्वात्। पूर्वानुभवेनाहितः संस्कारः पूर्वानुभवसंस्कार इति वा मध्यमपदलोपी समास एव। वर्णः तज्जातीय इति वा एकाकारस्मार्त्तविकल्पजननशक्तिलक्षणः। तस्य बोधनी प्रबोधिका स्वानुरूपविकल्पोत्पादनाभिमुख्यकारिणी अदूरता प्रत्यासन्नता पुनस्तद्वर्णानुभवस्वभावा यदि भवति तदा वर्णावृत्तिरनुप्रासः पादेषु पदेषु च सम्पत्स्यते। अन्यथा तथाविधानुभवसंस्कारप्रबोधाभावात्तादृशविकल्पानुदयात् अनुप्रासो न

स्यात्। तस्मात् स एवायं वर्ण आवृत्त इति यावतानुप्रासप्रतीतिः क्रमते तावदन्तरं कर्त्तव्यम्। अतिव्यवधाने त्वनुप्रासो न लभ्यते। यद्वक्ष्यति—न तु रामामुखाम्भोज [१.५८] इत्यादि। अत्र चानुभव एव प्रमाणम्, यथोक्तं प्राक्॥

यथाकथञ्चित्समानपदासत्तौ एव लक्ष्यतः प्रकाश्यं अनुप्रासमुदाहरन्नाह–

चन्द्रे शरन्निशोत्तंसे कुन्दस्तवकविभ्रमे।
इन्द्रनीलनिभं लक्ष्म सन्दधात्यलिनः श्रियम्॥५६॥

समानपदासत्तौ तु रसावहत्वं प्रसङ्गेनोक्तम्। समानपदासत्तिरपि तु लक्षण[23a]-तो लक्ष्यतश्च प्राधान्येन प्रागुक्ता। इन्द्रनीलनिभम् इन्द्रनीलमणिसदृशं नीलत्वात्। लक्ष्म चिह्नम्। अलिनो भ्रमरस्य श्रियं शोभां संदधाति बिभर्त्ति। कुत्र? चन्द्रे शशाङ्के शरदि वर्षात्यये शरदो वा निशाया रात्रेरुत्तंसे शिरश्शेखरे। उत्तंसो मूर्ध्नि शेखर इत्यभिधानात्। कथमुत्तंसश्चन्द्रो रूप्यत इत्याह– कुन्दस्तवकविभ्रमेति। कुन्द-स्तवकस्यैव विभ्रमः शोभा शौक्ल्यात्। यतः कुसुमसंदोहसदृशश्चन्द्रस्ततः शरन्निशोत्तं-सत्वेन रूप्यते [तदनुपाति] च लक्ष्म नोलमणिनोपनीयते। अत्र चन्द्र कुन्द इन्द्र सन्द इति पादेष्वनुप्रासः॥

चारु चान्द्रमसं भीरु बिम्बं पश्येदमम्बरे।
मन्मनो मन्मथक्रान्तं निर्दयं कर्तुमुद्यतम्॥५७॥

मम मनश्चित्तं मन्मथक्लान्तं कामातुरं निर्दयमत्यर्थं कर्तुम्। करोतिक्रियाविशेषणं निर्दयमिति। उद्यतमुत्थितमम्बरे नभसीदमेतत् चन्द्रमस इदं चान्द्रमसम् ऐन्दवम् बिम्बं मण्डलं पश्य भीरु प्रिये। इति चन्द्रोदयोपनीतां स्वामनङ्ग[पीडां] भङ्ग्या निवेदयति कश्चित् कामी। वकारस्य मकारसहितस्य, मकारस्य नकारेण सह, मकारस्य, रेफस्यान्यस्य वा यथासम्भवमावृत्तिरनुप्रासः पादेषु।

लीलास्मितमितालापकोमलं रमणीमुखम्।
उपात्तपाणि संरक्तलोचनंलोक[रञ्जन]म्॥

इत्यपरमुदाहरणम्॥

इष्टमनुप्रासमुदाहरन्नाह–



इत्यनुप्रासमिच्छन्ति नातिदूरान्तरश्रुतिम्।
न तु रामामुखाम्भोजसदृशश्चन्द्रमा इति॥५८॥

इत्येवंरूपमनन्तरोक्तप्रकारं नातिदूरान्तरश्रुतिमनतिविप्रकृष्टव्यवधानश्रवणम्। यावता पूर्वानुभवसंस्कारप्रबोधः प्रभवति तावदन्तरश्रुतिमनुप्रासमिच्छन्ति। सामान्यवचनादुभयेऽपि। [23b] नातिदूरमन्तरं यस्याः सा श्रुतिर्यस्येति ह्यन्य-पदार्थः। कीदृशः पुनर्दूरान्तरश्रुतिर्नेष्यत इति तमपि हेयत्वेनोदाहरति– नत्वि-त्यादि। रामाणां स्त्रीणां मुखं वदनमेवाम्भोजं पद्मं तेन सदृशः समानश्चन्द्रमाः शशाङ्क इति योज्यम्। अत्र रामा इत्ययं मकारः मुखाम्भोजसदृशश्चन्द्रमा इति दूरमाग-म्यावृत्तः। ततोऽयं दूरान्तरश्रुतिरनुप्रासो व्यपदेशमात्रेण न तु ग्रहणतः। तमीदृशं नेच्छन्त्युभयेऽपि। वैदर्भा एकान्तेन नेच्छन्ति। गौडैस्तु तादृशोऽपीष्यत इति वा द्रष्टव्यम्॥

अपरोऽप्यनुप्रासप्रकारोऽस्ति यः श्लेषसौकुमार्यादिशब्दालङ्कारविरोधी। तं गौडाः प्रयुञ्जते न वैदर्भा इति दर्शयन्नाह–

स्मरः खरः खलः कान्तः कायः कोपश्च नः कृशः।
च्युतो मानोऽधिको रागो मोहो जातोऽसवो गताः॥५९॥

स्मरः कामः खरो नृशंसः प्रमादित्वात्। कान्तः पतिश्च खलः प्रतिकूलवर्त्ती व्यलीकशीलत्वात्। कायः शरीरम् कृशः क्षीणः विरहदौर्बल्यात्। कोपश्च कान्तविषयः कृशो निवृत्तः। मानश्च तद्विषयः किं तेनेति चेतोवष्टम्भलक्षणश्च्युतो गलितः रागाद्यभिभूतत्वात्। यदाह रागोऽधिक इति। रागोऽभिषङ्गः पतिविषयः अधिकः प्रबलो वर्त्तते। ततश्च मोहो मूर्च्छा जातः प्रवृत्तः रागपक्षत्वात्। तदुक्तम्—

तीव्राभिषङ्गप्रभवेण वृत्तिं मोहेन संस्तम्भयतेन्द्रियाणाम्।
अज्ञातभर्तृव्यसना मुहूर्तं कृतोपकारेव रतिर्बभूव॥ इति।
[कुमारसम्भवे ३.७३]

असवः प्राणा गता दशमी दशा जातास्माकमिति काचित् विरहिणी विरौतीत्यर्थो योजनीयः॥

इत्यादि बन्धपारुष्यं शैथिल्यं च नियच्छति ।
अतो नैवमनुप्रासं दाक्षिणात्याः प्रयुञ्जते ॥६०॥

इत्यादि काव्यम् एवंविधोऽनुप्रासो बन्धस्य रचनायाः पारुष्यं यत्र सौकुमार्यविपर्ययः शैथिल्यं च श्लेषविपक्षं चकाराद्वैषम्यं च नियच्छति स्वीकरोति यतः, अतः कारणात्, एवमीदृशमनुप्राशं न प्रयुञ्जते दाक्षिणात्या वैदर्भाः । गौडास्तु प्र[24a]युञ्जत इत्यर्थादुक्तं भवति । ततश्चानुप्रासेऽपि वैदर्भगौडीययोरस्ति कथञ्चिद्विशेष इति ॥

अनुप्रासविशेषत्वात्तत्प्रसङ्गेन यमकं भञ्जयन्नाह–

आवृत्तिमेव संघातगोचरां यमकं विदुः ।
तत्तु नैकान्तमधुरमतः पश्चाद् विधास्यते ॥६१॥

वर्णावृत्तिमेव नान्यत् यमकं विदुः विदन्ति कथयन्ति तज्ज्ञाः इति परमुखेन । तद्विदग्धोचितेयं वाचोयुक्तिरिति सर्वत्रानुसरत्वेनाम् । कोऽनयोर्भेद इत्याह– संघातगोचरामिति । अयमनयोर्भेदः । एकवर्णविषयावृत्तिरनुप्रासः । अनेकवर्णविषया तु यमकमिति । संघातः वर्णसमुदायो गोचरो विषयो यस्या इति विग्रह[:] । तत् किं नोच्यते इत्याह– तत्त्वित्यादि । तत्तु यमकम् । तुशब्दोऽर्थान्तरविवक्षायाम् । एकान्तेन साकल्येन सर्वेग, मधुरं च सर्वं न भवति, प्रायो गूढार्थत्वेन अप्रसन्नत्वात् । तत्तु मधुरमेव यत्प्रसन्नम् । समानश्रुत्यनुप्रासयोस्त्वेकान्तमधुरता सर्वथा प्रसन्नत्वात् । एकान्तमधुरं चात्र प्रस्तुतम् । अतः नैकान्तमधुरत्वात् पश्चाद् दुष्करे विधास्यते प्रतिपादयिष्यते । प्रभेदतो लक्षणतस्तूक्तमेवेति ॥

यदुक्तं वाचि वस्तुन्यपि रसः स्थित [१. ५१] इति तत्रेयता वाचि रसो दर्शितः । सम्प्रति वस्तुनि रसं विवरीतुमुपक्रमते–

कामं सर्वोऽप्यलंकारो रसमर्थे निषिञ्चति ।
तथाप्यग्राम्यतैवैनं भारं वहति भूयसा ॥६२॥

काममित्यभ्युपगमे यदि नामेत्यर्थः । अलङ्कारोऽर्थालङ्कारः जात्यादिप्रभेदः सर्वोऽपि नैक एव कश्चित् अर्थे वस्तुनि रसं माधुर्यं निषिञ्चति आवहति । तथापि एवमपि इति विशेषविवक्षायां तां दर्शयति– अग्राम्यतेत्यादि । अग्राम्यतै[24b]वासभ्यतैव



अर्थस्य भूयसात्यर्थं व्यापकत्वात् एनं रसनिषेकलक्षणं भारं धुरं वहति धत्ते नान्यत् । [1]यद्यग्राम्यतैव रसस्तत् किं भेदो नोच्यते, सामान्यविशेषभावेन भेदसम्भवात् । रसो हि माधुर्यसामान्यम्, समानश्रुत्यनुप्रासाग्राम्यतादिसाधारणत्वेन [तस्य] प्रतीतेः । समानश्रुत्यादेस्तु विशेषाव्याप्तितयावगमात् । अन्यदप्येवंजातीयकमुन्नेयम् । जात्याद्यर्थालङ्कारमुक्तमपि काव्यमग्राम्यार्थमेकान्तमधुरमित्यर्थः ॥

कीदृशी तावद् ग्राम्यता यद्विपर्ययोऽग्राम्यता वस्तुरसः स्यादिति ग्राम्यताप्रतिपक्षेण अग्राम्यतां दर्शयितुकामः ग्राम्यतां तावदुदाहरति–

कन्ये कामयमानं मां न त्वं कामयसे कथम् ।
इति ग्राम्योऽयमर्थात्मा वैरस्यायैव कल्पते ॥६३॥

कन्ये बाले त्वं कामयमानं सन्तं मां कथं किं न कामयसे नाभिलषसि । एवं नाम त्वं निष्ठुरेति । अयमेवंविधोऽर्थात्मा वस्तुरूपं ग्राम्यः अविदग्धोचितः । ततश्च वैरस्यायैव अमाधुर्यार्थमेव कल्पते सम्पद्यते न कथमपि रसवत्तायै । विरस एव तादृशोऽर्थ इति यावत् । वैरस्यं च न काव्योचितमिति नेदृशं कवयः स्पृ[श]न्तीत्याकूतम् ॥

कीदृशं तर्हि वस्तुरूपमग्राम्यम्, यद्रसावहमित्याह–

कामं कन्दर्पचण्डालो मयि वामाक्षि निष्ठुरः ।
त्वयि निर्मत्सरो दिष्ट्येत्यग्राम्योऽर्थो रसावहः ॥६४॥

वामाक्षि मञ्जुलोचने इति प्रियामन्त्रणम् । कन्दर्पः काम एव चण्डालः अकाण्डप्रहारित्वात् । मयि मद्विषये निष्ठुरः क्रूरं प्रहरतीत्यर्थः । कामं यदि नाम तथापि सानुग्रह एवास्माकं यत्त्वयि निर्मत्सरः निर्वैरः सानुक्रोशस्त्वां न बाधते । अत एवाह– दिष्ट्येति आनन्दनिवेदनम् । अयमस्माकमानन्दो महान् यत्त्वयि न [25a] प्रहरति । त्वत्सुखेनैव सुखिता वयम् । किं कन्दर्पचण्डालेन निष्ठुरेणापि कृतमिति वक्रोक्त्या आत्मनस्तद्विषयमनुगत[त्वं] तस्याश्च वैमुख्यमात्मनि दर्शयतीति अयमीदृशोऽर्थः अग्राम्यः सभ्यः काव्योचितः ततश्च रसावहः एकान्तमधुरः । एवंविधो वस्तुन्यग्राम्यतारसः प्रतिपत्तव्यः । अपरमत्रोदाह्रियते–

१. तत्र आदर्शे

नन्वहं प्रणत एव, मानिनी सा भवन्तमवधीर्य वर्तते ।
मन्मथस्त्वमसि किं न तन्मथः कुत्र वा न तव काम ! वामता ॥ इति ॥

यथार्थो ग्राम्यस्तथा शब्दोऽपि ग्राम्योऽस्ति, सोऽपि वर्जनीय इति दर्शयन्नाह–

शब्देऽपि ग्राम्यतास्त्येव सा सभ्येतरकीर्तनम् ।
यथा यकारादिपदं रत्युत्सवनिरूपणे ॥६५॥

न केवलमर्थे शब्दे वाचकेऽपि ग्राम्यतास्त्येव न नास्ति । कीदृशीत्याह– सेत्यादि । सा ग्राम्यता सभ्येतरे असभ्या रथ्यापुरुषास्तेषां कीर्तनं यत् कियदसभ्यसमुदाहृतं वचनं ग्राम्यता । पदगतग्राम्यतेत्युक्तम् । यथेति निदर्शनेन व्यनक्ति– रत्युत्सवस्य निधुवनानन्दस्य निरूपणे प्रकाशने कर्त्तव्ये यकारादिपदं यकारमादिर्यस्य तच्च तत् पदं चेति विग्रहः । सुसिद्धं खल्वेतदशिष्टवचनम् । तथाविधं सर्वं ग्राम्यं द्रष्टव्यम् । नेदमेवेति यथाशब्दस्यार्थः ॥

अन्यः शब्दे ग्राम्यताप्रकारोऽस्ति, सोऽपि वर्जनीय इति व्युत्पादयन्नाह–

पदसन्धानवृत्त्या वा वाक्यार्थत्वेन वा पुनः ।
दुष्प्रतीतिकरं ग्राम्यं यथा या भवतः प्रिया ॥६६॥

पदयोः सन्धानं सङ्गतिरानन्तर्यं तस्य वृत्त्या स्थित्या । वेति समुच्चये । वाक्यस्य पदसमुदायस्यास[त्त्यादियुक्त][25b]स्यार्थः क्रियाकारकविशेषलक्षणमभिधेयं तद्भावः । स एव वाक्यार्थत्वं तेन वा तेन च हेतुना पुनरपरमेतत् । न केवलं पूर्वकं नैकैकपदार्थनिरूपणेन किं तु वाक्यार्थस्य विभावनेनेत्यर्थः । दुष्टामसभ्यां शब्दतः न तु वस्तुतः, तस्यैव वस्तुनः शब्दान्तरेणादुष्टत्वात् ; प्रतीतिमवगमं करोतीति दुष्प्रतीतिकरं वाक्यं ततश्च ग्राम्यमसभ्यं विद्यते । यथेत्युदाहरणेन स्पष्टयति । या इत्यस्य पदस्य भवत इत्यनेन पदेन सन्धाने सति ग्राम्यं प्रतीयते । या तव प्रियेति पदान्तरसन्धाने निवर्तते । तदीदृशं पदसन्धानं ग्राम्यं बुद्ध्या परिहरणीयमिति ॥

वाक्यार्थग्राम्यमुपहरति–

परं प्रहृत्य विश्रान्तः पुरुषो वीर्यवानिति ।
एवमादि न शंसन्ति मार्गयोरुभयोरपि ॥६७॥



परं शत्रुं प्रहृत्य हत्वा वीर्यवान् शूरः पुरुषो विश्रान्तो व्यवस्थित इत्येकोऽर्थस्तावदग्राम्यः । परम् अत्यर्थं प्रहृत्याभिहत्य वीर्यवानुपचितप्रधानधातुः पुरुषः विश्रान्तो विरतः पतित इत्यपरो ग्राम्यो वाक्यार्थः प्रतीयत इति वाक्यार्थग्राम्यमेतत् । एवमादीदृशमर्थग्राम्यं शब्दग्राम्यं चोभयोरपि वैदर्भगौडीययोर्मार्गयोरेकस्मिन्नपि न शंसन्ति नाद्रियन्ते तद्विद एव । तच्च प्रायोग्रहणसंगृहीतम् ।

कस्यचित् सहसोत्थानमग्रे विदधतो मदात् ।
पराघातप्रवृत्तस्य पतनायैव जायते ॥

इति वाक्यार्थग्राम्योदाहरणमपरमिति ॥

भगिनीत्यादेः का गतिरित्याह–

भगिनीभ[26a]गवत्यादि सर्वत्रैवानुमन्यते ।
विभक्तमिति माधुर्यमुच्यते सुकुमारता ॥६८॥

भगिनी भगवती सुभगा दुर्भगेत्यादि सर्वत्रैव शास्त्रे काव्ये लोके चानुमन्यते आद्रियते । ततस्तादृशमग्राम्यं सभ्यमेव । ततश्च प्रयुज्यते एव कविभिः ॥

माधुर्यं निगमयन्नाह– विभक्तमित्यादि । इत्यनेन प्रकारेण माधुर्यं विभक्तं निर्दिष्टम् । सुकुमारतेदानीमुच्यते निर्दिश्यते तदनन्तरमुपदिष्टत्वादिति ॥

अनिष्ठुराक्षरप्रायं सुकुमारमिहेष्यते ।
बन्धशैथिल्यदोषो हि दर्शितः सर्वकोमले ॥६९॥

अनिष्ठुराणि अपरुषाणि अक्षराणि वर्णाः प्रायाणि भूयांसि यस्मिंस्तथा अनिष्ठुरैर्वाक्षरैः प्रायं समधिकं काव्यमित्यनूद्य सुकुमारमपरुषमिष्यत इति विधिः । निष्ठुराणि तु स्वल्पानीति प्रायग्रहणेन सूचितम् । इहेति वैदर्भमार्गे सर्वानिष्ठुराक्षरं किं न सुकुमारमिष्यत इति चेदाह– बन्धेत्यादि । हिर्यस्मात्सर्वाणि अक्षराणि कोमलानि सुकुमाराणि यस्मिंस्तत्तथा । सर्वैरेवाक्षरैः कोमलं तस्मिन् काव्ये बन्धस्य निवेशनस्य शैथिल्यं लाघवं तदेव दोषो वैकृतं दर्शित उदाहृतः पूर्वम् । मालतीमाला लोलालिकलितेति [१.४३] । तस्मादनिष्ठुराक्षरप्रायमेव सुकुमारमिहेष्यते न सर्वानिष्ठुराक्षरमिति योज्यम् ॥

सुकुमारतामुदाहरन्नाह–

मण्डलीकृत्य बर्हाणि कण्ठैर्मधुरगीतिभिः ।
कलापिनः प्रनृत्यन्ति काले जीमूतमालिनि ॥७०॥

बर्हाण्यङ्गरुहाणि मण्डलीकृत्य छत्राकारेण वितत्य मधुरा मनोहरा गीतिः केकालक्षणं गानं येषां तैः कण्ठैर्लक्षिता मधुरं गायन्त इत्यर्थः । कला[26b]पिनो मयूराः प्रनृत्यन्ति जीमूतमालिनि मेघधारिणि । मलमल्लधारणे । काले समये प्रावृषीति यावत् ॥

प्रतिविशिष्टस्यानेकस्य काव्यधर्मस्याभावेऽपि सौकुमार्यगुणादीदृशं काव्यमुपादेयमिति सौकुमार्यं वर्णयन्नाह–

इत्यनूर्जित एवार्थो नालङ्कारोऽपि तादृशः ।
सुकुमारतयैवैतदारोहति सतां मुखम् ॥७१॥

इत्ययमेवंविधोऽर्थः अभिधेयशरीरम् । ऊर्जितो दीप्तः प्रतिविशिष्टः । न तथाऽनूर्जित एव नोर्जितोऽपि । अलंकारस्तर्हि प्रतिविशिष्टस्तेनेदमादेयं काव्यं न सौकुमार्यगुणादिति चेदाह– नालंकारोऽपि तादृश इति । अलंकारोऽप्यत्र स्वभावोक्तिलक्षणः तादृशस्तथाभूतः प्रतिविशिष्टो न भवति यादृशोऽ[न्य]त्र । स च विभावनादिः । न केवलमर्थ इत्यपिशब्दार्थः । कोऽत्रार्थस्यालङ्कारस्य च भेदः येनोच्यतेऽलंकारोऽर्थश्चानूर्जित इति । य एवार्थः स एवालंकाराऽस्मिन् गम्यते । नैतदेवम् । अर्थो हि धर्मी, स्वभावोक्तिश्चालंकारो धर्मः प्रतीयत इति महान् भेदः, धर्मधर्मिभेदस्य सुप्रसिद्धत्वात् । अन्यत्राप्येवंविधोऽत्र भेदः । तथापि एतदिदमीदृशं काव्यं सुकुमारतयैव सौकुमार्येण केवलेन शब्दालंकारेण पुरस्कृतं सतां विदग्धानां मुखम् आननम् आरोहति गोचरीकरोति सुकुमारमित्येवेदृशं कविभिरुपादीयत इति यावत् । यदि पुनरर्थ ऊर्जिताऽलंकारश्च, सुतरां सुकुमारं काव्यं रमणीयमित्याकूतम् ॥

हंसा भ्रमन्ति पद्मानां कानने मदम[27a]न्थराः ।
मञ्जु[भिर् ]ध्वनिभिः कर्णैश्चरणैर्वर्णविभ्रमैः ॥

इत्यपरमुदाहरणमिति ॥



सौकुमार्यविपर्ययं गौडवर्त्मनि दर्शयन्नाह–

दीप्तमित्यपरैर्भूम्ना कृच्छ्रोद्यमपि बध्यते ।
न्यक्षेण क्षपितः पक्षः क्षत्रियाणां क्षणादिति ॥७२॥

दीप्तमूर्जितं साटोपमेतदिति मन्यमानैरपरैः पौरस्त्यैः कृच्छ्रोद्यं दुर्वचं कष्टोच्चारणमसुकुमारतरमपि काव्यं बध्यते प्रयुज्यते न केवलसुकुमारमात्रमित्यपिशब्दः । भूम्ना प्रायः । ततश्च सुकुमारमपि किंचिदुष्णमधुन्यायेन येनोपयुज्यत इति सूचयति तदुदाहरति । [1]न्यक्षेण निःशेषेण क्षपितः निहतः क्षणात् सपदि स्तोकेन कालेनेत्यर्थः । क्षत्रियाणां राज्ञां पक्षो वर्गः परशुरामेणान्येन वा केनचिदिति गम्यते । नन्वेतद्विवक्षितं कृच्छ्रोद्यमात्रं तूदाहृतमिति यथा तादृशमित्यर्थः ॥

अर्थव्यक्तिं व्याख्यातुमाह–

अर्थव्यक्तिरनेयत्वमर्थस्य हरिणोद्धृता ।
भूः खुरक्षुण्णनागासृग्लोहितादुदधेरिति ॥७३॥

अर्थस्य काव्याभिधेयवस्तुनो नेयत्वं शब्दतोऽर्थतो वाप्रतीतिरन्यथावगमः स्यात् । गत्यन्तराभावात् । यद्वक्ष्यति–

न हि प्रतीतिः सुलभा शब्दन्यायविलंघिनी । इति ।

[१. ७५]

नेयत्वभेदमनूद्यार्थव्यक्तिर्विधीयते । तदुदाहरति । हरीत्यादि, हरिणा वराहरूपधारिणा विष्णुना पृथिवी भूरुद्धृता समुत्तारिता उदधेः समुद्रात् । किंविशिष्टात् । खुरैर्महावराहस्येत्यर्थाद्गम्यते । चरणाग्रैः क्षुण्णानां चूर्णितानां नागानामुरगाणामसृजा रुधिरेण लोहितादरुणात् [27b] इतीदृशमनेयं काव्यम् । अत्र हि नागशोणितं शब्दोपात्तं यदुपाधिकमरुणत्वमर्णवस्य । न्यायोपात्तं तु

उज्जहार खुरक्षुण्णमहोरगकुलाकुलात् ।
महावराहः पृथिवीमरुणादर्णवात् क्षणमिति ॥

अत्र यद्यपि नागरुधिरमशब्दोपात्तं यदुपाधिकलोहितत्वमुदधेः, तथापि खुरक्षुण्णमहोरगकुलाकुलादर्णवादरुणादित्युक्तेः सामर्थ्यात् स्फुटं नागरुधिरं गम्यते ।

1. न्यक्षं कात्स्नं निकृष्टे च इति वैजयन्ती ।

तथाविधस्योदधेर्नागरुधिराव्यभिचारात्। न हि सर्वत्र शाब्दी प्रतीतिः काव्ये, अर्थे अपि तस्या दर्शनात्। यदाह कालिदासः—

महेन्द्रमास्थाय महोक्षरूपं यः संप्रति प्राप्तपिनाकिलीलः।
चकार बाणैरसुराङ्गनानां गण्डस्थलीः प्रोषितपत्रलेखाः॥ इति।

[रघुवंशे ६. ७२]

अत्र हि तेन राज्ञा बाणैरसुराः समरे हता इत्यर्थो विवक्षितः कविना। न चासुरवधः शब्दोपात्तः। तथापि असुराङ्गनानां गण्डस्थलीः प्रोषितपत्रलेखाश्चकार बाणैरित्युक्ते सामान्यादसुरा हता इति न्यायोपात्तोऽसुरवधस्तादृशस्य पत्रलेखाप्रवासस्यासुरवधाव्यभिचारात्। न चेदृशं नेयत्वम्, प्रत्युत वक्रोक्तिरीदृशी गुण एव काव्यस्य। ततः शब्देन न्यायेन वाचिना यत्रार्थो नेतव्यस्तादृशं नेयं विज्ञेयमन्यथा तथाविधं काव्यं सर्वं दुष्येदिति॥

नेयमुदाहरन्नाह–

**मही महावराहेण लोहितादुद्धृतोदधेः।**
**इतीयत्येव निर्दिष्टे नेयत्वमुरगासृजः॥७४॥**

लोहितादुदधेरुद्धृता मही महावराहेनेत्युक्ते कथं लोहितत्वमुदधेरिति नेयं न तावत्स्वाभाविकम्। औपाधिकं तु भवेत्। न चोपाधिस्तादृशः शब्दोपात्तो न्यायलब्धो वा येन लोहितत्वमुदधेः स्यात्। [28a] यथोक्तं प्राक्। तस्मादभिप्रायमात्रमेतत् मयैवं विवक्षितमिति। न चैतावता प्रतीतिः प्राप्यते, शब्दस्य न्यायस्य तादृशस्यानुपादानात्। यदि पुनरपरः कश्चित्तादृशमर्थं कथञ्चित् स्वयमभ्यूह्य गृह्णीयात्तस्यैवासौ गुणः। काव्यं तु तादृशं दुष्टमेव। अत एव लोहितादुदधेरित्येतावद् वक्तुं न तु तथाविधः कश्चिद्विशेष उपात्तः, यतो नागरुधिरलोहितत्वमुदधेर्गम्येत। यथोक्तं प्राक्। ततश्चेयत्येव लोहितादुदधेरुद्धृता महावराहेण महीति एतावत्येव निर्विशेषशब्देन न्यायेन वा तादृशेन रहिते वाक्ये निर्दिष्टेन प्रयुज्य उरगासृजो नागरक्तस्य नेयत्वं मयैवं विवक्षितमिति विवक्षामात्रगम्यत्वं जायते। न तु शब्दोपात्तं न्यायोपात्तं वा नागशोणितं यदुपाधिकमरुणत्वमर्णवस्य। न च तादृशं सुलभं न्यायशब्दानां रूढस्यार्थस्य विवक्षामात्रेण दुष्प्रापत्वात्। तस्मादीदृशं नेयमवगम्यं परिहर्तव्यम् इति॥



नेयं सर्वैरेव नेष्यत इति दर्शयन्नाह–

**नेदृशं बहु मन्यन्ते मार्गयोरुभयोरपि।**
**न हि प्रतीतिः सुलभा शब्दन्यायविलङ्घिनो॥७५॥**

ईदृशमनन्तरोक्तप्रकारं नेयमुभयोरपि वैदर्भगौडीययोर्मार्गयोर्वर्त्मनोः। न वैदर्भ एव। न बहु मन्यन्ते नाद्रियन्ते न प्रयुज्यन्ते तद्विदः।

तच्च

एषां विपर्ययः प्रायो लक्ष्यते गौडवर्त्मनि।

[१. ४२]

इति प्रायोग्रहणेन संगृहीतं किं बहु मन्यत इति चे[28b]दाह– न हीत्यादि। हिशब्दो यस्मादर्थे। यतः प्रतीतिरर्थस्यावगमः शब्दं वाचकं न्यायसामर्थ्यं च तादृशमनुपदर्शनाल्लङ्घयति त्यजत्यनुपादा[ना]दिति, शब्दन्यायविलङ्घिनी न सुलभा न प्राप्यते कस्यचिद् विवक्षामात्रेण तादृशेन। तस्मान्नेच्छन्ति मूलहानेः। न्यायोपात्तः शब्दोपात्तो वा योऽर्थो न भवति स न प्रतीयतेऽन्तस्तत्त्वमात्रेणेत्यर्थः। तस्मात् शब्दादर्थाद्वा प्रतीतार्थमनेयं तद्विपरीतं तु नेयमिति स्थितम्॥

उदारत्वं निर्दिशन्नाह–

**उत्कर्षवान् गुणः कश्चिद्यस्मिन्नुक्ते प्रतीयते।**
**तदुदाराह्वयं तेन सनाथा सर्वपद्धतिः॥७६॥**

यस्मिन् कस्मिंश्चित् उक्ते प्रयुक्ते कश्चिद्विवक्षितो गुणो विशेषस्त्यागादिलक्षण उत्कर्षवानधिमात्रः प्रतीयते अवगम्यते तत् काव्यमुदाराह्वयमुदारं नाम वेदितव्यमिति विधिः। उदारमित्याह्वयः संज्ञा यस्येति विग्रहः। यद्येवं स एवोत्कर्षवान् गुण उदारोऽस्तु, काव्यं कथमुदारमुच्यते इति चेदाह–तेनेत्यादि। यतस्तेनोत्कर्षवता गुणेन वाच्यत्वेनापि रूपेण सर्वा पद्धतिः सर्वं तत्काव्यं विवक्षितं यत्किञ्चित् सनाथा युक्ता, तस्मादुदारगुणयोगात् सर्वं तत् काव्यमुदारमिति द्रष्टव्यम्॥

तदुदाहरन्नाह–

अर्थिनां कृपणा दृष्टिः स्त्वन्मुखे पतिता सकृत् ।
तदवस्था पुनर्देव नान्यस्य मुखमीक्षते ॥७७॥

अर्थिनां याचकानां दृष्टिश्चक्षुः कृपणा दीना निरानन्ददौर्गत्योपहतत्वात् याच्ञामरणावस्थाप्राप्तत्वाच्च त्वन्मुखे वदने सकृदेकवारं पतिता प्रवृत्ता सती तदवस्था सा [29a]कृपणा अवस्था यस्या इति विग्रहः । पुनस्तथैव कृपणा अप्राप्तकामत्वादन्यस्य दातुर्मुखं नेक्षते न पश्यति देवेति कश्चिद्राजा स्तूयते । त्वामेकवारमर्थितया प्राप्य पुनरन्यं न याचते त्वत्त एव पूर्णमनोरथत्वात् । आकारमात्रेण वार्थितां ज्ञात्वा कृतार्थयसि यावद् याच्ञाक्षराणि कृपणानि नोद्गीरन्तीत्यर्थः ॥

कः पुनरिहोत्कर्षवान् गुणो येन सनाथं सर्वं तत्काव्यमुदारं स्यादिति विवृण्वन्नाह–

इति त्यागस्य वाक्येऽस्मिन्नुत्कर्षः साधु लक्ष्यते ।
अनेनैव पथान्यच्च समानन्यायमूह्यताम् ॥७८॥

इत्यस्मिन्न[न]न्तरोक्ते वाक्ये काव्ये त्यागस्य दानस्य गुणोत्कर्षः अतिशयः साधु सम्यक् परिस्फुटं क्रियाविशेषणं, लक्ष्यते प्रतीयते । तस्मात्तद्योगेनोत्कर्षवता गुणेनेदं काव्यं सर्वं सनाथमुदारमाख्यायत इति योज्यम् । प्रकारमिममन्यत्राति[दि]-शन्नाह– अनेनेत्यादि । अनेनैवोक्तेन पथा विधिना अन्यच्च परमपि समानः सदृशः न्यायः प्रकारो यस्य तत् समानन्यायमेवंजातीयकमू[ह्य]तां स्वयमनुगम्यताम् । दिशो दर्शितत्वाच्च शक्यमनुसर्तुमीदृशमिति भावः । तद्यथा—

त्वन्नामग्रहणादेव देव ! त्वदरियोषितः ।
शोकारुणानि चक्षूंषि वहन्ति विधवा इव ॥ इति ।

अपरप्रकारं दर्शयन्नाह–

श्लाघ्यैर्विशेषणैर्युक्तमुदारं कैश्चिदिष्यते ।
यथा लीलाम्बुजक्रीडासरोहेमाङ्गदादयः ॥७९॥

श्लाघ्यैरुत्कृष्टैर्विशेषणैरुपाधिभिर्युक्तं संगतमुदारं कैश्चिदि[29b]ति पौरस्त्यै-



रिष्यते । [तन्मते] तदप्यस्त्विति भावः । यथेत्युदाहरति । लीलार्थमम्बुजं, क्रीडार्थं सरः, हेममयमङ्गदमिति [सर्वत्र] मध्यपदलोपी समासः । लीलाम्बुजक्रीडासरो-हेमा[ङ्गदा...... आ]दिर्येषां ते । इमे श्लाघ्यविशेषणयुक्तप्रकारा लीलादीनां विशेषणानां श्लाघ्यत्वात् । तद्योगात् काव्यमुदारं द्रष्टव्यम् । आदिशब्देनादर्शभित्तिमणिमेखला-कुसुमस्रग्विभ्रममण्डनाङ्गलेखादिपरिग्रहः ॥

ओजः किंलक्षणमिति निर्दिशन्नाह–

ओजः समासभूयस्त्वमेतद्गद्यस्य जीवितम् ।
पद्येऽप्यदाक्षिणात्यानामिदमेकं परायणम् ॥८०॥

समासस्यैकार्थवृत्तेर्भूयस्त्वं बाहुल्यमित्यनूद्य ओजो विधीयते । तदेतदोजः समासबाहुल्यलक्षणं गद्यस्योक्तरूपस्य जीवितं हृदयं सारं न पद्यस्य तत्प्रधानत्वाद्गद्य-स्येति । वैदर्भाणां दाक्षिणात्यानाम् । गौडानां तु इदमोज एकं केवलं परायणं शरणं पद्येऽपि विषये न केवलं गद्ये ततश्चात्रापि मतभेद इति ॥

तस्यैव प्रकारान्तरं विषयं च दर्शयन्नाह–

तद् गुरूणां लघूनां च बाहुल्याल्पत्वमिश्रणैः ।
उच्चावचप्रकारं सद् दृश्यमाख्यायिकादिषु ॥८१॥

तदोजः उच्चावचो व्याकुलः अनियतः प्रकारो गतिः प्रयोगो यस्य तदुच्चावच-प्रकारं सत् भवत् दृश्यं विज्ञेयमाख्यायिकादिषु गद्यप्रबन्धेषु । आदिशब्देन कथादि-परिग्रहः । कथमुच्चावचप्रकारान्तरं भवतीत्याह– गुरूणां संयोगपराणां दीर्घाणां च लघूनामक्षरा[30a]णां च बाहुल्येनोपचयेन अल्पत्वेनासञ्चयेन मिश्रणं समत्वेन चेत्येवं बाहुल्याल्पत्वमिश्रणैः कारणैरुच्चावचप्रकारम् । नियमाभावात् क्वचिद् गुरूणां बाहुल्यं लघूनामल्पत्वं; क्वचिल्लघूनां बाहुल्यं गुरूणामल्पत्वं, क्वचिदुभयेषां समत्वमितीयन्तः प्रकारा भवेयुरिति ॥

पौरस्त्यानामोजःपद्यविषयमुदाहरन्नाह–

अस्तमस्तकपर्यस्तसमस्तार्कांशुसंस्तरा ।
पीनस्तनस्थिताताम्रकम्रवस्त्रेव वारुणी ॥८२॥

वारुणी पश्चिमा दिक्। भातीति गम्यते। किंभूता ? अस्तस्य पर्वतस्य मस्तके शिरसि शिखरे पर्यस्तः पतितः समस्तो निरवशेषः, दिनपरिणतेः तत्र संहारात्। अर्कस्यादित्यस्यांशूनां रश्मीनां संस्तरः सन्तानो यस्यामिति समासबाहुल्यं सामान्येन दर्शितम्। विशे[षेण]तिप्रसङ्गात्। एवंविधा कथमिव भातीत्याह– पीनेत्यादि। पीने महति स्तने पयोधरे स्थितं सक्तम् आताम्रं लोहितं कम्रं कान्तं वस्त्रं वसनं यस्यास्तथेति भाति। इह लोहितत्वं शब्दोपात्तमाताम्रशब्दप्रयोगात्। पूर्वं तु न्यायोपात्तम्, अस्तपर्वतपतितानामादित्यरश्मीनां लोहितत्वाव्यभिचारात्। न चेदृशी नेयं यथोक्तं प्राक्। अत एवोक्तम्—

न हि प्रतीतिः सुलभा शब्दन्यायविलङ्घिनी।
[१. ७५]

अस्तपर्वतः स्तनसदृशो वारुण्याः। अर्कांशुसंस्तर[स्तत्र] पतितः ताम्रवस्त्रतुल्य - इति द्रष्ट[30b]व्यम्॥

इति पद्येऽपि पौरस्त्या बध्नन्त्योजस्विनीर्गिरः।
अन्ये त्वनाकुलं हृद्यमिच्छन्त्योजो गिरां यथा॥८३॥

इत्येवंविधा अहृद्या ओजस्विनीः समासबाहुल्यवतीः गिरः शब्दान् पद्येऽपि काव्ये, न केवलं गद्ये। बध्नन्ति रचयन्ति पौरस्त्या गौडाः। दाक्षिणात्या अपि कचिन् पद्येऽप्योजः प्रयुञ्जते। तत्तु विशेषविवक्षायां तुशब्दः। अनाकुलमगहनम्। अत एव हृद्यं सुभगम् ओजः कथितलक्षणम् इच्छन्ति प्रयुञ्जते इति॥

कीदृशं तदित्युदाहरति—

पयोधरतटोत्सङ्गलग्नसन्ध्यातपांशुका।
कस्य कामातुरं चेतो वारुणी न करिष्यति॥८४॥

वारुणी दिगपरा। किंभूता ? पयोधरो मेघः स्तनश्च। शब्दश्लेषोऽयम्। तस्य तटः एकदेशः स एवोत्सङ्गो मध्यभागः। तत्र लग्नः स्थितः सन्ध्यातपः। दिनपरिणतिः स एवांशुकं रक्तं वस्त्रं यस्याः सा तथाभूता कस्य नाम कामिनश्चेतश्चित्तं कामातुरं मन्मथाक्रान्तं न करिष्यति ? सर्वस्यैव करोति रागानुकूलत्वात्तस्या अवस्थायाः। तादृशमनाकुलं हृद्यमोजः प्रयुञ्जते वैदर्भाः।



सलीलहसितज्योत्स्नाकीलिताधरपल्लवः।
मुखं मृगदृशां कस्य हृदयं न हरिष्यति॥

धाविता अपि ते दन्ताः श्यामा मुग्धे मुधा श्रमः।
मुखामोदरसोरभाकृष्टप्रतिबिम्बितषट्पदाः॥

विदग्धमधुरस्निग्धमुग्धसम्भ्रान्तलोचनम्।
ललितभ्रूलतोल्लासहासहारि मुखं तव॥

इत्यपरमुदाहरणत्रयम्॥

कान्तं विभजय[31a]न्नाह—

कान्तं सर्वजगत्कान्तं लौकिकार्थानतिक्रमात्।
तच्च वार्ताभिधानेषु वर्णनास्वपि दृश्यते॥८५॥

सर्वस्य वैदर्भस्येतरस्य वा जगतो जनस्य कान्तं मनोहरं यत् तत् कान्तं विज्ञेयमिति विधिः कुत एवमित्याह– लौकिकार्थानतिक्रमादिति। लोकविदितोऽर्थो लौकिकम्। तस्य लौकिकस्यार्थस्याभिधेयस्यानतिक्रमात् अनुवृत्तेः कारणात्। लौकिकार्थानुवृत्तेर्हि काव्यं साधारणं सर्वेषां कान्तं भवति। तस्य विनियोगविषयं दर्शयन्नाह– तच्चेत्यादि। तच्च कान्तम्। अर्थान्तरसमुच्चये चकारः। तदाह– वार्ताभिधानेषु प्रवृत्तिनिवेदनेषु वर्णनास्वपि वस्तुगुणोद्भाविनीषु च दृश्यते प्रयुज्यते॥

तदुदाहरति—

गृहाणि नाम तान्येव तपोराशिर्भवादृशः।
सम्भावयति यान्येवं पावनैः पादपांसुभिः॥८६॥

केनचित् तपोधनेन कश्चिद् गृहमेधी स्वगृहागतेन वार्ताप्रष्टः सन् अभिधत्ते गृहाणि गेहानि नाम तान्येवोच्यन्तेऽर्थतो नामतश्च नान्यानि। अत एव नामेत्युक्तम्। संभावनायां वा नामशब्दः। कतमानि ? यानि गृहाणि एवमागमनोत्सवेन पादपांसुभिश्चरणरेणुभिः पावनैः पवित्रैः जाह्नवीजलैरिव संभावयति मानयति पुनाति भवादृशः त्वद्विधः तपोराशिः साक्षाद्धर्मसञ्चयः। तथाभिधं वार्ताभिधानं सर्वजगत्कान्तं लौकित्वात् तादृशस्यार्थस्य। उक्तं च—

अग्निचित् कपिला स[त्री] राजा भिक्षुर्महोदधिः ।
[31b] दृष्टा माता पुनन्त्येते त्वं पुनः स्मरणादपि ॥ इति ।

अनयोरनवद्याङ्गि स्तनयोर्जृम्भमाणयोः ।
अवकाशो न पर्याप्तस्तव बाहुलतान्तरम् ॥८७॥

अनवद्याङ्गि सर्वाङ्गसुन्दरि ! अनयोः तव स्तनयोः जृम्भमाणयोः परिवर्द्धमाणयोः बाहुलतान्तरं हृदयं पर्याप्तः परिपूर्णः अवकाशः स्थानं [न] भवति । स्वल्पमेतत्स्थानं यत् बाहुलतान्तरं नाम । अतिमात्रस्तनोन्नत्याद् इत्ययमपि लौकिक एवार्थः । ततः सर्वजगत्कान्तमीदृशं वर्णनमिति ॥

कीदृशं सम्भाव्यते येन सर्वजगत्कान्तं स्यादिति चेदाह—

इति संभाव्यमेवैतद्विशेषाख्यानसंस्कृतम् ।
कान्तं भवति सर्वस्य लोकयात्रानुवर्तिनः ॥८८॥

इति परत इदमेवंविधं विशेषाख्यानसंस्कृतं संभाव्यं नैव लोके न सम्भाव्यत एव लौकिकार्थानुसारेण प्रयुक्तत्वात् । प्रकृतापेक्षया तयोर्विशेषः पादपांसूनां च पावनत्वं स्तनयोश्च तादृशविजृम्भनं विशेषोऽतिशयः तस्याख्यानेनोद्भावनेन संस्कृतं व्युत्पन्नम् । विशेषो वा आख्यायते येन तदेव संस्कृतं सुप्रयुक्तत्वात् । काव्यं सम्भाव्यमिति प्रकृतम् । ततश्च लोकयात्रानुवर्तिनः लोकार्थानुसारिणः सर्वविदग्धस्येतरस्य वा जनस्य कान्तं मनोहरम्, तादृशं काव्यं भवति जायते ।

अद्य जाता वयं देव प्राप्ताः सर्वाश्च सिद्धयः ।
यद्देवं पुण्यया स्पृष्टा दृष्ट्या स्मितप्रसन्नया ॥

[प्र]पश्यात्मानमेतस्मिन्नुज्ज्वले गण्डमण्डले ।
दर्पणानयनभ्रान्त्या तन्वि किं दूयसे मुधा ॥

इति अ[32a]परमुदाहरणयुगलम् ॥

गौडाभिमतं वार्ताभिधानं वर्णनं च दर्शयन्नाह—



लोकातीत इवात्यर्थमध्यारोप्य विवक्षितः ।
योऽर्थस्तेनातितुष्यन्ति विदग्धा नेतरे जनाः ॥८९॥

लोकातीतोऽलौकिक इव लोकरञ्जनात् । व्युत्पन्नास्तु रज्यन्ते । अत एव इवशब्दप्रयोगः । योऽर्थोऽत्यर्थमतिमात्रमध्यारोप्यते परिकल्प्यते, यथा च सर्वजगत्कान्तं काव्यं जायते । अध्यारोपमात्रं तु पूर्वस्मिन्नपि विद्यते इति अत्यर्थमित्युक्तम् । विवक्षितः प्रयुक्तः काव्यरूपेण तेन तथाविधेनार्थेन अभिधेयेन तथाविधार्थानुवर्तिना काव्येनेति यावत् । विदग्धा व्युत्पन्ना अतितुष्यन्ति अनुरज्यन्ते सुतरां तथाविधोक्त्या, अहतबुद्धित्वात् । इतरेऽविदग्धा नातितुष्यन्ति, तादृशामभावितस्वभावत्वात् । असंभाव्यमेतदतिप्रसङ्गोऽयमिति नानुरज्यन्ते इत्यर्थः । अत एव सर्वजगत्कान्तं न भवति, विदग्धानामेव रञ्जनात् । यथेत्युदाहरति—

देवधिष्ण्यमिवाराध्यमद्यप्रभृति नो गृहम् ।
युष्मत्पादरजःपातधौतनिःशेषकिल्बिषम् ॥९०॥

देवायतनमिव यथा अद्य प्रभृति एतद्दिनमारभ्य नोऽस्माकं गृहमिदमाराध्यमुपास्यं पूजनीयं कृतम् । युष्माकं पादयोश्चरणपद्मयो रजसां रेणूनां पातेन संसर्गेणावमर्षणेन धौतमपनीतं निःशेषं समस्तं किल्बिषं पापं यस्मिंस्तथा । यत एवं तस्मादाराध्यमिति प्रकृतम् । वार्ताभिधानमात्रमीदृशमलौकिकार्थमेव । ततश्च सर्वजगत्कान्तमिति ॥

अल्पं निर्मितमाकाशमनालोच्यैव वेधसा ।
इदमेवंविधं भावि भवत्याः स्तनजृम्भणम् ॥९१॥

इदं प्रत्यक्षम् एवंविधमतिशयं भवत्याः तव स्तनयोर्जृम्भणं व्यापनं भावि भविष्यत्कालापेक्षया अनालोच्यादृष्ट्वैवाल्पं संकीर्णं यथा न मातः स्तनौ, आकाशं व्योम निर्मितं विहितं वेधसा विधिना यद्यालोचयिष्यन्नैवं स्तोकमाकाशं निरमास्यत् प्रथमं तावत् जातवेदा इति वर्णनमसंस्कृतमेव । नेदृशं सर्वजगत्कान्तं । लौकिकार्थातिक्रमात् ॥

किं तर्हीदमुच्यत इति आह—

इदमत्युक्तिरित्युक्तमेतद्गौडोपलालितम् ।
प्रस्थानं प्राक्प्रणीतं तु सारमन्यस्य वर्त्मनः ॥९२॥

इदमीदृशमनन्तरोक्तं काव्यमत्युक्तिरित्युक्तमाख्यायते तज्ज्ञैरिति अत्युक्तिर्नामेद-मित्यर्थः । एतदिदमनन्तरोक्तं गौडैः पौरस्त्यैरुपलालितमिष्टमत्यन्तं न वैदर्भसंमत-मित्याह– प्रस्थानमित्यादि । प्राक्प्रणीतं पूर्वमुदाहृतं गृहाणि नामेत्यादि प्रस्थानं प्रकारः सारं जीवितमन्यस्य वैदर्भस्य वर्त्मनो मार्गस्य । तादृशं दाक्षिणात्यैः प्रयु[ज्य]त इति यावत् ॥

समाधिमधिकृत्याह—

अन्यधर्मस्ततोऽन्यत्र लोकसीमानुरोधिना ।
सम्यगाधीयते यत्र स समाधिः स्मृतो यथा ॥९३॥

अन्यस्य वस्तुनः प्रकृतापेक्षया । धर्मः गुणः प्रसिद्धस्ततस्तस्मान्मुख्यादन्यत्र गौणविषये सम्यक् साधु । लोकसीमानुवर्तित्वमेव सम्यक्त्वमिह द्रष्टव्यम् । आ-धीयतेऽध्यारोप्यते यत्र । केन ? लोकसीमानुरोधिना लोकप्रतीत्यनुवर्तिना कविना । यथा लोकप्रतीतिः समाद[33a]धीत नान्यथेत्यर्थः । स एवंविधो धर्मः समाधिर्नाम काव्ये स्मृतो विज्ञेय इति विधिः । समाधीयतेऽध्यारोप्यते यस्मिन्निति समाधिः समारोप-विषय उच्यते । यद्यपि समाधीयमानाद्धर्मादन्यो नास्ति समाधिः तथापि सामान्य-विशेषभावेन भेदविवक्षया यत्रान्यधर्मः समाधीयते तत् समाधिरित्युक्तम् । गौणशब्द-व्यवहारः काव्योपयोगी समाधिरिति यावत् । यथेत्युदाहरति ॥

कुमुदानि निमीलन्ति कमलान्युन्मिषन्ति च
इति नेत्रक्रियाध्यासाल्लब्धा तद्वाचिनी श्रुतिः ॥९४॥

कुमुदानि कैरवा निमीलन्ति निमिषन्ति कमलानि पद्मानि उन्मिषन्ति चेत्यत्र कतमो धर्मः समाहितः इत्याह– नेत्रेत्यादि । नेत्रस्य क्रिया निमेषोन्मेषलक्षणा प्रसिद्धो धर्मः तस्मात्ततोऽन्यत्र कुमुदादिषु अध्यासात् स[..]... समारोपात् कारणात् । तद्वाचिनी नेत्रक्रियाभिधायिनी श्रुतिर्निमीलन्तीत्यादिका लब्धा प्राप्ता प्रयुक्तेति यावत् । अर्थानुगामित्वाच्छब्दस्य इत्येवंभूतो भाक्तः शाब्दो व्यवहारः काव्ये समाधिनाम्ना ख्यायते ॥



कश्चिद्धर्मः गौणविषय एव शोभते काव्ये न मुख्यगोचर इति दर्शयन्नाह—

निष्ठ्यूतोद्गीर्णवान्तादि गौणवृत्तिव्यपाश्रयम् ।
अतिसुन्दरमन्यत्तु ग्राम्यकक्षां विगाहते ॥९५॥

निष्ठ्यूतं वान्तम् , उद्गीर्णं च । आदिशब्देन रिक्तादिपरिग्रहः । तदीदृशं वचनं गौणी प्रधा[33b]नेतरा निरूढविषयाद्विषयान्तरपरिग्रहलक्षणवृत्तिप्रयोगरूपा व्यपाश्रयो यस्य तत्तथा । गौणमिति यावत् । अतिसुन्दरमत्यन्तमनोहरमलंकार-रूपत्वात् । अन्यत्तु इतरत् पुनः गौणवृत्त्यव्यपाश्रयात् मुख्यमिति यावत् । ग्राम्य-कक्षाम् असभ्यपदवीं विगाहते प्रतिपद्यते । ग्राम्यमहृद्यमिति काव्ये तदुक्तेरनुचितत्वा-दिति भावः ॥

तदुदाहरति—

पद्मान्यर्कांशुनिष्ठ्यूताः पीत्वा पावकविप्रुषः ।
भूयो वमन्तीव मुखैरुद्गीर्णारुणरेणुभिः ॥९६॥

पावकविप्रुषः तेजःकणिकाः अर्कांशुभिरादित्यकिरणैर्निष्ठ्यूता निरस्ताः पीत्वा भूयोऽत्यर्थम् । अतश्च वमन्तीव उद्गिरन्तीव पद्मानीत्युत्प्रेक्षते मुखैरुद्गीर्णा मुक्ताः अरुणा लोहिताः रेणवः परागा यैरिति विग्रहः । उत्प्रेक्षाबीजमनेन सूचितम् । सूर्योदये हि विकसन्ति पद्मानि तेजःकणान् पिबन्तीव लक्ष्यन्ते रक्तान्परागान्मुञ्चन्ति च पीतानग्निकणान् वमन्तीव दृश्यन्ते । निष्ठीवनादिकं हि सचेतनकर्तृकं श्लेष्मादिकर्मकम् । मुख्यकाव्ये च तादृशमनुचितम् । इह त्वर्कांशुपद्ममुखकर्तृकं तेजो रेणुकर्मकं प्रयुक्तमिति अतिसुन्दरम् । सचेतनकर्मकमपि यदि गौणकर्तृकं प्रयुज्येत तदा न ग्राम्यम् । यथा—

निष्ठ्यूतमिति [34a] नाम भाषसे हृदयगतां मुदमुद्गिरन्निति ॥

इति हृद्यमहृद्यं तु निष्ठीवति वधूरिति ।
युगपन्नैकधर्माणामध्यासश्च मतो यथा ॥९७॥

इतीदृशं गौणं हृद्यम् अतिसुन्दरम् । अहृद्यं तु ग्राम्यं पुनरुच्यते– निष्ठीवति वधूरिति सचेतनायाः ष्ठीवनं मुख्यं प्रसिद्धमेव । एकधर्मसमाधिरयं दर्शितः । युगपत्

एककालम् नैकेषां बहूनां धर्माणां क्रियादिरूपाणामध्यासः समाधिश्च मत इष्यते। चकार उक्तसमुच्चये। यथेत्युदाहरति ॥

गुरुगर्भेत्यादि—

गुरुगर्भभरक्लान्ताः स्तनन्त्यो मेघपङ्क्तयः।
अचलाधित्यकोत्सङ्गमिमाः समधिशेरते ॥९८॥

गुरुर्गृहीतसारत्वात् गर्भोऽन्तर्भागः स एव भरो भारः दुर्वहत्वात् तस्य वा भरोऽवसादः। तेन क्लान्ता ग्लानाः स्तनन्त्यः क्लान्त्यनुरूपं शब्दं कुर्वाणाः मेघपङ्क्तयः पयोदमाला इमा एता अचलस्य पर्वतस्य अधित्यकायाः उपरिभूमेरुत्सङ्गंःसमधिशेरतेऽध्यासते ॥

कियन्तोऽत्र धर्मा अध्यस्ता इति दर्शयन्नाह—

उत्सङ्गे शयनं सख्याः स्तननं गौरवं क्लमः।
इतीमे गर्भिणीधर्मा बहवोऽन्यत्र दर्शिताः ॥९९॥

सख्याः कस्याश्चित् उत्सङ्गे शयनं स्तननमार्तरुतं गौरवं "गर्भकृत[दुर्भरत्व]ादिलक्षणं तत्कृतश्च क्लमः ग्लानिरित्येते गर्भिण्या अन्तर्वत्न्या धर्माः प्रसिद्धा बहवोऽनेके अन्यत्र मेघपङ्क्तिषु........दर्शिता अध्यस्ता इत्ययमनेकधर्मसमाधिः ॥

समाधिः सोऽयं व्यापकः सुभगश्चेति [34b] प्रशंसामुखेन निगमयन्नाह—

तदेतत् काव्यसर्वस्वं समाधिर्नाम यो गुणः।
कविसार्थः समग्रोऽपि तमेनमनुगच्छति ॥१००॥

तदेतदनन्तरोक्तं काव्यस्य यथोक्तस्य गद्यपद्यमिश्रात्मकस्य सर्वस्वं सारं तत्परायणत्वात्काव्यस्येति सामान्योक्तिरियम्। किं तदिति निर्भिनत्ति। समाधिर्नाम यो गुण इति योऽयमनन्तरं विभक्तः समाधिर्नाम समाधिसमाख्यो गुणो धर्मस्ततश्च समग्रः सर्वोऽपि नैक एव, कविसार्थः कविजनः तमेनं प्रकृतं समाधिमनुगच्छति समाश्रयति प्रयुङ्क्त इति यावत्। ततश्चोभयोरपि वर्त्मनोरयं साधारण इतीदमपि प्रायो गुणेषु संगृहीतं दृष्टमिति ॥



तदेवं प्रस्फुटान्तरत्वं मार्गयोर्यथाप्रतिज्ञातं प्रसाध्य निगमयन्नाह—

इति मार्गद्वयं भिन्नं तत्स्वरूपनिरूपणात्।
तद्भेदास्तु न शक्यन्ते वक्तुं प्रतिकवि स्थिताः ॥१०१॥

इति यथोक्तेन प्रकारेण मार्गद्वयं वैदर्भो गौडीयश्च मार्गः भिन्नं प्रस्फुटान्तरम्। कुतः? तस्य मार्गद्वयस्य स्वरूपम् अविपरीतस्वभावः, श्लेषादिस्वरूपं विदर्भमार्गस्य तद्विपर्ययस्वरूपं गौडीयस्य। तस्य निरूपणात् विवेचनात् यथाविहिताद् हेतोः। यदि मार्गद्वयं विविच्यते यथावत् ततो लभ्यते परिस्फुटमन्तरम्। ये तु न विजानन्ति तैरेकीकृतमेतत्। ततश्चाभेदोऽत्र समारोपितः। भेदस्तु वास्तव इत्याकूतम्। यथोक्तं प्राक्। कियन्तस्तर्हि प्रभेदा वैदर्भमार्गस्य कियन्तो वा [35a] गौडीयस्य यतः परिस्फुटमन्तरं भेदसामान्यप्रविशेषमिदं तदिति गम्यत इत्याह– तद्भेदास्त्वित्यादि। तुशब्दोऽर्थान्तरविवक्षायाम्। तस्य मार्गद्वयस्य भेदा अवान्तराः प्रकाराः। यथोक्तसामान्यलक्षणान्यस्ता अनन्ताः गवाश्वप्रभेदवत्, किमाश्रयाः? प्रतिकवि स्थिताः कविं कविं प्रति प्रतिकवि। ये केचिदिह कवयः सम्भवन्ति मार्गद्वयानुसारिणस्ते तदाश्रया इतस्ततो व्यवस्थिताः। न तु क्वचिदेकत्र परिसंख्यातास्तिष्ठन्ति। तस्मात् वक्तुं साकल्येन विवरीतुं न शक्यन्ते आनन्त्यादिति भावः ॥

यदि तावत्सन्ति किं न वक्तुं शक्यन्ते? वक्तुमशक्यास्तु न सन्त्येव ते। ततश्च यथोक्तमपि भेदसामान्यमसदिव।

निर्विशेषं च सामान्यं भवेच्छशविषाणवत्।

इत्येव शङ्कानैकान्तिकमेतत्। सतोऽपि कथञ्चिद् वक्तुमशक्यस्य दर्शनादिति प्रतिपादयन्नाह—

इक्षुक्षीरगुडादीनां माधुर्यस्यान्तरं महत्।
तथापि न तदाख्यातुं सरस्वत्यापि शक्यते ॥१०२॥

इक्षुक्षीरगुडद्राक्षादीनां मधुरद्रव्याणां माधुर्यस्य सामान्यधर्मस्य प्रतिद्रव्यं विशेषात्मना अन्तरं भेदो महत् परिस्फुटम्। तथापि तदन्तरं सरस्वत्यापि वागधिदेवतयापि आख्यातुं वक्तुं विभागेनास्येदृशं माधुर्यमस्येदृशमिति न शक्यते। प्रागेवान्येन। केवलमनुभवगम्यं तत्। सामान्यशब्देन मधुरमिति तु व्यपदिश्यते। यद्यपीक्षो-

रन्यादृशं माधुर्यं क्षीरस्यान्यादृशमित्यादि कथ्यते तथापि न तथा शब्दाद् गम्यते यथानुभूयते परिस्फुटं तदन्तरम। न चैतावता तदसदेवानुभव[35b]सिद्धस्य दुरपह्न[व]त्वात्। तथा मालतीमल्लिकाचम्पकपाटलादीनां सौरभ्यस्य महदन्तरं तथापि न तत्तथा वक्तुं शक्यते, यथानुभूयते। तथाविधा हि वाचिका शक्तिः सामान्यैकता नाम। को नु पर्यनुयुज्यताम्? यथोक्तमाचार्यधर्मकीर्तिना सकलविद्वज्जनचूडामणिना—

तद्रूपं सर्वतो भिन्नं तथा तत्प्रतिपादिका।
न श्रुतिः कल्पना [वा]स्ति सामान्येनैव वृत्तितः। इति॥
[प्रमाणवार्त्तिके ३. ६०]

यथा सुरभिकुपुम[ान्तर्भूतं] पारिजातं स्यात्। यदुक्तं सरस्वत्यापि च वक्तुं न|शक्यत इति, [तत् साधु,] तथापि वाचकशब्दशक्तेरन्यथा कर्तुमशक्यत्वात्। तदेवं मार्गद्वयस्य प्रभेदाः यद्यपि प्रतिकवि स्थिता विद्यन्ते वस्तुतस्तथापि वक्तुमान[न्त्या]त्...... अतिप्रसङ्गाच्च न शक्यन्ते विशेषेण प्रत्येकम्। नैतावता न सन्त्येव। सामान्येन तु मार्गद्वयस्य वैलक्षण्यं दर्शितमेव व्यक्तम्। प्रतिव्यक्ति तु वक्तुं को नाम शक्नुयात्। सर्वत्रैव लक्षणशास्त्रे सर्वभेदव्यापि सामान्यलक्षणमुच्यते। न तु तद्भेदाः परिसंख्यायन्ते। अत्रापि सैव व्यवस्था काव्यलक्षणशास्त्रत्वादस्य। न तु यथोक्तं सामान्यं भेदलक्षणपरिस्फुटाभमनुसरद्भिरभियुक्तैस्ते भेदा मार्गद्वयसंभविनो विवेचयितुं शक्यन्ते। यथेदृशं नीलमीदृशं पीतमिति व्युत्पादिते[36a]न भेदलक्षणेन व्यक्तमुभयसम्भविनः प्रतिभेदा यथादर्शनं विभज्यन्ते इत्यलं विस्तरेण॥

सेयं काव्यलक्षणप्रयोजनस्वभावा काव्यगुणदोषविवेकरूपा व्युत्पत्तिर्यामभिसन्धाय क्रियाविधिं निबबन्धुः सूरयः, तस्य किं प्रयोजनमितीदानीमवसरं प्राप्य प्रयोजनं वर्णयन्नाह—

नैसर्गिकी च प्रतिभा श्रुतं च बहु निर्मलम्।
अमन्दश्चाभियोगोऽस्याः कारणं काव्यसम्पदः॥१०३॥

नैसर्गिकी स्वाभाविकी जन्मान्तराभ्यास[स]म्भविनी। सहजेति यावत्। प्रतिभा हेयोपादेयपरिच्छेदलक्षणा। सा च प्रकरणात् काव्यविषया। सहजा शक्तिरियम्। उत्पाद्यां दर्शयन्नाह– श्रुतं चेत्यादि। श्रुतं काव्याङ्गविद्याश्रवणं श्रुतमयं तच्च



व्याकरणक्रियाकल्पछन्दोविचित्याद्यनेकविद्याविषयत्वात्, अनेकशः प्रवृत्तत्वाच्च बहु पर्याप्तं निर्मलं परिशुद्धम्, आम्नायविशुद्ध्या सन्देहविपर्यासविरहात्। एवं श्रुतमयं ज्ञानं परिपूर्णमभिधाय चिन्तामयं भावनामयं च दर्शयन्नाह– अमन्दश्चाभियोग इति। श्रुतस्य चिन्तनमूहापोहमुखेन यथाम्नायमविपरीतार्थनिश्चयनम्। निश्चितस्य च भावनमभ्यासः आवृत्तिः स्थिरीकरणमिति द्विविधोऽभियोगः अभ्यासः। स चामन्दः पर्याप्तः यावद्भावितत्वात्। तदेतत्त्रयरूपा काव्यविषया व्यु[त्प]-[36b]त्तिः। एवं हि काव्यं व्युत्पन्नं भवति यदि तदङ्गं विद्यास्थानं श्रुतं चिन्तितं भावितं च यथावद् भवेत्। अन्यथा कीदृशी काव्यव्युत्पत्तिः सर्वत्रोपायव्युत्पत्तिलक्षणत्वादुपेयव्युत्पत्तेः। [तदृते चो]पेयव्युत्पत्तिरसूत्रपटात् न हीयते। अभिमानमात्रं तु विजृम्भताम्! कस्तस्य निषेद्धा? तदेवंविधाः काव्यव्युत्पत्तिः कारणं काव्यसम्पदः काव्यरचनाया निरवद्यायाः हेतुः। अस्याः प्रस्तुताया यदर्था काव्यव्युत्पत्तिः! परकीयकाव्यपरिज्ञानं तु सुलभमेवेदृशीं काव्यव्युत्पत्तिमाश्रितवता। ततश्च कीर्तिलाभः सत्कारः अन्यो वा पुरुषार्थ इति गम्यत एव। वक्ष्यति च कीर्तिमीप्सुभिः [१. १०५]इति॥

ननु केचिदेव सहजशक्तियुक्ताः। तत्किमिदानीं मा भूदन्येषामिह प्रवृत्तिः? येनोच्यते नैसर्गिकी च प्रतिभेत्यत्र आह—

न विद्यते यद्यपि पूर्ववासना–
गुणानुबन्धि प्रतिभानमद्भुतम्।
श्रुतेन यत्नेन च वागुपासिता
ध्रुवं करोत्येव कमप्यनुग्रहम्॥१०४॥

पूर्ववासना जन्मान्तराभ्यासाहितः संस्कारः अभ्यासानुबन्धित्वात्। यथोक्तमाचार्यशूरेण—

अभ्यासयोगेन शुभाशुभानि
कर्माणि सात्म्यैव भवन्ति पुंसाम्।
तथाविधान्येव यदप्रयत्ना–
ज्जन्मान्तरे स्वप्न इवाचरन्ति॥ इति।
[जातकमालायाम् पृः ६५]

15. Matsyajātaka 1

पूर्वा चासौ पूर्वजन्मभावितत्वात्, वासना चेति विग्रहः। सैव गुणो विशेषः, सद्भिः स्तुतत्वात्। [37a] तस्या वा गुणः यथाप्रत्ययं प्रबोधः स्वानुरूपकार्यजननाभिमुखलक्षणो विशेषस्तं हेतुभावेन अनुबध्नाति अपेक्षत इति पूर्ववासनागुणानुबन्धि। प्रतिभानं प्रज्ञा तच्च प्रकरणात् काव्यविषयकम्। 'अद्भुतमाश्चर्यं लोकस्य कथमीदृशं प्रतिभानं यथेति विस्मयजनकत्वाद् दुर्लभं वाद्भुतम्। नैसर्गिकी प्रतिभेति यावत्। यद्यपि[ने] विद्यते येषां तैरपि काव्याभ्यासः करणीयः। एवं नासौ निष्फला भविष्यतीत्याह– श्रुतेनेत्यादि। श्रुतेन काव्याङ्गविद्याविषयेण श्रवणेन बहुना निर्मलेन। यथोक्तं प्राक्। यत्नेन चाभियोगेन अमन्देन यथोक्तं पूर्वम्। करणेन हेतुना पुरुषेणोपासिता समाराधिता अभ्यस्तेति यावत्। वाक् काव्याङ्गक्रियाकल्पादिविद्यालक्षणविशिष्टा अर्थात्प्रकरणाद्वा तदन्यथानुपपत्त्या काव्यसम्पदोऽर्थः सामर्थ्यम्। काव्यव्युत्पत्तिप्रस्तावः प्रकरणम्। यथोक्तम्—

अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः।
सामान्यवाचिशब्दानां विशेषस्थितिहेतवः ॥ इति।
[ तुल° वाक्यपदीयम् ]

अपरन्यायो यथासम्भवमिह सर्वोऽनुसर्तव्यः सामान्योक्तिभूयस्त्वात्। कमपि कञ्चित् सहजशक्त्यविरहे यादृशं तत्कल्पमनुग्रहं काव्यरचनासाम[र्थ्यदान]लक्षणम्। ध्रुवमवश्यं करो[37b]त्येव उपासितुः पुरुषस्य। नात्र सन्देहः। तस्मान्नैसर्गिकी प्रतिभा नास्ति ममेति नोपासितव्यैव सरस्वती। कामधेनुरवश्यमेवानुग्रहीष्यतीति [ध्येयम्] ॥

तदस्ततन्द्रैरनिशं सरस्वती
श्रमादुपास्या खलु कीर्तिमीप्सुभिः।
कृशे कवित्वेऽपि जनाः कृतश्रमा
विदग्धगोष्ठीषु विहर्तुमीशते ॥१०५॥

यत एवं न निष्फलं वागुपासनं तत्तस्मात् कारणात् अस्ततन्द्रैरनलसो भूत्वा अनिशम् अनवरतम् अभियोगाविच्छेदात् क्रमात् श्रुतचिन्ताभावनाक्रमेण सम्प्रदायसाद्गुण्यार्थवर्तिना यथोक्तं प्राक्। उपास्या समाराध्या। अभ्यसनीया यावत्प्रसीदति। यथोक्तमाचार्यमातृचेटेन—



अधीत्य तावत् खिलमेव भिद्यते
कृपिस्तु तस्य श्रमणाद्विभाव्यते।
ततः स्वचिन्तामयबीजमुप्यते
विचारणाङ्गस्तु विवर्द्धतेऽङ्कुरः ॥
ततः प्रसादोत्तमसस्यमाप्यते
विधानपर्याप्तममन्दनिश्चयैः ॥ इति।

सरस्वती काव्याङ्गविद्यालक्षणा प्रकरणादेर्यथोक्तं प्राक्। खलु [ए]कान्तेन असंशयम् वा। कीर्तिः परिशुद्धकाव्यक्रियालक्षणा पूर्वोक्ता, काव्यसम्पदः एकान्तेन कीर्तिहेतुत्वात्। आवर्तते स एवार्थः पुनरर्थान्तराश्रयादिति न्यायात्। तत्सम्भवा ख्यातिर्वा, गुणेभ्य एव प्रभवन्ति कीर्तय इति वचनात्। तामनश्वरीं सत्पुरुषतनुमशेषजनसुभगां व्यापिनीं गुणाधिराजवैजयन्तीमीप्सुभि[रवाप्तु]कामैः पु[38a]रुषैः। उपास्येति प्रकृतम्। तथा लाभसत्कारादिकमपि द्रष्टव्यम्। न तु ['सा वासना] मम नास्तीति आलस्यमालम्बनीयं तस्यानर्थहेतुत्वात्। यथोक्तमाचार्याश्वघोषेण—

आलस्यं यदि न भवेज्जगत्यनर्थः
को विद्वानिह न भवेद्धनेश्वरो वा ॥
आलस्य[ा]दवनिरियं ससागरा [हि]
संपूर्णा नरपशुभिश्च निर्धनैश्च ॥
[ ]

अथ कथञ्चित् स्वयं काव्यक्रियालसश्चेतत् तादृशः तथापि परकाव्यकोविदः स्वयं च किञ्चित्करः तद्विदामादेयो भविष्यतीति सर्वथावैफल्यपरिहारमाह– कृश इत्यादि। कवित्वे स्वयं काव्यकरणे कृशे मन्देऽपि सति सर्गबन्धाद्यनिर्वहणात्। कृशे वा असति कवित्वेऽपि मुक्तकादेरपि अकरणात्। तथापि दर्शनात्। भिन्ना हि शक्तिः पुंसाम्। यथोक्तम्—

एकस्तावद् रचयितुमलं श्रोतुमेवापरस्ता-
मन्यः कर्तुं तदुभयमपि ज्ञातुमेकोऽभियुक्तः।
नत्वेकस्मिन्नतिशयवतां सन्निपातो गुणाना-
मेकः सूते कनकमुपलस्तत्परीक्षाक्षमोऽन्यः ॥ इति ॥

कृतश्रमा यथाविधानमुपासितवाचो जनाः पुरुषाः कृतोऽनुष्ठितः श्रमः श्रवणादिलक्षणो व्यवहारो यैरिति [38b] विग्रहः, परकाव्यकोविदत्वात्। विदग्धगोष्ठीषु विहर्तुमीशते। विदग्धाः कवयः तेषां गोष्ठीषु काव्यालापेषु विद्यारमणीमेखलानूपुर[शिञ्जितेषु] सकलकलानदीविश्रामसमुद्रेषु नानारसभावाभिनयमहानदेषु शब्दपारायणमहार्णवरत्नाङ्कुरेषु शास्त्रपरिश्रमफलोदयमहोत्सवेषु कविसागरामृतेषु बुधजनमनस्तस्करेषु विविधालङ्कारहारिषु वन्दनीयेषु विदग्धताभूमिसीमान्तेषु विद्वत्सरणिप्रपाभूतातिशयेषु स्वयंकृतेषु अध्यात्मशास्त्रकलाकौशलवर्णनेषु सतामुचितेषु तदेकरूपेष्वपि प्रतिपुरुषमपूर्वपरिणामितया परमात्मदेशीयेषु सरस्वतीप्रसादमहावरेषु लक्ष्मीपूजाभाजनेषु निरुद्वेगसुखस्वभावत्वात् कैवल्यकल्पेष्वतलभावगम्भीरत्वात् परार्थप्रसक्तिगुणयोगाच्च सागरेष्विव महाह्रदेषु सत्पुरुषचरितादर्शभित्तिषु यशःकुसुमामोदसुरभिषु महाकविकीर्तिस्तम्भेषु किं बहुना संसारसारसन्दोहेषु।

तदुक्तम्—

संसारविषवृक्षस्य द्वयमेवामृतं फलम्।
सुभाषितरसास्वादः सद्भिश्च सह सङ्गतम्॥ इति॥

विहर्तुमभिज्ञाततयाऽन्तर्भवितुमीश[39a]ते कल्पन्ते। अकृतश्रमाणां तु पल्लवग्राहिणामवलेपिनामनात्मविदां विदग्धगोष्ठीविहार उपहास एव स्यात्।··यथोक्तमाचार्यमातृचेटेन—

न पठ्यते साधुजनो न सेव्यते
न चिन्त्यते संसदि वक्तुमिष्यते।
तथाविधानामत एव भारती
दरिद्रलीलेव भृशं न शोभते॥

कथं कथामार्गमहामहोदधि-
तटाम्बुसेवासमयेऽप्यशिक्षिताः।
प्रवेष्टुमिच्छन्ति तदुत्तरोत्तर-
प्रकर्षपातालतलाश्रयां गतिम्॥



स्थिरोदकेषु व्यवदातविक्रम-
स्तरङ्गिणीं यः सहसा विगाहते।
नवाम्बुवेगोद्धतरोधसं गतिं
तृणाश्मनोरन्यतरां स गच्छति॥

सुदृष्टशास्त्रोऽपि हि सज्जनाकुले
विमृष्य साधुः सदसि प्रवर्तते।
वशीव सर्वत्र तु वीतसंभ्रमः
समुद्रमत्येव खलः स्ववाग्विषम्॥

पुनः प्रकर्षन्ति विशन्ति हृत् सतां
हरन्त्यवस्कन्द्य नरेद्रवद्धुरम्।
क्षिपत्यगाधेऽपि कथार्णवे मुखं
निपीतभूयिष्ठमिदं जगत् खलैः॥

विनागमं तद्विदुपासनं विना
विनाभियोगं प्रतिभागुणं विना।
विनाभिशापं मतिविभ्रमं विना
न वक्तुमिच्छा पुरुषस्य जायते॥ इति।

वरमेवमनधीतविद्यो न पु[न]र्दुरधीतविद्यः। यथोक्तमाचा[39b]र्यकम्बलेन—

यः सर्वथा[न्ध]स्तिमिराहतश्च
तयोर्वरं पूर्वक एव नूनम्।
अन्धोऽहमस्मीत्यवलेपशून्यो
न भा[नुद]क्तैमिरिकोऽभिमानी॥ इति॥

स्वयमेवमुपहतं तपस्विनमपरापरदूषणेच्छा बाधते। सेयमन्या विडम्बना। यथोक्तमाचार्यमातृचेटेन—

समातिरिक्तव्यसनी य एष सन्
परान् पराहन्त्यभिहत्य वाक्शरैः।
स पूतिनासा कुपितेन्द्रियः स्वयं
वृणोति दुर्गन्धभयेन नासिकाम्॥

परापचारेष्ववतीर्णदक्षचक्षुषा
निमीलिताक्षश्च यथेष्टचेष्टिते ।
रजस्वलाः सन्त इमे स्वयं कथं
किरन्ति लोकस्य रजांसि सूच[काः] ॥

यथातथा श[क्य]मिदं तितिक्षितुं
सदागसो यद्धि तुदन्त्यरुन्तुदाः ।
अदुष्टसन्दूषण[वैशसं तु] यत्
तदासु[रं] कस्य मनो न कम्पयेत् ॥

सतः प्रकाशानपि नेक्षते गुणान्
कुतोऽपि दोषानसतोऽवगच्छति ।
कुतस्तदीदृङ्नयनं समुद्गतं
यदीक्षतेऽसत् सति न प्रवर्तते ॥

तदप्यलं सोढुमपण्डिताज्जना-
दनीक्षमाणो हि [करोति दुःसहम्] ।
गुणान्तरज्ञस्तु जनोऽतिदुर्जनः
विहन्ति साधूंस्तदुपेक्ष्यतां कथम् ॥

गुणौघपुण्यस्य तु पक्षनं परं
गुणान्तरज्ञो जन एव केवलः ।
ततोऽपि यद्यापदियं समु[त्थि]ता
क तर्हि गच्छन्तु परायणा गुणाः ॥ इति ॥

[40a]कियदसच्चरितमलेन जिह्वां लिम्पामः । सेयं पूयतामत्यन्तशीते[न] प्रसन्नेन सुरभिणा भुवन[पावनेन] सच्चरितपुण्योदकेन ।

ऋजुस्वभावोऽपि च बध्यते शठै-
र्न दोषविन्नैव न चाप्यरुन्तुदः ।
नतो न सर्वत्र गतो न दीनता-
महो विचित्राः पुरुषस्य नीतयः ॥

परापवादेषु निरात्मवर्णनान्
गतो नियुक्तान्यगुणेषु वाग्मिताम् ।
रिपूनपि श्रेयसि धातुमीहते
मनस्विनश्चेयमलौकिकी स्थितिः ॥

यथा यथा दूषणतत्परः [पर]-
स्तथा तथा तद्गुणलापलालसः ।
नितान्तदाक्षिण्यमहामहोदधे-
र्मनस्विनः केयमतीव वामता ॥

प्रियंवदः क्षेपकृते क्षमापरः
[न कुप्यति] प्राणहरेऽपि दक्षिणः ।
अलौकिकं सर्वमितीदमीदृशं
महानुभावः कुत एष शिक्षितः ॥

प्रसन्नवाक्कायमनःक्रियापथः
पुनाति साक्षादिव धर्मसञ्चयः ।
श्रुतोऽथ दृष्टः समुदाहरन् गिरः
सुनीतगर्भाः सुजनः स्मृतोऽपि वा ॥

स एष साधुर्भुवनैकपावनः
प्रसन्नमृग्यः क्वचिदत्र दृश्यते ।
अपि स्थिरां प्रीतिमिम[ां] न संहरेत्
कलेर्गुणोन्मूलनधर्मवर्मितः ॥

पुनस्तथैव स्थितिरूर्जिताश्रया
गुणोत्सवानामपि नाम सम्भवेत् ।
गुणैश्च येषामिव सूर्यरश्मिभि-
र्व्यलीयतादो[40b]षविपक्षविक्रमः ॥

निवृत्तनिःशेषविशेषविप्लवं
परस्परं सद्गुणलोलुपं जगत् ।

यशस्करीं तां धुरमादिपोरुपां
पुनः प्रवृत्तां विदधातु शाश्वतीम् ॥

निरस्तदौर्गत्यसमृद्धिशीकरः
शुभोदयात्तृप्तसमस्तसज्जनः ।
पुनस्तथा सद्वरशास्त्रसंकथा–
विनोदरम्यः समय[ः] प्रवर्तताम् ॥

प्रकृतमिदानीं समाप्यताम् । तदेवं काव्यरचनाकीर्तये काव्यव्युत्पत्तये च काव्यलक्षणशास्त्रस्य प्रयोजनमिति ।

मतं खिलप्रायमिहास्ति दण्डिनः
तदेतदत्र प्रकृतं परिस्फुटम् ।
इतः पुरस्तात् सममेव वर्तते
तदत्र नास्माभिरभावितो विधिः ॥

अर्थप्रधाना प्रतिकर्मितेय–
मर्थान्वयाऽऽस्ते गणिकेव टीका ।
शब्दप्रधाना अपि लब्धवर्णा
[ भवन्ति निष्काः सुमनः]प्रसिद्धाः ॥

स्वयं निरामोदमपीह किञ्चन
प्रकर्षभूम्ना प्रथते सदाश्रयात् ।
प्रसिद्धतां पश्य जनेक्षणालयं
कलङ्कमिन्दोः कियतीमुपागमत् ॥

आचार्यदण्डिकृतौ काव्यलक्षणे मार्गविभागपरिच्छेदटीका रत्नश्रीर्नाम समाप्ता ॥[1]

---

[1]कृतिरियं सिंहलाचार्य रत्नश्रीज्ञानस्य ॥
सौजन्यगुणघोषस्य घोषलीग्रामसद्मनः ।
भदन्तबुद्धदेवस्य सानाथ्यमिदमीदृशम् ॥
घोषलीग्रामकायस्थदेवदत्तकृतात्मना ।
कृतमेतन्मया यत्नादीदृशं सदृशं धियः ॥



# अर्थालङ्कारो नाम द्वितीयः परिच्छेदः ।

[41b]वैशिष्ट्यमस्मिन् किमपीक्षमाणैः
सद्भिः समेत्य क्रियतां प्रयत्नः ।
इति प्रयुक्तः प्रयते नियोगं
तमेक आख्यातुमशक्तरूपः ॥

तदेवं मार्गविभागं [परिच्छिद्य संप्रत्यर्थ]लङ्कारं सर्वमार्गसाधारणं शासितुमुपक्रमते–

काव्यशोभाकरान् धर्मानलङ्कारान् प्रचक्षते ।
ते चाद्यापि विकल्प्यन्ते कस्तान् कार्त्स्न्येन वक्ष्यति ॥१॥

काव्यस्य पद्यगद्यमिश्रात्मकस्य यथोक्तस्य शोभां सौन्दर्यं कुर्वन्ति ये धर्मा गुणास्तान् । अनुवादोऽयम् । अलङ्कारान् प्रचक्षते कथयन्ति । तद्विद इति विधिः । ये केचित् काव्यशोभाकरा विशेषास्ते अलङ्कारा विज्ञेया इति यावत् । अलंक्रियते शोभां नीयते काव्यमेभिः शरीरनिष्ठहारादिभिरित्यलङ्काराः । एवंलक्षणा अलङ्काराः, कियन्तस्त इत्याह– ते चेत्यादि । ते चालङ्काराः किमपि दीर्घं कालमारभ्याद्यापि, इदानीं यावद्विकल्प्यन्ते प्रभिद्यन्ते, अभियुक्तैरयमयमिति प्रतिपुरुषमपरापरोक्तिविशेषानिवृत्तेः, न त्वियत्ता लभ्यते । ततश्च तानेवमनन्तालङ्कारान् कार्त्स्न्येन लक्षितान् कृत्स्नान् को नाम पुरुषोऽर्वाग्दर्शी इदानीन्तनदर्शी वक्ष्यति वक्तुं शक्नुयात् । नैव निरवशेषमभिधातुमीदृशः कश्चिदीष्ट इत्यर्थः ॥

यद्येवमानन्त्यात् कार्त्स्न्येन वक्तुं न शक्यन्ते, किमिदानीं क्रियतामित्याह–

किं तु बीजं विकल्पानां पूर्वाचार्यैः प्रदर्शितम् ।
तदेव प्रतिसंस्कर्तुमयमस्मत्परिश्रमः ॥२॥

किं त्वपि त्वित्यर्थान्तरविवक्षायां तदाह– बीजमित्यादि । विकल्पानामलङ्कारप्रभेदानां जात्युपमारूपकादीनां बीजं प्रतिनियतं सकलव्यक्तिव्यापि सामान्यं रूपम् । यतः प्रभेदा विविधास्तदनुसृताः प्रवर्तन्ते । पूर्वाचार्यैश्चिरन्तनैः काव्यलक्षणकारैः मेधाविश्यामवादि[प्रभृति]भिः प्रदर्शितम् निर्दिष्टं यत्तदेव नान्यत् । प्रतिसंस्कर्तुं संक्षेपेण

परिस्फुटं यथावदभिधातुमयं प्रक्रमः अस्माकं परिश्रमो यत्नो वर्तते, नतु सर्वमलङ्कारमभिधातुम्। आनन्त्यादशक्तेश्च। किं तु परिमिताः केचिदलङ्काराः पूर्वाचार्योपदिष्टाः प्रतिसंस्क्रियन्ते। तथा च वक्ष्यति–

पन्थाः स एष विवृतः परिमाणवृत्या
संक्षिप्यविस्तरमनन्तमलंक्रियाणाम् [२. २६७] इत्यादि ॥

पूर्वं श्लेषादयः शब्दालङ्कारा मार्गनियताः कथिताः। इदानीं सर्वमार्गसाधारणा अलंकारा उच्यन्त इति दर्शयन्नाह–

काश्चिन्मार्गविभागार्थमुक्ताः प्रागप्यलंक्रियाः।
साधारणमलङ्कारजातमन्यन्निरूप्यते ॥३॥

काश्चिदलंक्रियाः केचिदलङ्काराः श्लेषप्रसादादयः न सर्वाः, प्रागपि प्रथमे परिच्छेदेऽपि उक्ताः श्लिष्टा[दयः!] न केवलमिदानीमुच्यन्ते। प्राक् किमर्थमुक्ता इत्याह – मार्गविभागार्थमिति। मार्गयोर्वैदर्भगौडीययोर्विभागो विवेकः उक्तलक्षणः अर्थः प्रयोजनं यस्मिन् वचन इति क्रियाविशेषणम्।, श्लेषादिषु हि कथितेषु तत्स्वभावो वैदर्भमार्गः प्रतीयते। तद्विपर्ययस्वभावश्च गौडीय इति श्लेषाद्यलङ्कारवचनात् मार्गविभागो जायते। नान्यथेति श्लेषादिवचनं मार्गविभागार्थं सम्पद्यते। किमिदानीं वाच्यमित्याह– साधारणमित्यादि। वैदर्भादिषु सर्वमार्गेषु साधारणं सामान्यं न प्रागिवासाधारणम्। अलङ्कारजातम् अर्थालङ्कारवृन्दम् अन्यत् इदानीं निरूप्यते शिष्यत इति ॥

यथोद्देशं निर्दिदिक्षुस्तावदलङ्कारानुद्दिशति—

स्वभावाख्यानमुपमा रूपकं दीपकावृतो
आक्षेपोऽर्थान्तरन्यासो व्यतिरेको विभावना ॥४॥

समासातिशयोत्प्रेक्षा हेतुः सूक्ष्मो लवः क्रमः।
प्रेयोरसवदूर्जस्वि पर्यायोक्तं समाहितम् ॥५॥

उदात्तापह्नुतिश्लिष्टविशेषास्तुल्ययोगिता।
विरोधाप्रस्तुतस्तोत्रे व्याजस्तुतिनिदर्शने ॥६॥



सहोक्तिः परिवृत्त्याशोः संकीर्णमथ भाविकम्।
इति वाचामलङ्काराः स्मर्यन्ते पूर्वसूरिभिः ॥७॥

दीपकमावृतिरावृत्तिश्च औणादिक इकारः। समासश्च समासोक्तिः। अतिशयश्च अतिशयोक्तिः उत्प्रेक्षा च। उदात्तम्, अपह्नुतिः, श्लिष्टम्, विशेषश्च। विरोधोऽप्रस्तुत स्तोत्रं च। व्याजस्तुतिः निदर्शनं च, परिवृत्तिराशीः संकीर्णं च। अथ भाविकं च इत्येते यथोक्ताः अलङ्काराः उक्तलक्षणाः स्मर्यन्ते आम्नायन्ते पूर्वसूरिभिः आद्यैराचार्यैः रामशर्मादिभिः काव्यालङ्कारकारैः। कस्येत्याह– वाचामिति। काव्यानां सम्बन्धिनः ॥

तत्र स्वभावोक्तिं तावन्निदर्शयन्नाह—

नानावस्थं पदार्थानां रूपं साक्षाद् विवृण्वती।
स्वभावोक्तिश्च जातिश्चेत्याद्या सालंकृतिर्यथा ॥८॥

पदार्थानां वस्तूनां जातिक्रियागुणद्रव्याणां रूपं 'स्वभावम्। किंविशिष्टम्? नानावस्थं नाना विचित्रा न त्वेकैव काचित्, अवस्था दशा यस्य तादृशमनेकप्रकारं साक्षात् अञ्जसा अभिधानव्यापारेण न तु सामर्थ्यात्। विवृण्वती प्रकाशयन्ती सती या प्रवर्तते सा तादृश्यलंकृ[42b]तिः। आद्या प्रथमा अलङ्कारेष्विह स्वभावोक्तिर्नाम वेदितव्या, जातिर्नाम वा। अनेन संज्ञाद्वयेन अयमलङ्कारो व्यवह्रियते। स्वभावं पदार्थानां विचित्रं वक्तीति स्वभावोक्तिः। जातेः पदार्थस्वरूपस्य तथा तथा प्रतिपादकत्वेन तादर्थ्याज्जातिः। यथेत्युदाहरति। यथेदं तथान्यदपि तादृशं सर्वमेव द्रष्टव्यम्। न त्विदमेवेत्यर्थः। एवमुत्तरत्राप्यनुगन्तव्यम् ॥

तुण्डैराताम्रकुटिलैः पक्षैर्हरितकोमलैः।
त्रिवर्णराजिभिः कण्ठैरेते मञ्जुगिरः शुकाः ॥९॥

एते प्रत्यक्षवर्तिनः शुकाः तुण्डैः चञ्चुभिः आताम्रैः लोहितैः, कुटिलैः वक्रैश्च, पक्षैश्च हरितवर्णैः, कोमलैः मृदुभिः कण्ठैश्च, त्रिभिर्वर्णैः सितासितलोहितैः राजिभिः लक्षिताः। मञ्जुर्मधुरा गीः शब्दो येषां ते मञ्जुगिरः। इयं शुकजातेः पदार्थस्य विचित्रं स्वरूपं वक्तीति जातिस्वभावोक्तिरीदृशी द्रष्टव्या ॥

विशालाः श्रोणिषु क्षामा मध्ये दीर्घा विलोचने ।
पयोधरैरसंक्षिप्तैस्तास्तु रम्या वरस्त्रियः ॥

इत्यपरमुदाहरणम् ॥

[क्रि]यास्वभावोक्तिमुदाहरन्नाह—

**कलक्वणितगर्भेण कण्ठेनाघूर्णितेक्षणः ।**
**पारावतः परिक्षिप्य रिरंसुश्चुम्बति प्रियाम् ॥१०॥**

पारावतः प्रियां पारावतीं चुम्बति रिरंसू रन्तुकामः परिक्षिप्य परिभ्रम्य कलमव्यक्तमधुरं क्वणितं शब्दो गर्भोऽन्तर्वर्ती यस्मिन् तेन कण्ठेन लक्षितः । आघूर्णिते भ्रमिते ईक्षणे नेत्रे यस्य स तथा । इह क्वणनाघूर्णनादेः क्रियापदार्थस्य स्वभावः प्रकाश्यत इति क्रियास्वभावोक्तिरेवंविधा विज्ञेयेति ।

वेपते श्वसिति का[म्यत्यलं] पश्यति रोदिति ।
बिभेति हरति स्वाङ्गं बाला नवसमागमे ॥

इत्यपरमुदाहरणम् ॥

गुणस्वभावोक्तिं निदर्शयन्नाह—

**बध्नन्नङ्गेषु रोमाञ्चं कुर्वन् मनसि निर्वृतिम् ।**
**नेत्रे चामीलयन्नेव प्रियास्पर्शः प्रवर्तते ॥११॥**

प्रियायाः प्रणयिन्याः स्पर्शो गुणः पृथिव्यादिभूताश्रयत्वात् । स प्रवर्तते । कथम् ? अङ्गेषु प्रियस्य गात्रेषु रोमाञ्चं रोमहर्षं बध्नन् उत्पादयन् मनस्यन्तरात्मनि निर्वृतिं कुर्वन्नानन्दममन्दं सन्दधानः । नेत्रे च प्रियतमस्य दृशौ हर्षभरसञ्चरे आमीलयन् मुकुलयन्नेव । एष इत्यपि पाठः । प्रवर्ततामिति प्रकृतम् । अत्र स्पर्शाख्यस्य गुणपदार्थस्य स्वरूपं रोमाञ्चादि विचित्रं [43a]निर्वृत्तमिति गुणस्वभावोक्तिरियमेवंरूपा-अनुसर्तव्येति ।

अक्ष्णोराघूर्णनं वाक्यं स्खलद्रागं कपोलयोः ।
मदः करोति नारीणां भ्रुवोर्वल्गु च वल्गितम् ॥

इत्यपरमुदाहरणम् ॥



द्रव्यस्वभावोक्तिमुदाहरति—

**कण्ठे कालः करस्थेन कपालेनेन्दुशेखरः ।**
**जटाभिः स्निग्धताम्राभिराविरासीद् वृषध्वजः ॥१२॥**

वृषध्वजः शङ्करः आविरासीत् प्रकाशीबभूव । कण्ठे कालः कालकूटलक्षणो यस्य कण्ठेकालो वा सप्तम्या अलुक् । इन्दुरर्धचन्द्रः शेखर उत्तंसो यस्य । करस्थेन हस्तवर्तिना कपालेन भिक्षापात्रेण स्निग्धाभिरपरुषाभिस्ताम्राभिः पाटलाभिर्जटाभिश्च लक्षित इति योज्यम् । शङ्कराख्यस्य द्रव्यस्य नानाप्रकारं स्वरूपमिहोपवर्णितमिति द्रव्यपदार्थस्वभावोक्तिरित्थम्भूता बोद्धव्येति ।

स्वेदबिन्दुमदुद्भिन्नपुलकं लोलमाकुलम् ।
तद्दर्शनादभूदङ्गमङ्गं तस्या नतभ्रुवः ॥

इत्यपरमुदाहरणम् ॥

एवं स्वभावोक्तिं प्रतिपाद्य निगमयन्नाह—

**जातिक्रियागुणद्रव्यस्वभावाख्यानमीदृशम् ।**
**शास्त्रेष्वस्यैव साम्राज्यं काव्येष्वप्येतदीप्सितम् ॥१३॥**

जातिः क्रिया गुणो द्रव्यं च तेषां स्वभावो लक्षणं नानावस्थस्तस्याख्यानमाख्यायतेऽनेनेतीदृशमेवंजातीयं द्रष्टव्यमिति शेषः । क्वास्य विनियोग इत्याह—शास्त्रेष्वित्यादि । शास्त्रेषु आन्वीक्षिक्यादिषु विद्यास्थानेषु । अस्यैव स्वभावाख्यानस्यालङ्कारस्य नान्यस्योपमादेः साम्राज्यं प्राधान्यम्, तस्यैव तत्र प्रायः प्रयोगात् । काव्येष्वपि सर्गबन्धादिष्वेतत् स्वभावाख्यानमीप्सितमिष्टम्, तत्रापि यथावसरं प्रयुक्तस्य शोभाकरत्वात् । अपिशब्दान्न केवलं शास्त्रेष्वित्याचष्टे ॥

स्वभावोक्त्यनन्तरोद्दिष्टत्वात्तन्निर्देशानन्तरमुपमां विवृण्वन्नाह—

**यथाकथञ्चित् सादृश्यं यत्रोद्भूतं प्रतीयते ।**
**उपमा नाम सा तस्याः प्रपञ्चोऽयं प्रदर्श्यते ॥१४॥**

एवमुत्तरत्राप्यनुसर्तव्यम् । यत्र विषये सादृश्यं पदार्थयोः कयोश्चित्साम्यं यथाकथञ्चित् येन केनचित् प्रकारेण, गुणादिना सर्वथा साम्यस्य दुर्लभत्वात् । तत्त्वे [चैक्य]-

प्रसङ्गात्। प्रतीयते गम्यते शब्दादर्थतो वा यथासम्भवम्। ननु रूपकेऽपि सादृश्यं प्रतीयत इति लक्षणसंकर इति चेदाह– उद्भूतमिति। व्यक्तम्, भेदस्य परिस्फुट-त्वादुपमानोपमे[43b]ययोः। रूपके तु तत्त्वारोप इत्यसङ्करः। अत एव वक्ष्यति—

उपमैव तिरोभूतभेदा रूपकमिष्यते ॥

[२. ६६]

इति। सा सादृश्योक्तिरुपमानामालंक्रिया वेदितव्या। उपमितिः साधर्म्यकथनमुप-मेति कृत्वा। तस्या एवंलक्षणायाः अयं प्रस्तुतः प्रपञ्चः विचित्रः प्रभेदः प्रदर्श्यते उदा-ह्रियते ॥

अम्भोरुहमिवाताम्रं मुग्धे करतलं तव।
इति धर्मोपमा साक्षात् तुल्यधर्मनिदर्शनात् ॥१५॥

मुग्धे बाले! प्रियामन्त्रण[मेतत्।] तव करतलं हस्तोपरिभागः आताम्रमरुणम्। किमिव? अम्भोरुहमिव कमलमिव इतीयमेवंजातीया धर्मोपमा ज्ञेया। कुतः? करतलाम्भोरुहयोर्द्वयोः समानस्य धर्मस्य गुणस्याताम्रलक्षणस्य निदर्शनात् प्रतिपादनात् कारणात्। कथम्? साक्षाद्वाचकव्यापारेणाताम्रपदप्रयोगात्, न त्वर्थात्। ततः शब्दोपात्तत्वात् साधारणस्य धर्मस्य। तेनैवेयं व्यपदिश्यते नान्यथा, तथा-विवक्षितत्वात् ॥

राजीवमिव ते वक्त्रं नेत्रे नीलोत्पले इव।
इयं प्रतीयमानैकधर्मा वस्तूपमैव सा ॥१६॥

ते तव वक्त्रं मुखं राजीवमिव पद्ममिव, नेत्रे चक्षुषी नीलोत्पले इवेति एवं-विधा या सा वस्तूपमैव। धर्मिण एव साक्षादादानात्। तेनैवं व्यपदिश्यते। न धर्मेण तस्य साक्षादग्रहणात्। कथं तर्हि तदवसाय इत्याह– प्रतीयमानेत्यादि। प्रतीयमानस्य उपात्तस्य वस्तुनो राजीवादेस्तदव्यभिचारादर्थाद् गम्यमान एकः समानो धर्मः कान्त्यादिलक्षणो गुणो यस्याः। सेयमीदृशी वस्तूपमेति प्रकृतम् ॥

त्वदाननमिवोन्निद्रमरविन्दमभूदिति।
सा प्रसिद्धिविपर्यासाद्विपर्यासोपमेष्यते ॥१७॥



उन्निद्रं विकसितमरविन्दं पद्मं तवाननं मुखमिवाभूत्। ईदृशी या सादृश्योक्तिः सा विपर्यासोपमेष्यते कविभिः। पद्ममुपमानमुपमेयं मुखमिति या प्रसिद्धिः निरुढि-स्तस्याः विपर्यासाद् वैपरीत्यात् कारणात्। पद्मस्योपमेयीकरणात् वक्त्रस्योपमानी-कृतेः ततो विपर्यासोपमैवेदृशी द्रष्टव्या। कान्त्यादिविशेषश्चाननस्यात्र कश्चिद् विवक्षित इति गम्यते। अन्यथा किं विपर्यासेनेति ॥

तवाननमिवाम्भोजमम्भोजमिव ते मुखम्।
इत्यन्योन्योपमा सेयमन्योन्योत्कर्षशंसिनी ॥१८॥

तवाननमिवाम्भोजं पद्मम्। अम्भोजमिव ते तव मुखमिति। एवं जातीया अन्योन्योपमेष्यते। अन्योन्यस्य परस्परस्य मुखस्याम्भोजस्य चान्योन्येन तेनैव द्वयेन उपमानात् साम्यकथनात्। सा चेयमन्योन्यस्य मुखस्याम्भोजस्य चोत्कर्षं विशेषं कान्त्यादिलक्षणं शंसति प्रकाशयति। अन्योन्येनैवेतद् द्वयं समानं [44a]नान्येन केनचिदिति द्वयोरतिशयः कश्चिदवसीयत इति। अनेन

उपमानोपमेयत्वं यत्र पर्यायतो भवेत्।
उपमेयोपमां नाम ब्रुवते तां यथोदिताम् ॥

[काव्यालङ्कारे ३. ३७]

इति परेष्टोपमेयोपमा पृथगुपमायामन्तर्भाविता ॥

त्वन्मुखं कमलेनैव तुल्यं नान्येन केनचित्।
इत्यन्यसाम्यव्यावृत्तेरियं सा नियमोपमा ॥१९॥

तव मुखं कमलेनैव तुल्यम्। नान्येन केनचित् कमलव्यतिरिक्तेन वस्तुनेति। एवंविधा या सादृश्योक्तिः सेयं नियमोपमा कथ्यते। नियमस्य साक्षादुपादानात्। यदाह– अन्यसाम्यव्यावृत्तेरिति। कमलादन्येन केनचिद्वस्तुना साम्यस्य सादृश्यस्य व्यावृत्तेर्व्यवच्छेदात् कारणात्। तेनैव च नियमेन व्यपदिश्यते, नान्यथेति ॥

पद्मं तावत् तवान्वेति मुखमन्यच्च तादृशम्।
अस्ति चेदस्तु तत्कारीत्यसावनियमोपमा ॥२०॥

तव मुखं कर्तृ पद्मं कर्मभूतम् । अन्वेत्यनुगच्छति पद्मेन तुल्यं तावत् । एतन्निश्चितम् । वाचोयुक्तौ वा । अन्यच्चापरमपि किञ्चिद्वस्तु तादृशं पद्मसमम् । तत्कारि त्वन्मुखान्वयकारि त्वदाननस्योपमानमस्ति चेत् यदि भवेत्, अस्तु भवतु न वार्यत इति एवंरूपा यासौ तादृशी अनियमोपमा स्मर्यते तज्ज्ञैः । पद्मेनैव तुल्यमित्यस्य नियमस्यानपेक्षणात्, अन्यस्यापि तादृशस्याभ्यनुज्ञानादिति ॥

समुच्चयोपमाऽप्यस्ति न कान्त्यैव मुखं तव ।
ह्लादनाख्येन चान्वेति कर्मणेन्दुमितीदृशी ॥२१॥

क्वचिदेकत्र क्रियादावनेकपदार्थातिसर्जनं समुच्चयः । तन्मुखेनोपमा समुच्चयोपमाप्यस्ति वक्ष्यमाणा, न केवलं पूर्वोक्ताः । कीदृशी ? तव मुखं कर्तृभूतमिन्दुमन्वेत्यनुगच्छति । न कान्त्यैव न सौम्यत्वेन गुणेन केवलेन, किं तु ह्लादनाख्येन प्रीणनेन च कर्मणा क्रियया अन्वेति ईदृशी एवंप्रकारावस्थया ह्लादनमित्याख्या संज्ञा यस्य कर्मण इति विग्रहः । कान्त्या ह्लादकत्वेन च त्वन्मुखमिन्दुनोपमीयत इत्यर्थ इति ॥

त्वय्येव त्वन्मुखं दृष्टं दृश्यते दिवि चन्द्रमाः ।
इयत्येव भिदा नान्येत्यसावतिशयोपमा ॥२२॥

तव मुखं त्वय्येव भवत्यामेव दृष्टम्, न दिवि । चन्द्रमाश्चन्द्रस्तु दिवि नभस्येव दृश्यते, न त्वयि । इयत्येव परिमाणभिन्नाश्रयतामात्रलक्षणा भिदा भेदो विद्यते नान्या काचिद् एतद्व्यतिरिक्ता । अन्यथा सर्वथा साम्यमेवानयोरित्यनेकभेदसम्भवे अपि अतिशयस्येदृशस्य विवक्षया कविनानयोः साम्यकथनातिशयपरत्वेनातिशयोपमा आख्यायत इति ॥

मय्येवास्या मुखश्रीरित्यलमिन्दोर्विकत्थनैः ।
पद्मेऽपि सा यदस्त्येवेत्यसावुत्प्रेक्षितोपमा ॥२३॥

यस्या मृगदृशो मुखश्रीर्वदनकान्तिर्मय्येव वर्तते, नान्यत्रेत्येवंरूपैर्विकत्थनैः श्लाघयाऽलम् । कृतमिन्दोश्चन्द्रस्य । [44b] न विकत्थनीयमित्थमिन्दुना । किमिति ? यद् यस्मात् । सा मुखश्रीः पद्मेऽपि न केवलमिन्दौ । अस्त्येव न नास्ति । इत्युत्प्रेक्षया असतोऽपि तथाविकत्थनस्याध्यासेन वदनमिन्दुनोपमीयत इति । उत्प्रेक्षितोपमैवासौ तादृशी वेदितव्येति ॥



यदि किञ्चिद् भवेत्पद्ममुद्भ्रु विभ्रान्तलोचनम् ।
तत् ते मुखश्रियं धत्तामित्यसावद्भुतोपमा ॥२४॥

उद्धृते भ्रुवौ विभ्रान्ते च लोचने यस्मिन् । तत्तादृशं किञ्चित् किमपि यदि भवेत् क्वचित् तदीदृशं ते तव सुन्दरि मुखश्रियं धत्तां न निषिध्यते । किं त्वाश्चर्यमिदं दुर्लभमीदृशमिति । अभूतोद्भावनेन वदनपद्मेनोपमीयत इति । असावियमेवंभूता अद्भुतोपमा ज्ञातव्येति ॥

शशीत्युत्प्रेक्ष्य तन्वङ्गि ! त्वन्मुखं त्वन्मुखाशया ।
इन्दुमप्यनुधावामीत्येषा मोहोपमा स्मृता ॥२५॥

तन्वङ्गीति प्रियामन्त्रणम् । अयमसौ शशी चन्द्र इति तव मुखमुत्प्रेक्ष्य अध्यवसाय चन्द्रबुद्ध्यानुधावामि । न केवलमेषा भ्रान्तिः । किं तु त्वन्मुखाशया तवाननमिदमिति त्वद्वदनबुद्ध्या इन्दुमप्यनुधावामीति अनुगच्छामि । अयमपरो विपर्यासः । इत्येवं मोहेन भ्रान्त्या चन्द्रमुखयोरुपमानोपमेयभावप्रतीतिरिति । एषा इयमीदृशी मोहोपमाख्यायत इति ॥

किं पद्ममन्तर्भ्रान्तालि किं ते लोलेक्षणं मुखम् ।
मम दोलायते चित्तमितीयं संशयोपमा ॥२६॥

अन्तर्भ्रान्तौ अलो भ्रमरौ यस्मिन् तदीदृशं पद्मं किमिदम् । लोले चले ईक्षणे लोचने यस्मिन् तादृशं वा तवेदं मुखम् । इति मम चित्तं मनो दोलायते दोलेवाचरति । एवं पक्षद्वयपरिग्रहात् संशेत इत्यर्थः । इतीयमीदृशी संशयावेशेन पद्ममुखेनौपम्यावगमात् संशयोपमा प्रतीयत इति ॥

न पद्मस्येन्दुनिग्राह्यस्येन्दुलज्जाकरी द्युतिः ।
अतस्त्वन्मुखमेवेदमित्यसौ निर्णयपमा ॥२७॥

पद्मस्य द्युतिः कान्तिः इन्दोर्लज्जाकरी न भवति । नेन्दुं ह्लेपयतीत्यर्थः । किंविशिष्टस्य इन्दुना निग्राह्यस्य अभिभवनीयस्य । तदुदये सङ्कोचात् । इदमत्र कारणम्— यदि तु पद्ममिदमभविष्यत्, नेन्दुमह्लेपयिष्यत् । ह्लेपयति च । अतोवसीयते तव मुख-

मेवेदं तस्यैव तादृशत्वात् न पद्ममिति। असावियमेवंविधा निर्णयोपमा विज्ञायते मुखमिदं न पद्ममिति निश्चयमुखेनोपमावगमादिति॥

शिशिरांशुप्रतिद्वन्द्वि श्रीमत् सुरभिगन्धि च।
अम्भोजमिव ते वक्त्रमिति श्लेषोपमा स्मृता॥२८॥

तव वक्त्रमम्भोजमिव शिशिरांशोश्चन्द्रस्य प्रति[45a]द्वन्द्वि प्रत्यनीकं मुखस्य तत्समानकान्तित्वात्। अम्भोजस्य च तदुदये सङ्कोचभजनात्। शब्दश्लेषः। श्रीमत् कान्तियुक्तं मुखमम्भोजं च श्रीर्देवता तत्र वसतीति श्रुतेः। अयमपि शब्दश्लेषः। उभयोरपि कान्तियोगादर्थश्लेषो वा। सुरभिरिष्टो गन्धोऽस्येति सुरभिगन्धि द्वयमपी-त्यर्थश्लेषः। चकारः समुच्चये। इत्येवं श्लेषपरिग्रहणे चन्द्रवक्त्रयोरुपमाप्रयोगात् श्लेषोपमैवेदृशी मतेति।

सरूपशब्दवाच्यत्वात् सा समानोपमा यथा।
बालेवोद्यानमालेयं सालकाननशोभिनी॥२९॥

इयमुद्यानमाला प्रमदवनराजिर्बालेव स्त्रीव। कथं? सालकाननशोभिनी। बाला तावत् सहालकेन केशसन्निवेशविशेषेण वर्तते यत् सालकमाननं तेन शोभते साल-काननशोभिनी। उद्यानमालापि सालानां वृक्षविशेषाणां काननेन वनेन शोभते। एवंरूपा या सा तादृशी समानोपमा समाख्यायते। कुतः सरूपेण सदृशेन स्वरूपतो नार्थतः तस्य भेदात्, यथोक्तमनन्तरम्। शब्देन सालकाननशोभिनीत्येवंविधेन वाच्यत्वात्, प्रकाश्यत्वात् तस्या इति गम्यते। यथेति निदर्शने। ननु श्लेषोपमैवेयं, सालकाननशोभिनीति शब्दश्लेषात्। सा च पूर्वमुक्ता, तत्किमनया? को वा तयोर्भेदः? उच्यते। पूर्वं श्लेषाप्रयोगेऽप्युपमा गम्यते। अम्भोजमिव ते वक्त्रमिति श्लेषानुवेधादृते व्यापदिश्यते। इह तु श्लेषानुत्प्रेक्षायामुपमैव नावसीयते। बाले-वोद्यानमालेति। श्लेषाभिधान एव केवलमवगम्यते सालकाननशोभिनीति। अत-स्तादृशेन शब्देनेयमुच्यते। अत एवाह– सरूपशब्दवाच्यत्वादिति। ततः समानोप-मैवेयमाख्यायते, न श्लेषोपमेत्यलं प्रपञ्चेन॥

पद्मं बहुरजश्चन्द्रः क्षयी ताभ्यां तवाननम्।
समानमपि सोत्सेकमिति निन्दोपमा मता॥३०॥



बहूनि रजांसि पांसवो यस्मिन् इति। चन्द्रः क्षयी क्षयोऽपचयोऽस्येति। ताभ्यामेवंभूताभ्यां पद्मचन्द्राभ्यां कान्त्यादिना समानं तुल्यमपि सत्तवाननं सोत्सेक-मुत्कर्षयुक्तं प्रविविशिष्टं वर्तते। रजःशब्दस्य दोषेऽपि वृत्तेः। बहुरजस्त्वस्य शब्दलक्षणेन दोषरूपस्य क्षयित्वस्य च तत्राभावात्, एवंविधा निन्दोपमा मता स्मृता। कथञ्चिन्निन्दितेन पद्मा[45b]दिनोपमावस्तुन आननस्य विवक्षितोत्कर्षत्वात्॥

ब्रह्मणोऽप्युद्भवः पद्मश्चन्द्रः शम्भुशिरोद्धृतः।
तौ तुल्यौ त्वन्मुखेनेति सा प्रशंसोपमेष्यते॥३१॥

यो विश्वं सृजति तस्यापि ब्रह्मणः स्रष्टुरुद्भवत्यस्मादित्युद्भवः पद्म इत्यतिशये अपिशब्दः। नारायणनाभिनलिनयोनिः पितामह [इति] श्रुतेः। चन्द्रः शम्भोः शङ्करस्य शिरसा मौलिना धृतः। तावेवं श्लाघनीयौ पद्मचन्द्रौ तव मुखेन तुल्यौ कान्त्यापि साधर्म्येण ताभ्यां तस्योपमितेस्तेन तुल्यौ भवतः। एवंविधा या सा प्रशंसोपमेष्यते, यथोक्तविशेषयोगेन प्रशंसास्पदाभ्यां पद्मचन्द्राभ्यामाननस्योपमाना-दिति॥

चन्द्रेण त्वन्मुखं तुल्यमित्याचिख्यासु मे मनः।
स गुणो वास्तु दोषो वेत्याचिख्यासोपमा मता॥३२॥

तव मुखं चन्द्रेण तुल्यमित्येवमाख्यातुमिच्छति मम मनः कर्तृ। ननु चन्द्रः क्षयादिदूषितः, मुखं त्वखण्डमण्डलं तत्किमेवमुच्यत इति चेत्—सत्यं यदाह– स इत्यादि। सोऽयं चन्द्रमुखयोस्तुल्यतावादः गुणो वास्तु [उचितो] वा भवतु, दोषो वास्तु अनुचितो वा भ[वतु]। नेदृशं विमर्शमपेक्षते मे मनः। केवलमभिधातुमभि-लषतीति। एवमाचिख्यासामुखेन, सादृश्यप्रकाशनादाचिख्यासोपमेतीदृशी मतेष्टेति। निन्दोपमाद्युदाहरणेन चानेन

यदुक्तं त्रिप्रकारत्वं तस्याः कैश्चिन्महात्मभिः।
निन्दाप्रशंसाचिख्यासाभेदात् तत्राभिधीयते॥

सामान्यगुणनिर्देशात् त्रयमप्युदितं ननु।
मालोपमादि तत्सर्वं न ज्यायान् विस्तरो वृथा॥
[काव्यालङ्कारे २. ३७–३८]

इति मतान्तरं निरस्तम्। एवं हि—

समानवस्तुन्यासेन प्रतिवस्तूमपेष्यते ।
यथेवानभिधानेऽपिं गुणसाम्यप्रतीतितः ॥
[काव्यलङ्कारे २. ३४]

इत्यादिना प्रतिवस्तूपमादिरपि कथं न वृथा स्यात्, सामान्यगुणनिर्देशेनैव गतार्थत्वात् ? अर्थप्रपञ्चार्थमेतदिष्यते [ चेत्, ] तदिहापि समानमिति यत्किञ्चिदेतत् ॥

**शतपत्रं शरच्चन्द्रस्तवाननमिति त्रयम् ।**
**परस्परविरोधीति सा विरोधोपमा मता ॥३३॥**

शतपत्रं पद्मं शरदि चन्द्रः तवाननमित्येतद् वस्तुत्रयं त्रयोऽवयवा अस्येति। परस्परेणान्योन्येन सह परस्परस्य वा विरोधि प्रतिद्वन्द्वि समानगुणत्वात्, कान्त्यादि-विशेषणयोगात्। इत्येवंविधा या सा विरोधोद्भावनेन साधर्म्यवर्णनाद् विरोधोपमा मतेति ॥

**न जातु शक्तिरिन्दोस्ते मुखेन प्रतिगर्जितुम् ।**
**कलङ्किनो जड़स्येति प्रतिषेधोपमैव सा ॥३४॥**

तव मुखेन सह प्रतिगर्जितुं स्पर्द्धां कर्तुमिन्दोः। न जातु न क[46a]दाचिदपि शक्तिः सामर्थ्यमस्ति। कलङ्किनो जड़स्य कलङ्कित्वात् जड़त्वाच्चेत्यर्थः। कलङ्को मृगलाञ्छनलक्षणो दोषः। जाड्यं शैत्यमकौशलं चेति शब्दच्छलेन दोषोक्तिः। मुखं तु निष्कलङ्कं विदग्धं चेति। कथमनेन [स]दृशं इति निषेधद्वारेण साधर्म्यावगमात्। प्रतिषेधोपमैव सा या ईदृशोति ॥

**मृगेक्षणाङ्कं ते वक्त्रं मृगेणैवाङ्कितः शशी ।**
**तथापि सम एवासौ नोत्कर्षीति चटूपमा ॥३५॥**

तन्वि ! तव वक्त्रं मृगस्येक्षणमेकदेशोऽत्यन्तसाम्येनाभेदविवक्षया अङ्कश्चिह्नं यस्य तत्तथा। शशी तु मृगेणैव सकलेनाङ्कितो लक्षितः ततश्चाधिक्यं शशिनः प्राप्तं तथापि नाधिकः। नोत्कर्षी। किं तु सम एव मुखेनासौ शशी। इत्येवं चटुना प्रियालापप्रकारेणेदृशेन सादृश्यप्रकाशनात् चटूपमेदृशी द्रष्टव्येति ॥



**न पद्मं मुखमेवेदं न भृङ्गौ चक्षुषो इमे ।**
**इति विस्पष्टसादृश्यात् तत्त्वाख्यानोपमैव सा ॥३६॥**

पद्ममुखयोर्भृङ्गचक्षुषोश्च विस्पष्टं परिस्फुटं यत्सादृश्यं कान्तिचञ्चलत्वादिलक्षणं, तस्मादभेदशङ्कापूर्वकमेवंविधमुच्यते। न पद्ममेतत् किं तु मुखमेवेदम्। एतौ चात्र [न] भृङ्गौ, किं तर्हि ? चक्षुषी इमे। इत्येवंरूपा या सा तत्त्वाख्यानोपमा ख्याता। पद्मादीनामविपरीतस्य रूपस्य परिदीपनेन साम्यावसायात्।

निर्णयोपमाया अस्याश्च को भेद ? उभयत्रापि तत्त्वनिश्चयाविशेषात्। यद्यपिं तत्त्वनिश्चयस्तुल्यः, तथापि संशयच्छेदेन निश्चयः, इह तु विपर्यासनिरासेनेतिं महान् भेदः। अन्यत्राप्येवं क्वचित् कथञ्चित् अपेक्षाविशेषाद् व्याख्येयो भेद इति ॥

**चन्द्रारविन्दयोः कक्ष्यामतिक्रम्य मुखं तव ।**
**आत्मनैवाभवत् तुल्यमित्यसाधारणोपमा ॥३७॥**

चन्द्रस्यारविन्दस्य च कक्ष्यां पदवीं तुल्यताम् अतिक्रम्य अवधूय तयोरवकर्षात्। आत्मना स्वरूपेणैव तुल्यम् अभवत्, अनन्यसामान्यगुणयोगात्। इत्येवंरूपा-साधारणताभिधानद्वारेण सादृश्यप्रतीतेः असाधारणोपमा निगद्यत इति ॥

**सर्वपद्मप्रभासारः समाहृत इव क्वचित् ।**
**त्वदाननं विभातीति तामभूतोपमां विदुः ॥३८॥**

क्वचित् एकत्रस्थाने समाहृतः प्रचितः सर्वेषां पद्मानां प्रभास्वभावः सारो हृदयमिव तवाननं विभातीत्येवं भूता या तामभूतोपमां विदुः स्मरन्ति तद्विदः। अभूतेनासता क्वचित् समाहृतेन सर्वपद्मप्रभासारेण आननस्योपमितेरिति ॥

**[46b]चन्द्रबिम्बादिव विषं चन्दनादिव पावकः ।**
**परुषा वागितो वक्त्रादित्यसम्भावितोपमा ॥३९॥**

मञ्जुभाषिणि ! इतः तव वक्त्रात् एकान्तमधुरात् वाक भारती परुषा निष्ठुरा निष्क्रामति चन्द्रबिम्बात् अमृतमयात् विषमिव चन्दनाच्च एकान्तशिशिरात् पावकः

अग्निरिव । नैतत्संभाव्यत इति असम्भावनाभिप्रायेण सारूप्यनिरूपणात् असम्भावितोपमैवेदृशी दृश्येति ॥

चन्दनोदकचन्द्रांशुचन्द्रकान्तादिशीतलः ।
स्पर्शस्तवेत्यतिशयं प्रथयन्ती बहूपमा ॥४०॥

वराङ्गि ! तव स्पर्शः स्पृश्यतेऽसाविति चन्दनोदकं चन्द्रांशुः चन्द्रकान्तश्च मणिविशेषः । आदिग्रहणेन अन्यस्यापि हिमादेः शीतवस्तुनः परिग्रहः । तद्वत् शीतलः शिशिर इत्येवं बहुभिरुपमानात् बहूपमेयमीदृशी । नन्वेकेनापि शैत्यप्रतीतेः किं बहुभिरित्याह– अतिशयं प्रथयन्तीति । अतिशयं प्रियास्पर्शस्य शैत्यगतमुत्कर्षकमपि प्रकाशयन्ती प्रवर्तते । ततो बहूपादानमीदृशं विवक्षितमिति बहूपमोपकल्प्यत इति ॥

इन्दुबिम्बादिवोत्कीर्णं पद्मगर्भादिवोद्धृतम् ।
तव तन्वङ्गि ! वदनमित्यसौ विक्रियोपमा ॥४१॥

तन्वङ्गि ! तव वदनम् इन्दुबिम्बादुत्कीर्णम् निर्मायोत्क्षिप्तमिव, पद्मगर्भात् अम्भोरुहकुहरात् उद्धृतमिव, सृष्टिद्वारेण उत्कीर्णमिव कान्तिसर्वस्वमयत्वात् । इत्येवंरूपा या असौ तादृशी विक्रियोपमा इष्यते । चन्द्रादिविकारविशेषपरिग्रहेण उपमानोपमेयभावोद्भावनादिति ॥

पूष्ण्यातप इवाह्नीव पूषा व्योम्नीव वासरः ।
विक्रमस्त्वय्यधाल्लक्ष्मीमिति मालोपमा मता ॥४२॥

पूष्णि सूर्यातपः प्रकाशविशेषो यथा लक्ष्मीमधात्, स च पूषा वासरे यथा, सोऽपि वासरो यथा व्योम्नि आकाशे लक्ष्मीमधादिति प्रकृतं, तथा त्वयि राजनि विक्रमः शौर्यं लक्ष्मीं श्रियमधात् अकृत । इत्येवमुपमावस्तूनां पौर्वापर्येण घटनात् मालोपमायाः क्रमः प्रकारोऽयमीदृशः प्रतिपत्तव्य इति ॥

वाक्यार्थेनैव वाक्यार्थः कोऽपि यद्युपमीयते ।
एकानेकेवशब्दत्वे सा वाक्यार्थोपमा द्विधा ॥४३॥



वाक्यस्यार्थः क्रियाकारकसम्बन्धविशेषः । तेनैव पदार्थमात्रेण वाक्यार्थ उक्तलक्षणः कोऽपि विवक्षितः कश्चित् यद्युपमीयते सदृशः कथ्यते, सा तादृशी वाक्यार्थोपमा मता । सा च द्विधा भिद्यते । कथम् ? एकोऽनेकश्च इवशब्दः सादृश्यसूचको यत्र तद्भावस्तत्त्वं तस्मिन् । कारणात्तस्मादिति गम्यते ॥

त्वदाननमधीराक्षमाविर्दशनदीधिति ।
भ्रमद्भृङ्गमिवालक्ष्यकेसरं भाति पङ्कजम् ॥४४॥

त्वदा[47a]ननम् अधीरे लोले अक्षिणी यत्र । आविर्भूता दशनदीधितयो दन्तकान्तयो यस्मिन् तदीदृशं भातीति । एवं तावद् वाक्यमुपमेयभूतम् । किमिवेत्याह– भ्रमन्तौ भ्रमरौ यस्मिन्नालक्ष्याणि [ईषत्]प्रकटानि केसराणि यत्र तादृशं पङ्कजमिवेति द्वितीयं वाक्यमुपमाभूतमियमेकेवशब्दा वाक्यार्थोपमा बोद्धव्येति ॥

अनेकेवशब्दान्निदर्शयन्नाह—

नलिन्या इव तन्वङ्ग्यास्तस्याः पद्ममिवाननम् ।
मया मधुव्रतेनेव पायं पायमरम्यत ॥४५॥

तस्यास्तन्वङ्ग्याः कस्याश्चिदिष्टाया आननं पायं पायम् अभीक्ष्णं पीत्वा निषेव्य मया अरम्यत क्रीडितमिति, उपमेयार्थमेकं वाक्यं तावन्नलिन्या इव पद्ममिव मधुव्रतेनेवेति द्वितीयमुपमारूपं वाक्यमियमनेकेवशब्दा वाक्यार्थोपमा ज्ञातव्येति ॥

वस्तु किञ्चिदुपन्यस्य न्यसनात्तत्सधर्मणः ।
साम्यप्रतीतिरस्तीति प्रतिवस्तूपमा यथा ॥४६॥

किञ्चिद् विवक्षितं पुरुषादि वस्तु उपक्षिप्य उपन्यस्य तेनोपन्यस्तेन वस्तुना सधर्मणस्तुल्यस्य वस्तुनोऽन्यस्य न्यसनात् अभिधानाद्धेतोः साम्यस्य तयोर्द्वयोः सादृश्यस्य प्रतीतिः अवसायोऽस्ति इति हेतोः प्रतिवस्तूपमा ईदृशी इष्यते, प्रतिवस्तुना तथाविधेन अर्थान्तरेण प्रस्तुतस्य वस्तुनस्तुल्यताप्रतिपत्तेः । यथेत्युदाहरति ॥

नैकोऽपि त्वादृशोऽद्यापि जायमानेषु राजसु ।
ननु द्वितीयो नास्त्येव पारिजातस्य पादपः ॥४७॥

जगति चिरमारभ्य जायमानेषु राजसु मध्ये त्वादृशः त्वमिव गुणवान् एकोऽपि राजा, प्रागेवानेकः। अद्यापि न विद्यते न केवलं प्राक्, इत्येवं तावद् वस्तूपन्यस्तमेतत्। नन्वित्यादिना प्रतिवस्तूपन्यासः। नन्वित्यनुमतौ। पारिजातस्य दिव्यवृक्षविशेषस्य द्वितीयः समानः पादपो नास्त्येव। यथा पारिजात एको वृक्षजातिपूत्तमः तथा त्वं राजस्विति द्वयोः साम्यप्रतीतिरस्तीति योज्यम् ॥

अधिकेन समीकृत्य हीनमेकक्रियाविधौ।
यद् ब्रुवन्ति स्मृता सेयं तुल्ययोगोपमा यथा ॥४८॥

अधिकेन केनचित् जात्यादिना हीनं किञ्चिदेकस्याः क्रियाया विधौ सम्पादने समीकृत्य समानीकृत्य ब्रुवन्ति प्रयुञ्जते कवयो यत्। सामान्योक्तिरियं यदिति। यद्वेदृशं वचनं किं तत्? सेयमीदृशी तुल्ययोगोपमा स्मृतेति विशेषः। एकक्रियासम्बद्धस्य द्वयोः साधारणत्वात् तद्द्वारेण उपमा तुल्ययोगोपमा। यथेत्युदाहरति ॥

दिवो जागर्ति रक्षायै पुलोमारिर्भवान् भुवः।
असुरास्तेन हन्यन्ते सावलेपास्त्वया नृपाः ॥४९॥

पुलोमारिः देवराजः प्रमादनिद्राविगमात् जा[47b]गर्ति कार्येष्ववधत्ते। किमर्थम्? दिवः स्वर्गलोकस्य रक्षायै परिपालनार्थम्। भुवः पृथिव्या रक्षायै भवान् विवक्षितः कश्चिन्नरेश्वरो जागर्तीत्युत्प्रेक्ष्यम्। तेन पुलोमारिणा सावलेपा दृप्ता असुरा हन्यन्ते, त्वया च नृपाः सावलेपा हन्यन्ते। अत्र देवराजस्य अधिकस्य नृपस्य च कस्यचित् तदपेक्षया जात्यादिना हीनस्य रक्षाद्येकक्रियायोगस्तुल्य इति तद्द्वारेण तयोः साम्यावगतेस्तुल्ययोगोपमा ईदृशी द्रष्टव्येति ॥

कान्त्या चन्द्रमसं धाम्ना सूर्यं धैर्येण चार्णवम्।
राजन्ननुकरोषीति सैषा हेतूपमा स्मृता ॥५०॥

राजन्नित्यामन्त्रणम्। कान्त्या सौम्यतया चन्द्रमसम् अनुकरोषि। तेन तुल्योऽसीत्यर्थः। धाम्ना तेजसा सूर्यमनुकरोषि। धैर्येण स्थित्या अर्णवं सागरमनुकरोषि। एवंविधा या सैषा तादृशी हेतूपमा स्मृता तज्ज्ञैः। कान्त्यादिहेतूपन्यासेन साम्यप्रतीतेरिति ॥

कथमत्र व्यवस्था? किमवश्यमुपमानोपमेययोरेकलिङ्गत्वम्, अभिन्नवचनता



च? अन्यथापीत्यत्राह—

न लिङ्गवचने भिन्ने न हीनाधिकतापि वा।
उपमादूषणायालं यत्रोद्वेगो न धीमताम् ॥५१॥

लिङ्गमिदं प्रसिद्धमङ्गसन्निवेशादिलक्षणं स्त्रीत्वादि। वचनमेकवचनादि। ते द्वे भिन्ने विजातीये। हीनतोपमावस्तुनो जात्यादिना अधिकतापि वा। सर्वमेतत् उपमायां दूषणाय विरोधार्थं नालं न समर्थमित्युत्सर्गः। तत्रापवादमाह— यत्रेत्यादि। यत्र क्वचिद् विषये धीमतां कवीनामुद्वेगोऽप्रीतिरसम्मतिर्न भवति तादृशि प्रहते प्रयोगमार्गे नायं दोषः। यस्त्वप्रहतोऽशिष्टो विषयः तत्रायं दोष इत्यर्थादुक्तं भवति। तं च दर्शयिष्यतीति ॥

तदुदाहरति—

स्त्रीव गच्छति षण्डोऽयं वक्त्येषा स्त्री पुमानिव।
प्राणा इव प्रियोऽयं मे विद्या धनमिवार्जिता ॥५२॥

अयं षण्डः षण्ढकः स्त्रीव गच्छति तच्चेष्टानुवृत्तेः। एषा स्त्री पुमानिव पुरुष इव वक्ति तादृशप्रागल्भ्ययोगात्। अत्र लिङ्गनानात्वमुपमानोपमेययोः। अयं विवक्षितः कश्चिन्मम प्रिय इष्टः प्राणा इव। विद्या व्याकरणादयः अर्जिता धनमिवेति वचनभेदः। एवंविधे समुचिते विषये लिङ्गवचनभेदो नोपमां दूषयति। प्रत्युत रसावह इति ॥

हीनाधिकतामुदाहरन्नाह—

भवानिव महीपाल! देवराजो विराजते।
अलमंशुमतः कक्षामारोढुं तेजसा नृपः ॥५३॥

महीपालेत्यामन्त्रणम्। भवानिव देवराजो विराजत इति। हीनेनाधिक[48a] उपमीयते। अयं नृपो विवक्षितः कश्चित्। अंशुमतः सूर्यस्य कक्षां पदवीं समताम् आरोढुमलं शक्तः। तेजसा हेतुनेति। अधिकेन हीन उपमितः। अत्यन्तभद्रतामेकान्ततेजस्वितां च प्रतीतामाश्रित्य अयमेवंविधः प्रयोगः। तथा भावनायां शोभत इत्यवसेयम् ॥

तदीदृशं सर्वं सुन्दरमिति दर्शयति—

इत्येवमादेः सौभाग्यं न जहात्येव जातुचित् ।
अस्ति च क्वचिदुद्वेगः प्रयोगे वाग्विदां यथा ॥५४॥

इत्येवमनन्तरोक्तं लक्ष्यमादिर्यस्यान्यस्यापि तज्जातीयस्य लक्ष्यजातस्य तद् [वर्णनं] न जातुचित् न कदाचिदपि सौभाग्यं शोभां जहाति त्यजत्येव । सदैव सुभगमीदृशमित्यर्थः । भिन्नलिङ्गवचनादि किञ्चिदुद्वेगकरं विपश्चितामिति कथयति– क्वचित् प्रयोगे लक्ष्ये न सर्वत्र । उद्वेगो वैमुख्यमनादरः । अस्ति च न केवलं नास्ति । वाग्विदां शब्दहृदयज्ञानां कवीनाम् । यथेत्युदाहरति ॥

हंसीव धवलश्चन्द्रः सरांसीवामलं नभः ।
भर्तृभक्तो भटः श्वेव खद्योतो भाति भानुवत् ॥५५॥

हंसीव धवलश्चन्द्र इति लिङ्गभेदः । सरांसीवामलं नभ इति वचनभेदः । भर्तृभक्तो भटः श्वेवेति हीनेन जात्यादिना अधिक उपमितः । खद्योतो ज्योतिरिङ्गणः भाति भानुवत् इत्यधिकेन हीन उपमीयत इति ॥

एवंविधं हेयमिति दर्शयति—

ईदृशं वर्ज्यते सद्भिः कारणं तत्र चिन्त्यताम् ।
गुणदोषविचाराय स्वयमेव मनीषिभिः ॥५६॥

ईदृशम् इत्थंभूतं सद्भिः कविभिरुचितविद्भिः वर्ज्यते नाद्रियते । नियतं तावदेतत् । किं कारणमिति चेत् ? अत्रेदृशस्य वर्जने कारणं तु निमित्तं पुनः किञ्चित् स्वयमेव चिन्त्यतां निरूप्यताम् । नात्रास्माकमभिनिवेशः । अयमाशयः । ईदृशमशिष्टेष्टमप्रतीतं न सौभाग्यभाजनम् । अतश्चोद्वेगकरत्वाद् वर्ज्यते । न च ते पर्यनुयोगमर्हन्ति, प्रमाणत्वान् सर्वथा तेषाम् । 'केवलं तत्प्रयोगमार्गः' प्रकृतिसुभगोऽस्माभिरनुगम्यते । यदि पुनस्तैराद्रियेत, के वयं वर्जयितुम् ? सुभगमेव तदेदृशं तल्लक्षणत्वादिह सौभाग्यस्येति । तथा च व[क्ष्य]ते शिष्टेष्टस्तु न दुष्यतीति [३. १४८] । इत्थं चैतदुद्वेजनीयम् ।



चन्द्रो हंस इवाभाति नभः सर इवामलम् ।
भटो बन्धुरिव स्निग्धः खद्योतो भाति दीपवत् ॥

प्रतीतमीदृशं सदा तत्समुचित[मनु]द्वेजनीयमेव, तद्विपर्ययात्तु पूर्वकमरञ्जकम् । अनेन [48b] च सर्वेण—

हीनताऽसम्भवो लिङ्गवचोभेदौ विपर्ययः ।
उपमानाधिकत्वं च तेनासदृशतापि च ॥
त एत उपमादोषाः सप्त मेधाविनोदिताः ।
[काव्यालङ्कारे २. ३९–४०]

इति, मतान्तरमनैकान्तीकृतम् ।

यद्यप्युपमानोपमेयभूतं वस्तु चन्द्रमुखादिशब्दवाच्यम्, तथापि इवादिशब्दव्यतिरेकेण सादृश्यमभिव्यक्तिं न यातीति तदभिव्यञ्जकान् शब्दान् व्यवहारव्युत्पत्तये दर्शयन्नाह—

इववद्वायथाशब्दाः समाननिभसन्निभाः ।
तुल्यसंकाशनीकाशप्रकाशप्रतिरूपकाः ॥५७॥

प्रतिपक्षप्रतिद्वन्द्विप्रत्यनीकविरोधिनः ।
सदृक्सदृशसंवादिसजातीयानुवादिनः ॥५८॥

प्रतिबिम्बप्रतिच्छन्दसरूपसमसम्मिताः ।
सलक्षणसदृक्षाभसपक्षोपमितोपमाः ॥५९॥

कल्पदेशीयदेश्यादिः प्रख्यप्रतिनिधी अपि ।
सवर्णतुलितौ शब्दौ ये च तुल्यार्थवाचिनः ॥६०॥

समासश्च बहुव्रीहिः शशाङ्कवदनादिषु ।
स्पर्धते जयति द्वेष्टि द्रुह्यति प्रतिगर्जति ॥६१॥

आक्रोशत्यवजानाति कदर्थयति निन्दति ।
विडम्बयति संरुन्द्धे हसतीर्ष्यत्यसूयति ॥६२॥

तस्य मुष्णाति सौभाग्यं तस्य कान्तिं विलुम्पति ।
तेन सार्धं विगृह्णाति तुलां तेनाधिरोहति ॥६३॥

तत्पदव्यां पदं धत्ते तस्य कक्षां विगाहते ।
तमन्वेत्यनुबध्नाति तच्छीलं तन्निषेधति ॥६४॥

तस्य चानुकरोतीति शब्दाः सादृश्यसूचिनः ।
उपमायामिमे प्रोक्ताः कवीनां बुद्धिसौख्यदाः ॥६५॥

इवश्च वच्च यथा च ते शब्दाश्चेति विग्रहः । समाननिभसन्निभाः पूर्ववच्चार्थः । शब्दा इति वक्ष्यमाणमपेक्ष्य पुंस्त्वमिति ॥ तुल्यादिष्वप्यनन्तरो[क्तेषु तथैव] वाच्यमिति । सदृशादिकमपि पूर्ववत् सुगममिति ॥ सलक्षणादीनामपि सैव रीतिः ॥ आदिशब्देन बहुजादिपरिग्रहः ।

अयं कुणालो बहुसागरः प्रियः [?]

इत्यादि च लक्ष्यमालक्ष्यमिति ॥ सवर्णेत्यादि । ये चान्यूनं सममर्थं वदन्ति सधर्मसाधारणसच्छायादयोऽनुक्ताः तेऽपि शब्दाः सादृश्यसूचिन इत्यवेक्षणीयम् । शशाङ्क इव वदनं यस्याः सा तथा । आदि शब्देनोत्पलाक्ष्यादिपरिग्रहः । तेषु प्रयोगेषु समासश्च बहुव्रीहिरन्यपदार्थः । सादृश्यसूचक इत्यपेक्षमिति ॥ स्पर्द्धत इत्यादि सुगममिति । एते सर्वे शब्दा यथोक्ताः सादृश्यम् उपमानोपमेययोः साम्यं सूचयन्ति व्यञ्जयन्तीति सादृश्यसूचिनः प्रतिपत्तव्या इति उपमाप्रपञ्चः ॥

॥ उपमाचक्रम् ॥

रूपकं निरूपयन्नाह—

उपमैव तिरोभूतभेदा रूपकमुच्यते ।
यथा बाहुलता पाणिपद्मं चरणपल्लवम् ॥६६॥

उपमैव यथोक्तलक्षणा रूपकमिष्यते तज्ज्ञैः । न कश्चित् तर्हि विशेषः तयोर्नाममात्रं भिद्यत इत्याह– तिरोभूतभेदेति । तिरोभूतोऽप्रकटो भेदो नानात्वम् उपमानोप-



मेययोरभेदारोपणात् यस्यां तथाभूता सती रूपकं नाम अलङ्कारः कल्प्यत इति भेदोद्भवाभिभवप्रभावितं नानात्वम् अनयोर्व्यञ्जनेन शब्दाभेदमात्रं रूपयति । उपमा[नोपमेययो]रभेदमारोपयति इति रूपकम् । यथेत्युदाहरति– बाहुर्लतातुल्यो लतारूपेण निरूप्यते इत्यभेदारोपः ! तिरोहितो भेदः । नतूद्भेदः । बाहुर्लते एवेति [49a] । पाणिरेव पद्मं चरण एव पल्लवमित्यभेदाभ्यासः पूर्ववदिति ॥

अङ्गुल्यः पल्लवान्यासन् कुसुमानि नखार्चिषः ।
बाहू लते वसन्तश्रीस्त्वं नः प्रत्यक्षचारिणी ॥६७॥

हे वसन्तश्रीः कुसुमागमलक्ष्मीः ! त्वं भवती नः अस्माकम् प्रत्यक्षेऽर्थसाक्षात्कारिणि ज्ञाने चरसि प्रतिभासि । न परोक्षवर्तिनी । प्रत्यक्षं यथा भवति तथा चरसीति क्रियाविशेषणोपपदाद्वा क्रियार्थाद्विधिः । कथयामि तावत् पल्लवानि किसलयसम्पदस्तानि ताम्रतादेस्तवाङ्गुल्य आसन् अभूवन् अदृश्यन्त इति यावत् । यानि चेमानि पल्लवसङ्गतानि कुसुमानि तानि तव नखार्चिषः कररुहरुचयः शौक्ल्यादिना, लते च द्वे विवक्षिते केचित् तव बाहु[भूते] मार्दवादेः । इति प्रत्यक्षाङ्गत्वात् त्वं नश्चाक्षुषी । यद्वा, वराङ्गि ! प्र[त्यक्ष]चारिणी वसन्तश्रीस्त्वमेवास्माकम्, किमन्यया अप्रत्यक्षया । यास्तवाङ्गुल्यस्ता[ः] पल्लवान्यासन् । नखार्चिषश्च कुसुमानि । बाहू ते लते । ततस्त्वं नश्चाक्षुषी प्रत्यक्षा वसन्तश्रीः । शेषं पूर्ववत् ॥

किं नामेदं व्यवह्रियत इत्याह—

इत्येतदसमस्ताख्यं समस्तं पूवरूपकम् ।
स्मितं मुखेन्दोर्ज्योत्स्नेति समस्तव्यस्तरूपकम् ॥६८॥

इत्येतदीदृशम् अस[म]स्तमित्याख्या संज्ञा यस्येत्यसमस्ताख्यं व्यस्तं नाम रूपकं प्रतिपत्तव्यम्, उपमानोपमेयरोरकृतसमासत्वात् । यत्र समासः तत् किमाख्यायते ? पूर्वरूपकं बाहू लतेत्यादि । कृतसमासं प्रथममुदाहरणम् । समस्तं तादृशं वेदितव्यम्, समासयोगात् । मुखमिवेन्दुर्मुखेन्दुरिति समस्तम् । स्मितं लीलाहसितं ज्योत्स्ना चन्द्रिकेति व्यस्तम् । अतश्च समस्तं तद् व्यस्तं चेति समस्तव्यस्तं नामेदृशं रूपकमवगन्तव्यमिति ॥

ताम्राङ्गुलिदलश्रेणि नखदीधितिकेसरम् ।
ध्रियते मूर्ध्नि भूपालैर्भवच्चरणपङ्कजम् ॥६९॥

राजन्, भवतश्चरण एव पङ्कजं भूपालैः ध्रियते धार्यते मूर्ध्नि शिरसि । किम्भूतम्? ताम्राङ्गुलयो दलश्रेणिः पत्रपंक्तिर्यस्य । नखानां दीधितयः किरणाः केसराणि यत्र तादृशं ध्रियते इति प्रकृतम् ॥

कतमदेतद्रूपकमित्याह—

अङ्गुल्यादौ दलादित्वं पादे चारोप्य पद्मताम् ।
तद्योग्यस्थानविन्यासादेतत् सकलरूपकम् ॥७०॥

एतदनन्तरोक्तमीदृशं सकलरूपकम् आख्यायते । सकलस्याङ्गिनः पादस्याङ्गस्य चाङ्गुल्यादीनां रूपणात् । अङ्गुलिरादिर्यस्या नखदीधितेस्तत्र दलमादिर्यस्य केसरस्य तस्य भावः तत्त्वं तदारोप्य इत्यङ्गरूप[49b]णमुक्तम् । पादे च पद्मतामारोप्य उपचर्येति अङ्गिरूपणं तस्येदृशस्य पद्मस्य योग्यमुचितम् । स्थीयते इति स्थानम् आधारो मूर्द्धा तत्र विन्यासात् निवेशनात् । सकलरूपकमेतदिति प्रकृतम् ॥

अकस्मादेव ते चण्डि! स्फुरिताधरपल्लवम् ।
मुखं मुक्तारुचो धत्ते घर्माम्भःकणमञ्जरीः ॥७१॥

चण्डि कोपने! ते तव मुखं स्फुरिताधरपल्लवं स्फुरितः कोपकम्पनः अधरः ताम्रतादेः पल्लवो यस्येति । घर्माम्भःकणाः प्रणयकोपजन्मानः स्वेदबिन्दव एव मञ्जयः कुसुमस्तबकाः शौक्ल्यादिना । यदाह– मुक्तारुच इति । मुक्तानां रुचयो दीप्तयो, यासां ता धत्ते । अकस्मादेव विना व्यलीकेन केनचित् तादृशेन, कोऽयमस्थानकोप इति ॥

कतरदेवत् रूपकमित्याह—

मञ्जरीकृत्य घर्माम्बु पल्लवीकृत्य चाधरम् ।
नान्यथाकृतमत्रास्यमतोऽवयवरूपकम् ॥७२॥

घर्माम्बु मञ्जरीत्वेन परिकल्प्य । अधरं चैकदेशं पल्लवीकृत्य पल्लवोऽयमिति रूपयित्वा । आस्यं मुखम् अङ्गि अन्यथा नःकृतम् । पद्मादित्वेन न रूपितमत्र प्रयोगे ।



अतः कारणादवयवरूपकमीदृशमवयवस्याधरादे रूपणादिति ॥

वल्गितभ्रु गलद्घर्मजलमालोहितेक्षणम् ।
विवृणोति मदावस्थामिदं वदनपङ्कजम् ॥७३॥

वल्गिते आरेचिते भ्रुवौ । गलच्च घर्मजलम् । आलोहिते च ईक्षणे यत्र तदिदं वदनं पङ्कजं मदस्य मधुपानजनितस्य हर्षविशेषस्य अवस्थाम् ईदृशविकारलीला-जनितलक्षणां दशां विवृणोति प्रकाशयतीति ॥

किमेतद् रूपकमुच्यते इत्याह—

अविकृत्य मुखाङ्गानि मुखमेवारविन्दताम् ।
आसीद् गमितमत्रेदमतोऽवयविरूपकम् ॥७४॥

मुखस्य अङ्गिनः अङ्गानि अवयवान् नेत्रादीन् अविकृत्य रूपयित्वा मुखमेवाङ्गि अरविन्दतां गमितमासीत् पद्मत्वेन रूपितम् । अत्र लक्ष्ये । अतोऽवयवि-रूपकमिदमीदृशम्, अवयविन एव रूपितत्वादिति ॥

मदपाटलगण्डेन रक्तनेत्रोत्पलेन ते ।
मुखेन मुग्धे! सोऽप्येष जनो रागमयः कृतः ॥७५॥

मदेन पाटलौ गण्डौ कपोलौ रक्ते च नेत्रे उत्पले यत्र तेन ते मुखेन सोऽप्येष जनो यः त्वत्प्रसादैकवृत्तिः परमुखेनात्मानमाह कश्चित्कामुको रागमयो रागविकारः किमपि रक्तः कृतः न केवलं स्वयं रक्तमित्यपि शब्दः । मुग्ध इत्यामन्त्रणम् इति ॥

एकाङ्गरूपकं चैतदेवं द्विप्रभृतीन्यपि ।
अङ्गानि रूपयन्त्यत्र योगायोगौ भिदाकरौ ॥७६॥

एतच्च एकाङ्गरूपकम् एकस्यैव नेत्रलक्षमस्याङ्गस्य रूपणात् । एवम् अनेन प्रकारेण द्विप्रभृतीन्यपि न केवलमेकम् । द्वे त्रीणि चत्वारि इति यथासम्भवमङ्गानि अवयवान् रूपयन्ति यथायोगमर्थान्तररूपेण आरोप्य प्रयुञ्जते कवयः । अत्राङ्गरूपणे योगः सङ्गतिः अङ्गानामयोगश्च विरोधः । भिदाकरौ रूपकभेदव्यवस्थापकौ । योगायोग-[50a]भेदेनैतद्रूपकं व्यवह्रियते । न तु पूर्ववत् संख्याभेदेनेत्यर्थः ॥

स्मितपुष्पोज्ज्वलं लोलनेत्रभृङ्गमिदं मुखम् ।
इति पुष्पद्विरेफाणां सङ्गत्या युक्तरूपकम् ॥७७॥

स्मितं पुष्पं शौक्ल्यादिना तेन उज्ज्वलं सुभगं लोले नेत्रे भृङ्गौ चञ्चलत्वादिना यस्य मुखस्येतीदृशम् [युक्त]रूपकमाख्यायते। ननु कथम्? पुष्पाणां द्विरेफाणां च सङ्गत्या परस्परसम्बन्धादिति ॥

इदमार्द्रस्मितज्योत्स्नं स्निग्धनेत्रोत्पलं मुखम् ।
इति ज्योत्स्नोत्पलायोगादयुक्तं नाम रूपकम् ॥७८॥

इदं मुखम् आर्द्रं स्निग्धं स्मितं ज्योत्स्ना, स्निग्धे नेत्रे उत्पले [च] यस्य इत्येवं-विधमयुक्तं नाम रूपकम्। कुतः ज्योत्स्नया उत्पलस्य अयोगात् विरोधात्, ज्योत्स्नाया-मुत्पलस्य सङ्कोचादिति ॥

रूपणादङ्गिनोऽङ्गानां रूपणारूपणाश्रयात् ।
रूपकं विषमं नाम ललितं जायते यथा ॥७९॥

अङ्गिनोऽवयविनः रूपणात् यथायोगम् अर्थान्तरीकरणात्। अङ्गानां रूपणमरूपणं च तयोराश्रयणम् [तस्माद्] [आ]श्रयात् अपेक्षणाद्रूपणादरूपणाच्चेत्यर्थः। ततो विषमं रूपकं ललितं चारुजायते। यथेत्युदाहरति ॥

मदरक्तकपोलेन मन्मथस्त्वन्मुखेन्दुना ।
नर्तितभ्रूलतेनालं मर्दितुं भुवनत्रयम् ॥८०॥

भुवनत्रयं मर्दितुं जेतुम् अलम् समर्थो मन्मथः। केन? मदेन रक्तौ कपोलौ यस्य नर्तिते भ्रुवौ लते लोलतादिना येन तेन तव मुखेन इन्दुना करणेन च मुखस्याङ्गिनो रूपणं भ्रूलक्षणस्य च तदङ्गस्य रूपणमेव। कपोलरूपस्य त्वङ्गस्यारूपणमिति ॥

हरिपादः शिरोलग्नजह्नुकन्याजलांशुकः ।
जयत्यसुरनिःशङ्कसुरानन्दोत्सवध्वजः ॥८१॥

हरेर्विष्णोः विक्रममाणस्य पादो जयति विपक्षमभिभवति। शिरस्यग्रे भागेऽङ्गुलीदेशे लग्नमवस्थितं जह्नुकन्यांजलम्। ब्रह्मणा किल तदानीम् अर्घीकृतं गाङ्गम्



उदकम्। अंशुकं पताकारूपं यत्र स तथा। असुरेभ्यो हरिनिर्जितेभ्यो निःशंका निर्भयास्तदुपक्रमशङ्काविगमात्। ये सुराः, तेषामानन्दः प्रीतिरुत्सवो महस्तत्रोच्छ्रितो ध्वजः केतुरिति ॥

किमिदं रूपकं व्यवह्रियत इत्याह—

विशेषणसमग्रस्य रूपं केतोर्यदीदृशम् ।
पादे तदर्पणादेतत् सविशेषणरूपकम् ॥८२॥

विशेषणेन उपाधिना पताकोत्सवसम्भवरूपेण समग्रस्य सूक्तस्य केतोर्ध्वजस्य यदीदृशस्य अनन्तरोक्तप्रकारं रूपं स्वभावः तस्यार्पणादारोपात् पादे वैष्णवेऽयं ध्वज इति एतदीदृशं सविशेषणं नाम रूपकं व्यपदिश्यत इति ॥

न मीलयति पद्मानि न नभोऽप्यवगाहते ।
त्वन्मुखेन्दुर्ममासूनां हरणाय व्यवस्यति ॥८३॥

तव मुखम् इन्दुः, पद्मानि न मीलयति न संकोचयति [50b] नभोऽपि नावगाहते। किं तर्हि करोति? मम असूनां प्राणानां हरणायैव व्यवस्यति प्रयतते। किमिदमिति ॥

तद् व्याचष्टे—

अक्रिया चन्द्रकार्याणामन्यकार्यस्य च क्रिया ।
अत्र सन्दर्श्यते यस्माद्विरुद्धं नाम रूपकम् ॥८४॥

चन्द्रकार्याणां पद्मनिमीलनादीनाम् अक्रिया अकरणम्। अन्यस्य शस्त्रादेर्यत् कार्यं प्राणहरणं तस्य क्रिया अत्र प्रयोगे सन्दर्श्यते प्रतिपाद्यते यस्मात्, अतो विरुद्धं नामेदृशं रूपकमवगन्तव्यम् इति ॥

गाम्भीर्येण समुद्रोऽसि गौरवेणासि पर्वतः ।
कामदत्वाच्च लोकानामसि त्वं कल्पपादपः ॥८५॥

गाम्भीर्येणानुत्तानचित्ततया समुद्रोऽसि। गौरवेण गुणलक्षणेन पर्वतोऽसि। लोकानां कामम् इष्टं ददासीति कामदत्वाच्च कल्पपादपोऽसि इति कश्चित् स्तुयत् इति ॥

किमिदं रूपकमित्याह—

गाम्भीर्यप्रमुखैरत्र हेतुभिः सागरो गिरिः ।
कल्पद्रुमश्च क्रियते तदिदं हेतुरूपकम् ॥८६॥

अत्र प्रयोगे गाम्भीर्यं प्रमुखमादि येषां गौरवादीनां तैः हेतुभिः कारणैः कश्चित् विवक्षितः पुरुषः सागरः क्रियते, गिरिश्च कल्पद्रुमश्च क्रियते रूप्यते यतः, तत् तस्मात् इदम् एवंविधं हेतुरूपकम् अवसेयम् । तदिदमनन्तरोक्तं हेतुरूपकमिति योज्यम् ॥

राजहंसोपभोगार्हं भ्रमरप्रार्थ्यसौरभम् ।
सखि वक्त्राम्बुजमिदं तवेति श्लिष्टरूपकम् ॥८७॥

सखि, तव वक्त्राम्बुजमिदं चारु [राज]हंसोपभोगार्हम् । पद्मं तावत् राजहंसैः पक्षिविशेषैः उपभोगं निषेवणम् अर्हति, तदुपभोग्यमिति यावत् । तव वक्त्राम्बुजं तु राजहंसैः नृपवरैः उपभोगमर्हतीति शब्दश्लेषः । उभयमपि भ्रमरैः प्रार्थ्यम् अभिलषणीयं सौरभं गन्धविशेषोऽस्येति भ्रमरप्रार्थ्यसौरभमित्यर्थश्लेषः । ईदृशं श्लिष्टरूपकमिष्टम्, श्लेषानुविद्धत्वात् इति ॥

इष्टं साधर्म्यवैधर्म्यदर्शनाद् गौणमुख्ययोः ।
उपमाव्यतिरेकाख्यं रूपकद्वितयं यथा ॥८८॥

उपमारूपकं व्यतिरेकरूपकमिति रूपकद्वितयमिदमपरमिष्टं शिष्टैः । उपमेति व्यतिरेक इति वा आख्या संज्ञा तदेकदेशत्वाद्यस्येति विग्रहः कृतः । गौणस्य आरोपितस्य मुखस्य च प्रधानस्यानुपचितस्य साधर्म्यं साम्यं वैधर्म्यम् असाम्यं च तयोर्दर्शनात् प्रकाशनात् कारणात् । यथेति उदाहरति—

अयमालोहितच्छायो मदेन मुखचन्द्रमाः ।
सन्नद्धोदयरागस्य चन्द्रस्य प्रतिगर्जति ॥८९॥

अयं मुखचन्द्रमाः, आलोहिता छाया प्रभा यस्य स तथा । केन ? मदेन हेतुना सन्नद्धोऽवस्थितः उदयकालभावी रागो यस्य तस्य चन्द्रस्य प्रतिगर्जति तेनोपमीयते । गौणमुख्ययोरिह रक्ततासाधर्म्यादुपमारूपकमीदृशं दृश्यमिति ॥



चन्द्रमाः पीयते देवैर्मया त्वन्मुखचन्द्रमाः ।
असमग्रोऽप्यसौ शश्वदयमापूर्णमण्डलः ॥९०॥

[51a] चन्द्रमा मुख्यः पीयते देवैरमृतमयत्वात् पर्यायेण सुरैः चन्द्रः पीयते यतः क्रमेणापचीयत इति श्रुतेः । अत एवासमग्रोऽप्यसौ मुख्यश्चन्द्रः । न केवलं समग्र एवेत्यपिशब्दः । मया तव मुखचन्द्रमाः पीयते निषेव्यते । तथाप्ययं तव मुखचन्द्रमाः आपूर्णमखण्डं मण्डलं यस्येत्यापूर्णमण्डलः शश्वत् अनवरतं न कदाचित् अन्यथेति गौणमुख्ययोर्वैधर्म्यात् व्यतिरेकरूपकमिदमीदृशमिति ॥

मुखचन्द्रस्य चन्द्रत्वमित्थमन्योपतापिनः ।
न ते सुन्दरि ! संवादीत्येतदाक्षेपरूपकम् ॥९१॥

सुन्दरि ! तव मुखचन्द्रस्येत्थमेवमिति आत्मसंवेद्यतामुपतापस्य दर्शयति । अन्यमिमं जनमुपतापयतः । परमुखेन आत्मानमाह– चन्द्रत्वं न संवादि न यथार्थमेकान्तशीतत्वाच्चन्द्रस्यास्य च तद्विपरीतत्वात् । इतीदृशं चन्द्रत्वनिषेधादाक्षेपरूप[क]मवसेयमिति ॥

मुखेन्दुरपि ते चण्डि ! मां निर्दहति निर्दयम् ।
भाग्यदोषो ममैवेति तत् समाधानरूपकम् ॥९२॥

चण्डि निर्दये ! एकान्तप्रीतिकरः तव मुखेन्दुः अतिनिर्दयम् अत्यर्थं मां निर्दहति । नैतद्युज्यत इत्ययोगमपिशब्दः सूचयति । न केवलम् इन्दुरिति वा [अपि]-शब्दः समुच्चिनोति । अथवा किं न युज्यते ? संभाव्यते सर्वमीदृशमपि भाग्यपरावृत्तौ, यदाह– भाग्यदोषो ममैव इति ममैवायं भाग्यदोषः अभाग्यं यदेवं भवति । न तव मुखचन्द्रस्यायं दोषः । इत्येवंरूपं यत् तदीदृशं समाधानरूपकमित्थं समाधानाभिधानादिति ॥

मुखपङ्कजरङ्गेऽस्मिन् भ्रूलता नर्तकी तव ।
लीलानृत्तं करोतीति रम्यं रूपकरूपकम् ॥९३॥

सुन्दरि ! तव भ्रूलता लोलतादिना । सा च नर्तकी चित्तहृत्त्वादिना लीलाप्रधानं शृङ्गारमयं नृत्तं वर्णितरूपं करोति । कुत्र ? मुखं पङ्कजं कान्त्यादिना तच्च रङ्गो

नृत्यभूमिः। तत्रास्मिन्निति प्रत्यक्षवर्तिनि। ईदृशं रूपकरूपकं रम्यं मनोज्ञं लतीकृतायाः भ्रुवो नर्तकीकरणात् पङ्कजीकृतस्य च मुखस्य रङ्गीकृतेरिति ॥

नैतन्मुखमिदं पद्मं न नेत्रे भ्रमराविमौ।
एतानि केसराण्येव नैता दन्तार्चिषस्तव ॥९४॥

तव एतत् मुखं न भवति। किं तर्हि पद्मम् इदम्। एते च अत्र नेत्रे न भवतः। किं तर्हि ? भ्रमराविमौ। एताश्च दन्तार्चिषो न भवन्ति किं तु केसराण्येतानि इति ॥

तद् व्याचष्टे—

मुखादित्वं निवर्त्यैव पद्मादित्वेन रूपणात्।
उद्भावितगुणोत्कर्षं तत्त्वापह्नवरूपकम् ॥९५॥

मुखमादिर्यस्य नेत्रादेः तस्य भावः। तत्त्वम्। तद् विनिवर्त्यैव अपह्नुत्यैव। न तु मुखादिकमेवैतत् पद्मादिकमिति तत्त्वम् [51b] अपलाप्यते [अत]एवाक्षेपरूपकविलक्षणमेतत्। पद्ममादिर्यस्य भ्रमरादेः तस्य भावः तेन लक्षितस्य रूपणात् परिकल्पनात्। मुखादेरिति गम्यते। तत्त्वापह्नवरूपकमीदृशं तत्त्वस्य वस्तुरूपस्य अपह्नवेन रूपकमिति। किमेवमाविष्कृतं स्यादित्याह– उद्भावितः प्रकाशितः। गुणस्य कान्त्यादेरुत्कर्षा[ति]शयो येन यत्र वा तत्तथोक्तमिति ॥

कि[मि]यन्त एव रूप[क]भेदाः ? नेत्यपर्यवसायेन उपमासामान्येन निगमयन्नाह—

न पर्यन्तो विकल्पानां रूपकोपमयोरतः।
दिङ्मात्रं दर्शितं धीरैरनुक्तमनुमीयताम् ॥९६॥

रूपकस्योपमायाश्च विकल्पाः प्रभेदाः सामान्यलक्षणव्याप्ताः। तेषां पर्यन्तोऽवसानं नास्ति यतस्ततः कारणात्, दिङ्मात्रं सर्वविकल्पव्यापकसामान्यलक्षणानुगतविशेषरूपं कियदपि लक्ष्यं शेषविकल्पानुगमद्वारं दर्शितम् उक्तं धीरैः कविभिरिति परमुखेनाचष्टे। शेषमतिदिशति– अनुक्तमिहानुपात्तं विकल्पजातं सामान्यविशेष-



लक्षणात्मकं तादृशमुक्तविकल्पानुसारेणानुमीयताम् ऊह्यताम्। तस्याप्येवंप्रकारत्वात् शक्यमनया दिशा तदप्यवसातुमभियुक्तैरिति ॥

तद्यथा—

तव तन्वङ्गि ! वदनमिन्दुना तुल्यमित्ययम्।
अभिधत्तां जनो नाहमुत्सहे वक्तुमीदृशम् ॥ अनुत्साहोपमा।

गुञ्जद्भृङ्गमिवाम्भोजं सशीत्कारं मुखं तव।
इति वक्तुमनुत्साहो न युक्तः कलभाषिणि ॥ अयुक्तोपमा।

पयोधरयुगे तन्वि ! तव चक्राह्वयद्वयम्।
अविभक्तमिवाभाति भासुरं कुङ्कुमश्रिया ॥ विशेषोपमा।

एवमन्येप्युपमाविकल्पा अभ्यूह्याः।

मुखेन्दावेव ते तन्वि ! रागपद्मविचक्षणम्।
कामः केवलमाधत्ते धनुः कुसुमसायकम् ॥ नियमरूपकम्।

अङ्गनासरसीं रम्यामुन्निद्रमुखपङ्कजाम्।
शमनासाद्य [?] सन्तापं कथमेष गमिष्यति ॥ आशंसारूपकम्।

अनिच्छयैव ते तन्व्यास्तस्या वदनपङ्कजम्।
विरहय्य विमूढाद्य मनः किमनुतप्यसे ॥ अनुशयरूपकम्।

एवमपरेऽपि रूपकविकल्पा ऊहितव्याः। इति रूपकप्रपञ्चः ॥

॥ इति रूपकचक्रम् ॥

दीपकं परिदीपयन्नाह—

जातिक्रियागुणद्रव्यवाचिनैकत्रवर्तिना।
सर्ववाक्योपकारश्चेत् तदाहुर्दीपकं यथा ॥९७॥

[52a] जातिवाचिना क्रियाभिधायिना गुणप्रकाशिना द्रव्याभिलापिना वा शब्देन वाक्यावयवभूतेन केनचित् एकत्र वाक्यस्यादौ मध्येऽन्ते वा वर्तमाने[न] कर्तृभूतेन सर्वस्याभिमतस्य कस्यचिद् वाक्यस्य क्रियाकारकसम्बन्धाभिधायिनः

पदसन्तानस्यार्थद्वारेण सा[धन]संभवादुपकारः साध्यसाधनभावेन तदपेक्षालक्षणश्चेत् यदि भवति तदेवंरूपं दीपकमाहुः उपदिशन्ति तद्विदः। सर्वं वाक्यं दीपयत्युपकरोतीति दीपकम्। यथेत्युदाहरति ॥

पवनो दक्षिणः पर्णं जीर्णं हरति वीरुधाम् ।
स एवावनताङ्गीनां मानभङ्गाय कल्पते ॥९८॥

पवनो दक्षिणो मलयानिलः। वीरुधां लतानां गुल्मानां वा सम्बन्धि पर्णं शीर्णं हरति क्षिपति, नताङ्गीनां मानवतीनां नवाय प्रत्यग्राय मानस्य विषयस्य वामताविशेषस्य भङ्गाय विगमार्थं च कल्पते संपद्यते। किम्? पवनो दक्षिण इत्यपेक्षते। इह पवनजातिवाचिनादिवर्तिना सर्वमेतत् वाक्यमुपक्रियत इति जात्यादिदीपकमीदृशमवसेयम् ॥

चरन्ति चतुरम्भोधिवेलोद्यानेषु दन्तिनः ।
चक्रवालाद्रिकुञ्जेषु कुन्दभासो गुणाश्च ते ॥९९॥

ते तव दन्तिनो जयकुञ्जराः चतुर्णां पूर्वादीनाम् अम्भोधीनां वेलोद्यानेषु वेलायां वेलारूपाणि वा उद्यानानीति समासः। चरन्ति क्रीडन्ति चक्रवालाद्रेर्लोकालोकाचलस्य कुञ्जेषु सिद्धाध्यासितेषु प्रदेशेषु कुन्दस्येव भासो दीप्तयो येषामिति कुन्दभासो विशदाः, तव गुणाश्च त्यागसत्यशौर्यादयः। किम्? चरन्ति श्रुतिपथमवतरन्ति उदधिवासिनामिति कश्चित् राजा स्तूयते। अत्र चरन्तीति क्रियावाची प्रथमप्रयुक्तः सर्वमेतद्वाक्यमुपकरोतीति क्रियादीपकमेवंजातीयं विज्ञेयमिति ॥

श्यामलाः प्रावृषेण्याभिर्दिशो जीमूतपङ्क्तिभिः ।
भुवश्च सुकुमाराभिर्नवशाद्वलराजिभिः ॥१००॥

प्रावृषेण्याभिः वर्षासमयवर्तिनीभिः जीमूतपङ्क्तिभिः मेघमालाभिः दिशः श्यामलाः नीलाः वर्तन्ते। सुकुमाराभिः शाद्वलराजिभिः शष्पोद्गमैः। भुवश्च भूमयः किम्? श्यामला इत्यपेक्षते। इह श्यामला इति पूर्ववर्तिना गुणवाचिना सर्वमिदं वाक्यमुपक्रियते इति गुणादिदीपकमित्थंभूतं विभाव्यमिति ॥



विष्णुना विक्रमस्थेन दानवानां विभूतयः ।
क्वापि नीताः कुतोऽप्यासन्नानीता दैवतर्द्धयः ॥१०१॥

विक्रमस्थेन बलिबन्धसंनद्धेन विक्रममाणेन दानवानां विभूतयः श्रियः। क्वापि क्वचित् इदन्तया अनिर्देश्ये स्थाने नीताः। [52b] नाशिता इति यावत्। दैवतानामृद्धयो विभूतयः। कुतोऽपि स्थानादव्यपदेश्यात्। आनीता आसन्। अभूवन्। उत्पादिता इति यावत्। इह विष्णुना इति द्रव्यशब्दोऽयं सर्वमेतद्वाक्यमुपजीवयतीति द्रव्यादिदीपकमेवंविधं बोद्धव्यमिति ॥

कतमान्येतानि दीपकानीत्याह—

इत्यादिदीपकान्युक्तान्येवं मध्यान्तयोरपि ।
वाक्ययोर्दर्शयिष्यामः कानिचित् तानि तद्यथा ॥१०२॥

इत्येवंरूपाणि वाक्यादौ प्रयुक्तान्यादिदीपकान्युक्तानि जात्यादिभेदेन चत्वारि वेदितव्यानि। एवमनेन प्रकारेण तानि दीपकानि का[नि]चित् कतिपयानि न सर्वाणि वाक्ययोः वाक्यद्वयस्य काव्यरूपस्य मध्येऽन्ते च दर्शयिष्याम उदाहरिष्यामः। तद् यथेति निदर्शयन्ति ॥

नृत्यन्ति निचुलोत्सङ्गे गायन्ति च कलापिनः ।
बध्नन्ति च पयोदेषु दृशो हर्षाश्रुगर्भिणीः ॥१०३॥

कलापिनो मयूरा नृत्यन्ति गायन्ति च निचुलानाम् अभिनवमञ्जरीपुञ्जरञ्जितानाम् उत्सङ्गे विटपरूपे पयोदेषु जलधरोत्सवजन्महर्षाश्रु गर्भोऽन्तर्वर्ति यासां ता दृशश्चक्षूंषि बध्नन्ति नियच्छन्ति च। कलापिन इत्यपेक्षते। इह कलापिन इत्यनेन जातिवाचिना वाक्यमध्यवर्तिना सर्वमेतद्वाक्यमुपक्रियत इति जातिमध्यदीपकम् ईदृशं दृश्यमिति ॥

मन्दो गन्धवहः क्षारो वह्निरिन्दुश्च जायते ।
चर्चा चन्दनपातश्च शस्त्रपातः प्रवासिनाम् ॥१०४॥

मन्दो गन्धवहो मृदुः पवनः प्रवासिनां विरहिणां क्षारो जायते, व्यथाहेतु

त्वात्। इन्दुश्च वह्निः अग्निः जायते, दाहकत्वात्। चर्चारूपश्च श्वासकत्वभावः चन्दनस्य पातोऽनुलेपश्च शस्त्रपातोऽसिपातो जायते, दुःखजनकत्वात्। इह जायत इति क्रियापदेन मध्यवर्तिना सर्ववाक्योपकार इति क्रियामध्यदीपकमीदृशं वेदितव्यमिति। गुणदीपकं द्रव्यदीपकं च मध्यवर्ति नोदाहृतम्। अत एव कानिचिदित्युक्तम्। तत्तु यथा—

दहत्यपि नरेन्द्राणां मनांसि तव विक्रमः।
निर्वापयति चेतांसि सुहृदां संशयः श्रियः॥

कृतो [ज्ञान]मयः श्रीमान् प्रकाशः सर्वदर्शिना।
हृतं च सर्वदिग्व्यापि दुर्जयं जगतां तमः॥

इति॥

जलं जलधरोद्गीर्णं कुलं गृहशिखण्डिनाम्।
चलं च तडितां दाम बलं कुसुमधन्वनः॥१०५॥

जलधरैः उद्गीर्णं विमुक्तं जलं गृहेषु शिखण्डिनां कुलं वृन्दं तडितां च दाम गुणः चलं सर्वमेतत् वस्तु मनोज्ञं कुसुमधन्वनः कामस्य बलम् अनीकं जगद्विजयिनः आत्मोदयानुगुणत्वात्। इह बलमात्रं जलधरोद्गीर्णजलादिभेदत्रयानुगत[मपोढप्रत्येक]विशेषं विवक्षितमिति जात्यन्तदीपकमेतत्, तेन सर्ववाक्योपकारादिति॥

त्वया कर्णोत्पलं कर्णे स्मरेणास्त्रं शरासने।
मयापि मरणे चेतस्त्रयमेतत् समं कृतम्॥१०६॥

वराङ्गि, त्वया कर्णे कर्णोत्पलम् अवतंसकुवलयं कृतं यदा तदैव स्मरेण शरासने धनुषि कृतम् अस्त्रं शरः, मया च रागवेगमूर्च्छितेन मरणे दशम्यां दशायां चेतः कृतमित्येतत्त्रयम्। त्रिभिरेभिरस्माभिरेतेषु त्रिषु समं युगपत् कृतमिति क्रियान्तदीपकमिदं कृतमित्यन्तवर्तिना क्रियावचनेन सर्ववाक्योपकृतेरिति॥

इहापि गुणद्रव्यलक्षणमन्तदीपकद्वयं न निदर्शितं तदपि यथा—



सम्भारसकरोद्बोधेस्तत्त्वज्ञानमजीजनत्।
उज्जहार जगद् दुःखान्मुनीन्द्र भवतः कृपा॥

दिगन्तबद्धनिर्घोषं ममन्थ क्षीरसागरम्।
विगलन्मथनायासं लेभे लक्ष्मीमधोक्षजः॥

इति॥

शुक्लः श्वेतार्चिषो वृद्ध्यै पक्षः पञ्चशरस्य सः।
स च रागस्य रागोऽपि यूनां रत्युत्सवश्रियः॥१०७॥

शुक्लः पक्षः श्वेतार्चिषः चन्द्रस्य वृद्ध्यै उपचयार्थं प्रवर्तते। स श्वेतार्चिः पञ्चशरस्य वृद्ध्यै। स पञ्चशरो यूनां रागस्य वृद्ध्यै। रागोऽप्यसौ रत्युत्सवश्रियो वृद्ध्यै कल्पते। रतिः सम्भोग एवोत्सवः प्रीतिलक्षणत्वात्। तस्य श्रीः उत्कर्षः स एव वा श्रीः विभूतिरूपत्वात् इति योज्यम्॥

किमिदं दीपकमित्याह—

इत्यादिदीपकत्वेऽपि पूर्वपूर्वव्यपेक्षिणी।
वाक्यमाला प्रयुक्तेति तन्मालादीपकं मतम्॥१०८॥

इत्येवंविधं यत्तन्मालादीपकं मतम् इष्टम्। ननु क्रियादिदीपकमेतद् वृद्ध्यै इति क्रियावाचिनादिवर्तिना सर्ववाक्योपकारादित्याह—आदिदीपकत्वेऽपीति। यद्यप्यादिदीपकमेतत्तथापि विशेषापेक्षया मालादीपकमुच्यते। कः पुनरसौ विशेषः येनैवं व्यपदिश्यत इत्याह—पूर्वेत्यादि। वाक्यानां श्वेतार्चिषो वृद्ध्यै शुक्लः पक्षो भवति, स च पञ्चशरस्य वृद्ध्यै भवतीत्येवमादीनां माला पंक्तिः पूर्वं पूर्वं यथोक्तेन विधिना अपेक्षमाणा प्रयुक्तेति। अयमत्र विशेषोऽपेक्षितः। तस्मान्मालादीपकमीदृशमाख्यायते, नादिदीपकमिति॥

अवलेपमनङ्गस्य वर्धयन्ति बलाहकाः।
कर्शयन्ति तु घर्मस्य मारुतोद्धूतशीकराः॥१०९॥

अनङ्गस्य अवलेपं दर्पं वर्धयन्ति उपचिन्वन्ति बलाहकाः। मारुतोद्धूतशीकराः

[53b] मारुतैरुद्धूता विकीर्णाः शीकरा जलकणा येषां यैरिति वा विग्रहः। घर्मस्य तु निदाघस्य पुनः अवलेपं कर्पयन्ति कृ[शं कुर्व]न्ति इति ॥

तद् व्याचष्टे—

अवलेपपदेनात्र वलाहकपदेन च ।
क्रिये विरुद्धे संयुक्ते तद्विरुद्धार्थदीपकम् ॥११०॥

अवलेपपदेन व्याप्यभूतेन बलाहकपदेन कर्तृवाचिना सह विरुद्धे परस्परव्याहते क्रिये वर्द्धनकर्षणे संप्रयुक्ते सम्बद्धे अवलेपविषयत्वात्, बलाहककर्तृकत्वाच्च भवतः यतः तत्तस्मात् विरुद्धार्थदीपकमीदृशमिदम्। यद्वेदृशं तद् विरुद्धार्थदीपकमिति योज्यम् ॥

हरत्याभोगमाशानां गृह्णाति ज्योतिषां गणम् ।
आदत्ते चाद्य मे प्राणानसौ जलधरावली ॥१११॥

आशानां दिशाम् आभोगं विस्तारं हरति गृह्णाति। ज्योतिषां नक्षत्राणां गणं गृह्णाति हरति। योऽहमेवं विरहविधुरः, तस्य मे मम प्राणान् आदत्ते गृह्णाति। असौ इयं जलधरावली मेघपंक्तिरिति ॥

तद् विवृणोति—

अनेकशब्दोपादानात् क्रियैकैवात्र दीप्यते ।
यतो जलधरावल्या तस्मादेकार्थदीपकम् ॥११२॥

अनेकस्य हरत्यादेः शब्दस्य क्रियापदस्य पर्यायरूपस्य उपादानात् प्रयोगेण एकैवापवातलक्षणा क्रिया दीप्यते उपक्रियते जलधरावल्या कर्तृभूतया यतः तस्मादेकार्थदीपकमीदृशमवसेयमिति ॥

हृद्यगन्धवहास्तुङ्गास्तमालश्यामलत्विषः ।
दिवि भ्रमन्ति जीमूता भुवि चैते मतङ्गजाः ॥११३॥

जीमूता मेघाः दिवि नभसि भ्रमन्ति अमी। मतङ्गजा हस्तिनश्च एते भुवि भ्रमन्ति। हृद्यो मनोहरो गन्धवहः पवनो येषाम् जीमूतानां ते, तथा हृद्यं गन्धं



मदमयं वहन्ति क्षिपन्ति समन्तादिति हृद्यगन्धवहाः मतङ्गजा इति शब्दश्लेषः। हृद्यो वा मदमिश्रः गन्धवहः पवनो येषामित्यर्थश्लेषः। तुङ्गा महान्तः तमालवत् श्यामला नीला [त्विट् कान्तिर्येषां ते।] उभयेऽपीत्यर्थश्लेषः ॥

तद् विभजते—

अत्र धर्मैरभिन्नानामभ्राणां दन्तिनां तथा ।
भ्रमेणैकेन सम्बन्ध इति श्लिष्टार्थदीपकम् ॥११४॥

अत्र प्रयोगे धर्मैर्हृद्यगन्धवहत्वादिभिः गुणैरभिन्नानां समानामभ्राणां हस्तिनां च भ्रमेणैव एकेन कर्मणा दीपकेन सम्बन्धः साध्यसाधनलक्षणः प्रतीयत इति हेतोः श्लिष्टार्थदीपकमीदृशम्, श्लेषानुगतत्वात् इति ॥

[54a]अनुक्तान् दीपकविकल्पान् अतिदिशन्निगमयति—

अनेनैव प्रकारेण शेषाणामपि दीपके ।
विकल्पानामनुगतिर्विधातव्या विचक्षणैः ॥११५॥

अनेनव अनन्तरोक्तेन प्रकारेण विधिना दीपके दीपकविषयाणां शेषाणामनुक्तानामपि विकल्पानां भेदानामनुगतिरवबोधः। विधातव्या क्रियतां विचक्षणैः कविभिरिति ॥ सा चानुगतिरेवं विधातव्या—

अधरस्तव तन्वङ्गि! रागः साक्षादिवेक्ष्यते।
हृदयं रञ्जयत्येष प्राणान् हरति यन्मम ॥ उपमादीपकम्।

हरन्ति हरिणाक्षीणां दृष्टयो रागलालसाः।
वदन्तीव जनान्मुक्तेरायता वत्मर्गलाः ॥ उत्प्रेक्षादीपकम्।

न खड्गधारा निशिता निशाता नापि सायकाः!
हरन्ति [च] मम प्राणान् मृगाक्षि तव विभ्रमाः ॥ आक्षेपदीपकम्।

एवमन्येऽपि दीपकविकल्पा अनुगन्तव्या इति ॥

॥ इति दीपकचक्रम् ॥

आवृत्तिमधिकृत्याह —

अर्थावृत्तिः पदावृत्तिरुभयावृत्तिरेव च ।
दीपकस्थान एवेष्टमलङ्कारत्रयं यथा ॥११६॥

अर्थस्य अभिधेयस्य आवृत्तिः पुनः पुनरुद्भावनम् । पदस्य शब्दस्य आवृत्तिः भूयः समुच्चारणम् । उभयस्यार्थस्य पदस्य चावृत्तिरप्यावृत्तिश्चेति । एवंलक्षणम् अलङ्कारत्रयम् आवृत्तिविरोधात्मकमिष्टं दीपकस्य स्थाने विषय एव नान्यत्र । दीपकेनापि तादृशार्थप्रतीतिसम्भवात् नार्थतः तयोः भेद इति दीपकस्थान एवेष्टमित्युक्तम् । अन्ये त्वेकत्र दीपकस्थान इति विशेषेण व्याचक्षते तदसारम् । एवं हि अर्थावृत्तिरेव दीपकस्थाने स्यात् , न शेषमावृत्तिद्वयम् । आवृत्तित्रयमपि च दीपकस्थान इत्युक्तं शास्त्रकृता दीपकस्थान एवेष्टमलङ्कारत्रयमिति साक्षादभिधानात् । ततः शास्त्रविरुद्धमेव व्याख्यानम् । तस्माद्दीपकावृत्त्योः समानो विषयः, उभयथापि तदर्थावगमसम्भवात् । प्रयोगतस्त्वनयोर्भेदः । न चैवमवगन्तव्यम्– यदि सोऽर्थो दीपकेनापि गम्यते किमनयेति दीपकसमानत्वादस्य पर्यनुयोगस्य । दीपकवच्चास्यापि शिष्टैरिष्टत्वात् कथमियमतिरिच्यते ? तेषां सर्वथेह प्रमाणत्वात् । कथं न दिष्टातिक्रमः ? तस्मात् अर्थाभेदेऽपि दीपकवदियमप्यनुगम्यते, द्वयोरप्यलङ्कारतयेष्टत्वात् । अत एवोक्तम्– दीपकस्थान एवेष्टमिति । शिष्टैरितिगम्यते । तस्मादभिन्नस्थानत्वेऽपि प्रयोगभेदा[ ]दुभयमपीष्टं शिष्टैरित्यलमतिविमर्देन इति ॥

विकसन्ति कदम्बानि स्फुटन्ति कुटजोद्गमाः ।
उन्मीलन्ति च कन्दल्यो दलन्ति ककुभानि च ॥११७॥

कदम्बानि मुकुलानि विकसन्ति । कुटजानां कुटजरूपा वा उद्गमाः कुड्मलानि स्फुटन्ति विकसन्ति । कन्दल्यश्च कुसुमान्युन्मीलन्ति विकसन्ति । ककुभानि कोरकाणि च दलन्ति विकसन्ति । इत्यर्थावृत्तिरियमुदाहृता । विकासलक्षणस्यैकस्यार्थस्यानेकैः पर्यायैरभीक्ष्णमाविष्करणादिति । दीपकेनाप्ययमर्थः प्रकाश्यते । तद्यथा—

विकसन्ति कदम्बानि तथैव कुटजोद्गमाः ।
सुगन्धयश्च कन्दल्यः कलानि ककुभानि च ॥ इति ।



उत्कण्ठयति मेघानां माला वर्गं कलापिनाम् ।
यूनां चोत्कण्ठयत्यद्य मानसं मकरध्वजः ॥११८॥

कलापिनां वर्गमुत्कण्ठयति उद्ग्रीवयति मेघानां माला यूनां च मानसं मकरध्वजः उत्कण्ठयति पर्युत्सुकयति अद्य प्रावृषि । पदावृत्तेरिदमुदाहरणम् । पदस्यैवोत्कण्ठयतीत्यस्यावृत्तेः । अर्थस्य तु भेदादयमप्यर्थो दीपकेन परिदीप्यते । तद्यथा —

उत्कण्ठयति मेघानां माला वर्गं कलापिनाम् ।
यूनां च रागसर्वस्वं मानसं मकरध्वजः ॥ इति ॥

जित्वा विश्वं भवानत्र विहरत्यवरोधनैः ।
विहरत्यप्सरोभिस्ते रिपुवर्गो दिवं गतः ॥११९॥

विश्वं जगत् जित्वा अत्र महीमण्डले अद्य च अधुना अवरोधनैः अन्तःपुरसुन्दरीभिः सह भवान् विहरति रमते । तव रिपुवर्गो दिवं स्वर्गं तवासिधारापथेन गतः सह अप्सरोभिः दिव्याङ्गनाभिः सह विहरति इत्युभयावृत्तिर्निदर्शिता, विहरति इत्यर्थस्य पदस्यावृत्तेरिति ॥

इदमपि दीपकस्य स्थानम् । तद्यथा—

जित्वा विश्वं भवानत्र विहरत्यवरोधनैः ।
रम्याभिरप्सरोभिस्ते रिपुवर्गो दिवं गतः ॥ इति ।

अत एव दीपकस्थान एवेष्टमलङ्कारत्रयमिति सामान्येनोक्तम् ॥

॥ इति आवृत्तिचक्रम् ॥

आक्षेपमुपक्षिपन्नाह—

प्रतिषेधोक्तिराक्षेपस्त्रैकाल्यापेक्षया त्रिधा ।
अथास्य पुनराक्षेप्यभेदानन्त्यादनन्तता ॥१२०॥

प्रतिषेधस्योक्तिर्वचनमित्यनूद्य आक्षेप इति विधीयते । स च त्रिधा त्रिभिः प्रकारैस्तावद् भिद्यते । कथम् । त्रयोऽतीतानागतवर्तमानाः कालास्त्रैकाल्यम् । तदपेक्षया

आश्रयणेन हेतुना भूताक्षेपः, भविष्यदापेक्षः, वर्तमानापेक्ष इति। अत्र त्रिधाभेदानन्तरमस्याक्षेपस्य अनन्तता अनवसितभेदता। कुतः? आक्षेपस्य निषेधस्यार्थसा[55a]मान्यस्य भेदाः विकल्पा आक्षेपरूपा वा भेदाः। तेषामानन्त्यादपर्यवसानात् कारणादिति ॥

अनङ्गः पञ्चभिः पौष्पैर्विश्वं व्यजयतेषुभिः।
इत्यसंभाव्यमथवा विचित्रा वस्तुशक्तयः ॥१२१॥

पौष्पैः पुष्पमयैः एकान्तमृदुभिस्तैरपि पञ्चभिः स्वल्पैरिषुभिः शरैः स पञ्चेषुरनङ्गः विश्वं जगत् सर्वं व्यजयत विजितवानिति असम्भाव्यमयुक्तमेतत्। कथमस्याः सामग्र्याः कार्यमीदृशं संभाव्यते? अथवा किं न सम्भाव्यते? यतो वस्तूनां पदार्थानां शक्तयः विचित्रा नानाप्रकारा अचिन्त्यास्तदेषामपि तादृशी शक्तिर्भवेत्। न किञ्चिद्बाधकमिति ॥

कोऽयमाक्षेप इत्याह—

इत्यनङ्गजयायोगबुद्धिर्हेतुबलादिह।
प्रवृत्त्यैव यदाक्षिप्ता वृत्ताक्षेपस्तदीदृशः ॥१२२।

इत्येवमनन्तरोक्तस्य अनुरूपस्य च हेतोः कारणस्य पौष्पपञ्चशरत्वादेः। बलात् सामर्थ्यात् प्रवृत्ता भूतैवानङ्गजयायोगबुद्धिः। अनङ्गस्य जयो विश्ववशीकरणम्। तस्यायोगोऽसम्भावना तत्र बुद्धिः अनङ्गो व्यजयतेत्यसम्भाव्यमित्येवाकाराक्षिप्ता निषिद्धा। हेतुबलादित्यत्राप्यपेक्षणीयम्। भाववदभावस्यापि सहेतुकत्वात्। हेतुबलं चात्र विचित्रवस्तुशक्तिदर्शनम्। यद् यतः तत् तस्मात् ईदृशः एवंप्रकारो वृत्तस्याक्षेपो भूतकालाक्षेपोऽवसेय इति ॥

कुतः कुवलयं कर्णे करोषि कलभाषिणि।
किमपाङ्गमपर्याप्तमस्मिन् कर्मणि मन्यसे ॥१२३॥

कलभाषिणि मञ्जुवचने! प्रियामन्त्रणम्। कर्णे कुवलयम् अवतंसोत्पलम् कुतः कस्मात् करोषि? वृथैव तत् क्रियते, अपाङ्गेन कर्णपूरकार्याचरणादित्याह—किमित्यादि। अपाङ्गं नयनोपान्तम् अस्मिन् प्रस्तुते कर्मणि कर्णावतंसोत्पलकृत्ये



-अपर्याप्तम् असमर्थम् मन्यसे? किमिति क्षेपे प्रश्ने वा। नैवं मन्तव्यं पर्याप्तमिदमस्मिन् कर्मणीति ॥

तद् व्याचष्टे—

स वर्तमानाक्षेपोऽयं कुर्वत्येवासितोत्पलम्।
कर्णे काचित् प्रियेणैवं चाटुकारेण रुध्यते ॥१२४॥

सोऽयमीदृशो वर्त[मा]नस्य करणस्य आक्षेपः। वर्तमानकालविषयो निषेधः। कथम्? काचित् प्रिया कर्णे स्वस्मिन् असितोत्पलमिन्दीवरं कुर्वती कुर्वाणैव, न कृतवती करिष्यन्ती वा। रुध्यते आक्षिप्यते प्रियेण चाटुकारेण प्रियाचरणचतुरेण। एवमनन्तरोक्तेन प्रकारेण यतस्तस्माद्वर्तमानाक्षेपोऽयमिति निगमनीयम् इति ॥

सत्यं ब्रवीमि न त्वं मां द्रष्टुं वल्लभ! लप्स्यसे।
अन्यचुम्बनसंक्रान्तलाक्षारक्तेन चक्षुषा ॥१२५॥

[55b]वल्लभ! सत्यं नियतमिदम् अहं त्वां ब्रवीमि मा अन्यथा मंस्थाः। किं तदित्यादि। नेत्यादि। अन्यया प्रतियोषिता अन्यस्या वा विलासलाक्षारागरञ्जिताधरपल्लवया। चुम्बनात् वक्त्रयोगात् संक्रान्तः संचरितो लाक्षारागो यत्र तेन चक्षुषा मां द्रष्टुं त्वं न लप्स्यसे नाहमीदृशं व्यतिकरमपरेव सोढुं शक्नोमि। तदैव मे लोकान्तरप्रस्थानम्। ईदृशीयं सृष्टिः किं करवाणीति ॥

तद् विवृणोति—

सोऽयं भविष्यदाक्षेपः प्रागेवातिमनस्विनी।
कदाचिदपराधोऽस्य भावीत्येवमरुन्ध्द यत् ॥१२६॥

यद् यस्मात् अतिमनस्विनी सर्वथा दोषमर्षणपराङ्मुखस्वभावा काचित् प्रणयिनी कदाचिदस्य पुनरपराधो व्यलीकं भावी भवेदिति शङ्कमाना प्रागेवानागतविधायितयारुन्ध्द आक्षिपत्। एवमनन्तरोक्तेन प्रकारेण। तस्मात्सोऽयमीदृशः भविष्यदाक्षेपो भविष्यत एव दर्शनलाभादेराक्षेपादिति ॥

तत्र तन्वङ्गि! मिथ्यैव रूढमङ्गेषु मार्दवम्।
यदि सत्यं मृदून्येव किमकाण्डे रुजन्ति माम् ॥१२७॥

तन्वङ्गि ! तवाङ्गेषु मार्दवं सौकुमार्यं मिथ्यैव असत्यमपि रूढं प्रसिद्धमासीत् । मिथ्याप्रसिद्धिरेवेयं यत् तवाङ्गानि मृदूनि इति यावत् । तथाहि यदि सत्यं परमार्थतो मृद्वङ्गानि भवेयुः, नोपचारमात्रम् । सत्यमिति भवनक्रियाविशेषणम् । मां किं कस्मात् रुजन्ति पीडयन्ति । अकाण्डे अकस्मात् । क्रूरकार्यं हि पीडनम् । तत्कथं मार्दवे युज्यत इति ॥

कतमोऽयमाक्षेप इत्याह—

धर्माक्षेपोऽयमाक्षिप्तमङ्गनागात्रमार्दवम् ।
कामुकेन यदत्रैवं कर्मणा तद्विरोधिना ॥१२८॥

यद् यस्मात् अत्र प्रयोगे कामुकेन केनचित् चाटुकारेण कर्तृभूतेन तद्विरोधिना प्रतिद्वन्द्विना कर्मणा[न]ङ्गरुजारूपेण करणभूतेनाङ्गनाया गात्रेषु मार्दवमेवमुक्तेन प्रकारेणाक्षिप्तं निषिद्धम् । तस्मादयमीदृशो धर्मस्याक्षेप इति ॥

सुन्दरी सा न वेत्येष विवेकः केन जायते ।
प्रभामात्रं हि तरलं दृश्यते न तदाश्रयः ॥१२९॥

सा विवक्षिता काचित् सुन्दरी भवतीति तावन्निश्चयरूपो विवेकः विभाग-प्रतिपत्तिः । न वा सा भवतीत्यभावनिर्णयलक्षणो विवेकः । एषोऽयं केन हेतुना जायते ? न केनचिदित्यर्थः । किं कारणमित्याह– प्रभेत्यादि । हिर्यस्मादर्थे । तत्र तस्यां तरलम् उज्ज्वलम् प्रभा कान्तिः धर्म एव मात्रं न धर्मी दृश्यते गृह्यते । यदाह– नाश्रय इति । प्रभानाम्नो धर्मस्य आश्रयः अधिकरणं देहे न दृश्यते । [56a] तत्कथमयं विवेक इति प्रकृतमुपसंहार्यमिति ॥

तद्विभजते —

धर्म्याक्षेपोऽयमाक्षिप्तो धर्मी धर्मं प्रभाह्वयम् ।
अनुज्ञायैव यद्रूपमत्याश्चर्यं विवक्षता ॥१३०॥

यद् यस्मात् अत्र विषये रूपं वर्णसंस्थानात्मकं भूतगुणम् अत्याश्चर्यम् अत्यन्ताद्भुतम्, एवं नामेदं प्रतिविशिष्टं यदाश्रयोऽपि तत्र लावण्यराशौ निर्मग्नो न



दृश्यते इति वक्तुम् इच्छता चाटुकारेण केनचिदाक्षिप्तो धर्मी आश्रयः । धर्मं गुणं प्रभाह्वयं कान्त्यभिधानम[नु]ज्ञाय अनाक्षिप्य । प्रभेत्याह्वयो नाम यस्येति विग्रहः । तस्माद्धर्मिण आक्षेपो निराशः ॥

चक्षुषी तव रज्येते स्फुरत्यधरपल्लवः ।
भ्रुवौ च भुग्ने न तथाप्यदुष्टस्यास्ति मे भयम् ॥१३१॥

चण्डि ! चक्षुषी तव इमे रज्येते रोषरागमागच्छतः । अधरश्च पल्लवोऽयं स्फुरति कोपकम्पमनुगच्छति । भ्रुवौ च इमे भुग्ने जिह्मभावमाभजतः । कामं तथापि । अदुष्टस्यानिरागसो मे मम भयं त्रासो नास्ति । सापराधो हि बिभीयात् । किमहमवाच्यो बिभेमीति ॥

तद्विवृणोति—

स एष कारणाक्षेपः प्रधानं कारणं भियः ।
स्वापराधो निषिद्धोऽत्र यत् प्रियेण पटीयसा ॥१३२॥

यद् यस्मात् पटीयसा दोषपरिहारचतुरेण प्रियेण भियो भयस्य प्रधानम् उचितं कारणम् अन्यद् भवदपि अनुचितं स्वस्य स्वो वा अपराधो दोषो निषिद्धः अत्र प्रयोगे । तस्मात् स एष ईदृशः कारणस्य [आ]क्षेपो विज्ञेय इति ॥

दूरे प्रियतमः सोऽयमागतो जलदागमः ।
दृष्टाश्च फुल्ला निचुला न मृता चास्मि किं न्विदम् ॥१३३॥

प्रियतमो दूरे प्रेषितो वर्तते । योऽसौ विरहिणीप्राणप्रयाणसमयः सोऽयं जलदागमोऽप्यागतः । फुल्ला निचुला वञ्जुला मञ्जुमञ्जरीजालजटिलशिरसो दृष्टा दृष्टि-कटवः । एवं [सन्निहित]समग्रमरणकारणा साहं न च मृतास्मि । किं न्विदं विधि-विलसितं दीर्घदुःखभाजनतां नीता वयम् अमुना दग्धदैवेनेति ॥

तद् व्याचष्टे—

कार्याक्षेपः स कार्यस्य मरणस्य निवर्तनात् ।
तत्कारणमुपन्यस्य दारुणं जलदागमम् ॥१३४॥

तस्य मरणस्य कारणं दारुणम् अतिदुःसहं जलदागममुत्फुल्लनिचुलं प्रियवियोगसचिवमुपन्यस्य प्रतिपाद्य कार्यस्य मरणस्य निवर्तनात् न मृतास्मीति सोऽयमीदृशः कार्यस्याक्षेपः प्रतिपत्तव्य इति ॥

न चिरं मम तापाय तव यात्रा भविष्यति ।
यदि यास्यसि यातव्यमलमाशङ्कयात्र ते ॥१३५॥

वल्लभ! तव यात्रा गमनं चिरं दीर्घं मम तापाय दुःखार्थं न भविष्यति। स्वल्पोऽपि तापस्त्वया विना मृताया न मे सम्भवति। जीवन्ती हि तमनुभवेत्। न च मरणसुखं परित्यज्य काचित्सचेतना दुःख[56b]भावमीदृशं प्रतीच्छवीति पञ्चतां सूचयतीति। अत्र च वस्तुनि ते तव शङ्कया अन्यथासम्भावनयालं नान्यथा शङ्कनीयं नियतमेतन। तस्मात् यदि यास्यसि यातव्यं गम्यतां किं स्थीयत इति ॥

तद् व्याचष्टे—

इत्यनुज्ञामुखेनैवं कान्तस्याक्षिप्यते गतिः ।
मरणं सूचयन्त्यैव सोऽनुज्ञाक्षेप इष्यते ॥१३६॥

इत्युक्तेन विधिना अनुज्ञामुखेन अनुमतिद्वारेणैवं यातव्यमिति कान्यस्य गतिः आक्षिप्यते मरणमात्मनः सूचयन्त्या भङ्गया कथयन्त्यैव प्रियया। इदमाक्षेपनिमित्तम्। तस्मात् स तादृशोऽनुज्ञाक्षेप इष्यते तज्ज्ञैरिति ॥

धनं च बहु लभ्यं ते सुखं क्षेमं च वर्त्मनि ।
न च मे प्राणसन्देहस्तथापि प्रिय! मा स्म गाः ॥१३७॥

बहु प्रभूतं धनं लभ्यं ते तवास्तु। अनेन योगो दर्शितः। क्षेमश्च लब्धधनरक्षणलक्षणः। सुखं च वर्त्मनि क्लेशाभावात् भवतु नाम। न च मे त्वद्वियुक्तायाः प्राणसन्देहो मरणमप्युपगतम्। तथाप्येवं गमनपरिपन्थिनिमित्ताभावेऽपि प्रिय मा स्म गाः न गन्तव्यम्। एवं तावन्मयेष्टमिति अव्याहतप्रणयप्रसरा काचिदाक्षिपति ॥



तद् व्याचष्टे—

प्रत्याचक्षाणया हेतून् प्रिययात्रां विबध्नतः ।
प्रभुत्वेनैव रुद्धस्तत् प्रभुत्वाक्षेप इष्यते ॥१३८॥

प्रियस्य यात्रां विबध्नतो'विरुद्धान् हेतून् अयोगक्षेमादीन् तत्प्रतिपक्षप्रकाशनेन प्रत्याचक्षाणया निवारयन्त्या गन्तुकामस्य कस्यचित् प्रभुत्वेनैव कान्तविषयेण स्वातन्त्र्येण रुद्ध आक्षिप्तो यतस्तत् तस्मादीदृश एवंजातीयः प्रभुत्वाक्षेप इष्यत इति ॥

जीविताशा बलवती धनाशा दुर्बला मम ।
गच्छ वा तिष्ठ वा कान्त! स्वावस्था तु निवेदिता ॥१३९॥

जीविते प्राणेष्वाशा आसक्तिः बलवती गरीयसी। मम धनेष्वाशा अभिलाषः पुनर्दुर्बला तन्वी। धनादपि मे जीवितं प्रियमित्यर्थः। ततो नाहं जीवितव्ययेन त्वयात्रासाध्यं धनमभिलषामि। त्वं पुनर्यथेच्छसि तथा कुरु। गच्छ वा तिष्ठ वा। न किंचित् मम अनया चिन्तया। तदपि किं त्वमीच्छसीत्याह– स्वावस्था तु निवेदितेति। स्वाभिप्रायः पुनर्मया दर्शित एव, न मे जीविताद्धनं दयितम्, यतः प्राणमूल्येन तदुपादास्ये। जीवितमेवा[भिलषामि]। न किञ्चिन्मे तेन धनेनेति ॥

तद्विभजते—

असावनादराक्षेपो यदनादरवद्वचः ।
प्रियप्रयाणं रुन्धत्या प्रयुक्तमिह रक्तया ॥१४०॥

[यत्] यस्मादिह प्रयोगे रक्तया कयाचित् प्रियस्य प्रयाणं रुन्धत्या आक्षिपन्त्या अनादरवदनादरोऽस्मिन्नस्तीति आस्थाशून्यं वचो वचनं गच्छ वा तिष्ठ वा इति प्रयुक्तम्, तस्मात् असौ ईदृशोऽनादराक्षेपः॥

गच्छ गच्छसि चेत् कान्त! पन्थानः सन्तु ते शिवाः ।
ममापि जन्म तत्रैव भूयाद् यत्र गतो भवान् ॥१४१॥

[57a] कान्त, गच्छसि चेत्। यदि निश्चितं गमनम्, गच्छ। किं स्थीयते, [ते तव] पन्थानः शिवाः सुखावहाः सन्तु इदमाशास्महे। इदं चापरम्, ममापि

तद्विरहग्रहापहृतजीवितायाः जन्म प्रादुर्भावस्तत्रैव भूयात्, यत्र देशे गतो भवान्। न केवलं तव तत्र गमनमित्यपि शब्दः ॥

तत्प्रतिपादयति—

इत्याशीर्वचनाक्षेपो यदाशीर्वादवर्त्मना ।
स्वावस्थां सूचयन्त्यैव कान्तयात्रा निषिध्यते ॥१४२॥

यस्मादित्येवमाशीर्वादवर्त्मना इष्टाशंसनमुखेन कान्तस्य [यात्रा] गमनं निषिध्यते। स्वामवस्थां निधनप्राप्तिं कान्तप्रयाणकारणां सूचयन्त्या सव्याजमावेदयन्त्या कयाचित् प्रियया। तस्मात् आशीर्वचनाक्षेपस्तादृश इति ॥

यदि सत्यैव ते यात्रा काप्यन्या मृग्यतां त्वया ।
अहमद्यैव रुद्धास्मि रन्ध्रापेक्षेण मृत्युना ॥१४३॥

ते तव यात्रा गमनं सत्यैव नियतैव यदि [न] वचनमात्रं, तदा कापि काचिदन्या प्रिया मृग्यताम् अन्विष्यताम् त्वया स्त्रीवधवल्लभेन। पूर्णो ममावधिः। यदाह— अद्यैव न कालान्तरे साहं रुद्धा क्रोडीकृता अस्मि मृत्युना रन्ध्रं त्वद्विरहादिलक्षणम् अवकाशम् अपेक्षमाणेन। त्यज्यतामस्मत्प्रत्याशा। न चाहं तव किञ्चिदिति ॥

तदभिधत्ते—

इत्येवं परुषाक्षेपः परुषाक्षरपूर्वकम् ।
कान्तस्याक्षिप्यते यस्मात् प्रस्थानं प्रेमनिघ्नया ॥१४४॥

इत्येवं परुषं निरपेक्षमक्षरं वचनं पूर्वं यस्मिन् आक्षेप इति क्रियाविशेषणम्। कान्तस्य प्रस्थानं यात्रा आक्षिप्यते। प्रेमनिघ्नया कयाचिदनुरागपरवशया यस्मात् ततः परुषाक्षेप एष इति ॥

गन्ता चेद् गच्छ तूर्णं ते कर्णौ यान्ति पुरा रवाः ।
आर्तबन्धुमुखोद्गीर्णाः प्रयाणप्रतिबन्धिनः ॥१४५॥

गन्ता गच्छसि चेत्। गच्छ तूर्णं शीघ्रं मा विलम्बिष्ठाः, यतोऽमङ्गलपरिहारः स्यात्। यदाह— आर्तानामेतन्मरणशोकातुराणां बन्धूनां मुखैरुद्गीर्णा मुक्ता रवा



आक्रन्दाः प्रयाणं प्रतिबध्नन्तः तव कर्णं पुरा यन्ति यास्यन्ति यावत् ते नोत्तिष्ठन्ति तावदेव गच्छेति ॥

तद्विभजते—

साचिव्याक्षेप एवैष यदत्र प्रतिषिध्यते ।
प्रियप्रयाणं साचिव्यं कुर्वत्यैवातिरक्तया ॥१४६॥

यद्यस्मात्। अत्र प्रयाणे सा[चि]व्यं सहायभावं कुर्वत्यैव कयाचित् अतिरक्तया प्रियस्य प्रयाणं निपुणं प्रतिषिध्यते। ततः साचिव्ययोगादेष ईदृशः साचिव्याक्षेप एवेति ॥

गच्छेति वक्तुमिच्छामि मत्प्रिय! त्वत्प्रियैषिणी ।
निर्गच्छति मुखाद् वाणी मा गा इति करोमि किम् ॥१४७॥

मम प्रिय वल्लभ! तव प्रियं प्रयाणमिच्छन्तो सती गच्छेति वक्तुमिच्छामि। तथाप्यनिच्छन्त्या एव मे मुखात् मा गास्त्वमिति वाणी [57b] वचनं निर्गच्छति। किमहं करोमि। न मे कश्चित् तावद्दोषः। त्वत्प्रियं मत्प्रियैषिणीति पाठे गच्छेत्येतत् तव प्रियं वक्तुमिच्छामि मम प्रियमिच्छन्ती वाणी मा गा इति निर्गच्छतीति व्याख्येयमिति ॥

तद्विवृणोति—

यत्नाक्षेपः स यत्नस्य कृतस्यानिष्टवस्तुनि ।
विपरीत फलोत्पत्तेरानर्थक्योपदर्शनात् ॥१४८॥

स तादृशः यत्नाक्षेपो ज्ञेयः। अतः अनिष्टे वस्तुनि प्रियप्रयाणे तत्सिद्धये कृतस्य यत्नस्य श्रमस्ये[ति यावत्] गच्छेति वक्तुमिच्छामीति विपरीतं विरुद्धं मा गा इति वचनरूपं फलं कार्यमुत्पन्नम्। तस्योत्पत्तेः कारणात् स यत्नोऽनर्थको जातः। तस्मादानर्थक्योपदर्शनात् प्रकाशनाद् यत्नाक्षेपः स इति निगमयितव्यम् ॥

क्षणं दर्शनविघ्नाय पक्ष्मस्पन्दाय कुप्यतः ।
प्रेम्णः प्रयाणं ते ब्रूहि मया तस्येष्टमिष्यते ॥१४९॥

ते तत्र प्रयाणक्षणं दर्शनस्य विघ्नाय पक्ष्मास्पन्दाय चक्षुर्निमेषाय कुप्यतः प्रेम्णः स्नेहस्य ब्रूहि कथय। वचनविपयस्य सम्बन्धित्वेन विवक्षितत्वात् षष्ठी। किमेवमित्याह– यत् तस्य प्रेम्णोपदिष्टमनुमतं किञ्चित् तन्मयेष्यते। नाहं स्वतन्त्रा किं तवाविदितम्? तस्मात् प्रेमैव भावय। तच्चेदनुमन्यते के वयमन्यथाकर्तुमिति॥

तदुद्भावयति—

अयं परवशाक्षेपो यत्प्रेमपरतन्त्रया।
तया निषिध्यते यात्रा तस्यार्थस्योपसूचनात्॥१५०॥

अयमीदृशः परवशाक्षेपः कुतः प्रेमपरतन्त्रया स्नेहनिघ्नया तया प्रियया कयाचित् यात्रा प्रियस्य निषिध्यते इति यदेतत् तस्येदृशस्यार्थस्य वस्तुन उपसूचनादुद्भावनादिति॥

सहिष्ये विरहं नाथ! देह्यदृश्याञ्जनं मम।
यदक्तनेत्रां कन्दर्पः प्रहर्ता मां न पश्यति॥१५१॥

नाथ! तव विरहं दुःसहमप्यहं सहिष्ये यापयामि। किं तु अ[दर्शनसाधन]मञ्जनं किञ्चिन्मे देहि। किं तेन? येनादृश्याञ्जनेनाक्ते स्पृष्टे नेत्रे यस्यास्तां मां न पश्यति कन्दर्पः कामः प्रहर्ता हन्ता। अपश्यतः कथं प्रहरेदिति॥

तत्प्रकाशयति—

दुष्करं जीवितोपायमुपन्यस्योपरुध्यते।
पत्युः प्रस्थानमित्याहुरुपायाक्षेपमीदृशम्॥१५२॥

दुष्करं दुर्लभं जीवितस्योपायं अदृश्याञ्जनरूपमुपन्यस्य पत्युः प्रस्थानमुपरुध्यते इति हेतोरीदृशमुपायाक्षेपमाहुस्तद्विद इति॥[1]

१. अत्र

मुग्धा कान्तस्य यात्रोक्तिश्रवणादेव मूर्छिता।
बुध्वा वक्ति प्रियं दृष्ट्वा किं चिरेणागतो भवान्॥
इति तत्कालसंभूतमूर्छयाक्षिप्यते गतिः।
कान्तस्य कातराक्ष्या यन्मूर्छाक्षेपः स ईदृशः॥

इति श्लोकद्वितयं मूले क्वचिदधिकं दृश्यते।



प्रवृत्तैव प्रयामीति वाणी वल्लभ! ते मुखात्।
अयतापि त्वयेदानीं मन्दप्रेम्णा ममास्ति किम्॥१५३॥

वल्लभ! ते तव मुखात् प्रवृत्ता एव तावत्प्रयामीति वाणी वचनम्। तदेवं मन्दप्रेम्णा मन्दं प्रेमा अस्येति निरपेक्षेण त्वया कथञ्चित् अयता अगच्छतापि सता [58a] इदानीं मम किमस्ति कार्यम्? न किञ्चित्। [मनसि शिथिलादरस्य तव] गमनमगमनं चेदानीं तुल्यमिति॥

तद्विवृणोति—

रोषाक्षेपोऽयमुद्रिक्तस्नेहनिर्यन्त्रणात्मया।
संरब्धया प्रियारब्धं प्रयाणं यन्निवार्यते॥१५४॥

यद् यस्मात् उद्रिक्तेनाधिमात्रेण स्नेहेन निर्यन्त्रण उद्दामः आत्मा चित्तं यस्याः तया अत एव संरब्धया आविष्कृतरोषया प्रियेणारब्धं कर्तुमभिप्रेतं प्रयाणं निवार्यते। तस्मादयमीदृशो रोषाक्षेपः, कोपावेशेन निषेधादिति॥

नाघ्रातं न कृतं कर्णे स्त्रीभिर्मधुनि नार्पितम्।
त्वद्द्विषां दीर्घिकास्वेव विशीर्णं जीर्णमुत्पलम्॥१५५॥

स्त्रीभिर्नाघ्रातं न च कर्णे कृतं श्रवणावतंसकृत्ये नियुक्तम्। मधुनि च नार्पितम्। एतावानेवोत्पलस्योपयोगः। केवलं तव द्विषामरातीनां हतानां दीर्घिकास्वेव शून्यासु विशीर्णं परिक्षतं जीर्णं परिणतं उत्पलमभवदिति॥

तदाविष्करोति—

असावनुक्रोशाक्षेपः सानुक्रोशमिवोत्पले।
व्यावृत्य कर्म तद्योग्यं शोच्यावस्थोपवर्णनात्॥१५६॥

असौ तादृशः अनुक्रोशाक्षेपो ज्ञेयः। कुतः? उत्पले उत्पलविषये सानुक्रोशमिव सकरुणमिव। उत्पलेऽचेतने साक्षादनुक्रोशाभावादिव [शब्द] प्रयोगः। व्यावर्तनक्रियाविशेषणं चैतत्। यदाह– तस्योत्पलस्य योग्यमुचितं कर्म घ्राणादि व्यावृत्य निराकृत्य नाघ्रातमित्यादिना शोच्यायाः क्रियापदस्यावस्थाया विशीर्णत्वादेरुपदर्शनादिति॥[1]

१. अत्र अमृतात्मनीत्यादि [२. १५९-६०] श्लोकद्वयमिति केचित्॥

अर्थो न सम्भृतः कश्चिन्न विद्या काचिदर्जिता ।
न तपः सञ्चितं किञ्चिद् गतं च सकलं वयः ॥१५७॥

कश्चिद् विवक्षितोऽर्थो धनं न सम्भृतः नोपार्जितः । विद्यापि काचित् आन्वीक्षिक्यादिर्नार्जिता । तपश्च धर्मः किञ्चित् अभिमतं न सञ्चितम् । गतम् अतीतं च सकलं वयः पुरुषायुषम् अपुरुषार्थोपयोगेन । किमेवमात्मैवमात्मना वञ्चितः ॥

तद्विभजते—

असावनुशयाक्षेपो यस्मादनुशयोत्तरम् ।
अर्थार्जनादेर्व्यावृत्तिर्दर्शितेह गतायुषा ॥१५८॥

यस्मात् अर्थस्यार्जनमादिर्यस्य विद्यार्जनादेः तस्य व्यावृत्तिः अभावः [दर्शिता] कथम् ? अनुशयः पश्चाताप उत्तरोऽधिको यस्मिन् दर्शन इति क्रियाविशेषणम् । गतायुषा गतवयसा पुंसा केनचित् । तस्मान् असौ ईदृशोऽनुशयाक्षेप इति ॥

अमृतात्मनि पद्मानां द्वेष्टरि स्निग्धतारके ।
मुखेन्दौ तव सत्यस्मिन्नपरेण किमिन्दुना ॥१५९॥

तव मुखे इन्दौ सति अस्मिन् प्रत्यक्षवर्तिनि इतरेण मुखेन इन्दुना किमधिकं कार्यम् ? न किञ्चित् । अमृतमिवात्मा स्वरूपमेकान्तप्रीतिकरत्वात् यस्य मुखेन्दोः स तथा । अमृतं सुधैव [58b] आत्मा यस्येन्दोरिति शब्दश्लेषः । पद्मानां द्वेष्टा मुखेन्दुः तत्सदृशत्वादिन्दुश्च तत्सं[को]चकारित्वात् । अयमपि शब्दश्लेषः । स्निग्धे रक्ते तारके नेत्रमध्यभागे ततो वा समुदायोपलक्षणाच्चक्षुषी यस्य मुखेन्दोः । स्निग्धाः तारका रोहिण्यादयो यस्येन्दोरिति शब्दश्लेष एव । एवम[क्षी]णगुणे मुखेन्दौ सति किमितरेणेन्दुनेति प्रत्याम्नायः ॥

तद् व्याचष्टे—

इति मुखेन्दुराक्षिप्तो गुणान् गौणेन्दुवर्तिनः ।
तत्समान् दर्शयित्वेह श्लिष्टाक्षेपस्तथाविधः ॥१६०॥



इति एवं तत्समान् मुखेन्दुसाधारणान् गुणान् अमृतात्मत्वादीन् गौणे मुखेन्दौ वर्तमानान् दर्शयित्वा प्रतिपाद्य मुखेन्दुराक्षिप्तः किमिन्दुनेति । तस्मात् श्लिष्टाक्षेपः तथाविधः तादृशोऽवगन्तव्यः श्लेषप्रयोगादिति ॥

किमयं शरदम्भोदः किं वा हंसकदम्बकम् ।
रुतं नूपुरसंवादि श्रूयते तन्न तोयदः ॥१६१॥

अयं दृश्यमानः किं शरदि शरदो वा अम्भोदः, किं वा आहोस्वित् हंसानां कदम्बकं वृन्दमिदम् ? भवतु, विदितम् । नूपुरनिनादसदृशमनुरुतं श्रूयते यतः, तत् तस्मात् नायं तोयदः किं तु हंसकदम्बकमेवेति ॥

तत् कथयति—

इत्ययं संशयाक्षेपः संशयो यन्निवर्त्यते ।
धर्मेण हंससुलभेनास्पृष्टघनजातिना ॥१६२॥

यत् यस्मात् संशयः, शरदम्भोदो हंसकदम्बकं वेति सन्देहो न निवर्त्यते हंसे हंसेन वा सुलभेन तत्रैव सम्भवात् । धर्मेण गुणेन नूपुरसंवादिना रुतेनास्पृष्टा तत्रासम्भवात्, घनजातिः मेघो येन तेन हेतुना कर्तृभूतेन वा । तस्मादित्ययमीदृशः संशयाक्षेप इति ॥

चित्रमाक्रान्तविश्वोऽपि विक्रमस्ते न तृप्यति ।
कदा वा दृश्यते तृप्तिरुदीर्णस्य हविर्भुजः ॥१६३॥

चित्रमद्भुतमेतत् । आक्रान्तमभिभूतं विश्वं जगद्येन स तथाभूतोऽपि तव विक्रमः शौर्यं न तृप्यति नाभिलाषपर्यन्तमधिगच्छति । अथवा किं चित्रम् ? उदीर्णस्याधिमात्रस्य हविर्भुजोऽग्नेः कदा तृप्तिर्दृश्यते ? न कदाचित् । तथा विक्रमस्तव जगदाक्रम्यापि न तृप्यतीति योज्यम् ।

तद् व्याचष्टे—

अयमर्थान्तराक्षेपः प्रक्रान्तो यन्निवर्त्यते ।
विस्मयोऽर्थान्तरस्येह दर्शनात् तत्सधर्मणः ॥१६४॥

यत् यस्मात्प्रक्रान्तः प्रस्तुतो विस्मयो निवर्त्यते अर्थान्तरस्याग्नेः। तेन विक्रमेण सधर्मणस्तुल्यस्य दर्शनादवगमात्। ततोऽर्थान्तराक्षेपोऽयम्, अर्थान्तरेण तादृशेन विस्मयस्य निषेधादिति ॥

न स्तूयसे नरेन्द्र ! त्वं ददासीति कदाचन।
स्वमेव मत्वा गृह्णन्ति यतस्त्वद्धनमर्थिनः ॥१६५॥

नरेन्द्र, ददासि त्वं धनमर्थिभ्य इति कथञ्चन केनापि प्रकारेण न स्तूयसे। किं कारणम् ? यतः कारणात् [59a] तव धनमर्थिनः स्वम् आत्मीयमेव मत्वा गृह्णन्ति। नास्येदं धनम् अस्माकमेवेदम्, वयमुपभोक्तारः केवलमस्मदर्थं रक्षति। यद्वा अस्य धनं तदस्माकमपि सर्वसाधारणविभवत्वादस्येति ॥

तद् ब्रवीति—

इत्येवमादिराक्षेपो हेत्वाक्षेप इति स्मृतः।
अनयैव दिशान्येऽपि विकल्पाः शक्यमूहितुम् ॥१६६॥

इत्येवमनन्तरोक्तः प्रकारः आदिर्यस्येति एवमादिराक्षेपः हेत्वाक्षेप इति स्मृतः तज्ज्ञैः। हेतूपन्यासेन निषेधात्। शेषानाक्षेपविकल्पानतिदिशन्ति ।मयन्ति। अनयैव अनन्तरदर्शितया दिशा आक्षेपविकल्पगत्या अन्येऽप्यनुक्ता विकल्पा आक्षेपप्रभेदा ऊहितुमनुगन्तुं शक्यम्।

ननु वाच्यलिङ्गत्वात् तव्यादेः विकल्पो इत्यपेक्ष्य शक्या इति युक्तम्। उच्यते, इह शक्यमिति सामान्यविवक्षया प्रयुज्यते। ततः किं शक्यमिति विशेषापेक्षायां विकल्पा इति सं[भ]न्त्स्यते। तत्र यद्यपि बहुत्वं पुंस्त्वं च गम्यते, तथापि पदसंस्कार-कालापेक्षितमन्तरङ्गमव्यक्तपुंस्त्वम्, एकवचनं च उत्तरकालभावि। तेन बहिरङ्गं बहुवचनं च न बाधितुं शक्नोति। अयं च न्यायोऽन्यत्रापि यथासम्भवमनुसर्तव्य इति ॥

ते चैवमभ्यूह्याः—

काचिदेषा सुरस्त्रीणां कथञ्चिदिह दृश्यते।
नाकलोकाश्रया नैषा निमेषाभिज्ञलोचना ॥

विपर्यासाक्षेपः ॥



इयमाद्या विधेः सृष्टिर्मर्त्यस्त्रीषु विलोक्यते।
रूपमीदृक् कुतस्तासामियं काचित्सुराङ्गना ॥

निश्चयाक्षेपः ॥

न प्रसीदसि तन्वङ्गि ! प्राणैरपि ममार्पितैः।
किमतः परमादेयं यदेवमपि निष्ठुरा ॥

प्रसादाक्षेपः ॥

एवमपरेऽप्याक्षेपविकल्पाः समुन्नेयाः ॥

॥ इत्याक्षेपचक्रम् ॥

अर्थान्तरन्यासमुपन्यस्यति—

ज्ञेयः सोऽर्थान्तरन्यासो वस्तु प्रस्तुत्य किञ्चन।
तत्साधनसमर्थस्य न्यासो योऽन्यस्य वस्तुनः ॥१६७॥

विवक्षितं किञ्चिद्वस्तु अर्थरूपं प्रस्तुत्याभिधाय तस्य प्रस्तुतस्य वस्तुनः साधने समर्थस्य योग्यस्यान्यस्य वस्तुनः कस्यचित् न्यासः प्रयोगो यः, स एवंलक्षणोऽर्थान्तरन्यासो नामालङ्कारो ज्ञेयः प्रतिपत्तव्यः। प्रतिवस्तूपमा[या] अस्य च को भेदः उभयत्राप्यर्थान्तरोपन्यासात् ? महान् भेदः। तत्र हि सदृशस्यार्थान्तरस्योपन्यासः केवल[59b]मपेक्षते, न साधनभूतस्य। अत्र तु साधनरूपस्यैवार्थान्तरस्य। सादृश्यं भवतु मा [वा] भूत्, न तदपेक्षते। अत एवोक्तं तत्साधनसमर्थस्येति ॥

एवंलक्षणोऽर्थान्तरन्यासः किंप्रभेद इत्याह—

विश्वव्यापी विशेषस्थः श्लेषाविद्धो विरोधवान्।
अयुक्तकारो युक्तात्मा युक्तायुक्तो विपर्ययः ॥१६८॥

विश्वं जगत्सर्वं व्याप्नोति सर्वत्र सम्भवादिति विश्वव्यापी। विशेषे क्वचित् विषये तिष्ठति न विश्वं व्याप्नोति विशेषस्थः। श्लेषः एकार्थता एकशब्दता वा तेनाविद्धोऽनुगतः श्लेषाविद्धः। विरोधः परस्परव्याघातो विद्यतेऽस्मिन्निति विरोधवान्। अयुक्तम् अनुचितं करोतीति अयुक्तकारी। अयुक्त इत्यर्थः। युक्तः समुचितः

आत्मा स्वरूपं यस्य स तथा। युक्त इति यावत्। युक्तश्चासौ कथञ्चिदयुक्तश्चेति युक्तायुक्तः। विपर्ययोऽयुक्तयुक्त इति॥

इत्येवमादयो भेदाः प्रयोगेष्वस्य लक्षिताः।
उदाहरणमालैषां रूपयुक्त्यै निदर्श्यते॥१६९॥

इत्येवम् अनन्तरोक्तो विचित्रो भेद आदिर्येषां यथासम्भवमविरोधादीनां ते भेदाः विकल्पाः प्रयोगेषु काव्येषु लक्षिताः दृष्टाः कविभिः अस्य अर्थान्तरन्यासस्य सम्बन्धिनः। एषां भेदानां रूपस्य स्वभावस्य युक्त्यै प्रत्यवगमार्थम्। उदाहरणानां प्रयोगाणां माला वर्गो निदर्श्यते इति॥

भगवन्तौ जगन्नेत्रे सूर्याचन्द्रमसावपि।
पश्य गच्छत एवास्तं नियतिः केन लङ्घ्यते॥१७०॥

भगवन्तौ गुणराशी। जगतो लोकस्य नेत्रे चक्षुषी, प्रकाशकरत्वात्। सूर्याचन्द्रमसावपि, किमुतान्यद् वस्तुजातम्? अस्तमुदयविपर्ययमभावं गच्छत एव। न पुनस्तत्रैव तिष्ठतः। पश्य। कथमेतत्? किमत्र चित्रम्! नियतिर्भावानामनपायिनी व्यवस्था काचित्, उदयः सर्व एव व्ययनिष्ठ इति। सा केन नाम वस्तुना लङ्घ्य विक्रमितुं शक्यते? न केनचित्। सर्वमेवेह वस्तूदितमवश्यं व्येति। ततः सूर्याचन्द्रमसोरपि तथाभावो नाद्भुत इति प्रस्तुतं वस्तु साधितम्। अयं च विश्वव्यापी, तथाभावस्य सर्वत्रगत्वादिति॥

पयोमुचः परीतापं हरन्त्येव शरीरिणाम्।
नन्वात्मलाभो महतां परदुःखोपशान्तये॥१७१॥

एते पयोमुचो मेघाः शरीरिणां स्थावरजङ्गमानां परीतापं ज्वरं हरन्ति शमयन्ति। किमेतत्? न हि तेषाममी किञ्चित्प्रत्युपकुर्वन्ति। किमेवमुच्यते? ननु प्रसिद्धावनुमतौ वा। महताम् उत्त[मा]नां न क्षुद्राणां तेषामात्मकल्याणेऽप्यकल्पत्वात् [60a] आत्मलाभ उदयः परेषां सर्वेषामेव सम्भूतानामसम्भूतानां च दुःखस्य तापस्य उपशान्तये निवर्तनार्थं जायते। स्थितिरेषा महताम्। इदमेव च तेषां माहात्म्यम्। अन्यथा स्वार्थपरे जगति कस्तेषां विशेषो यदि तेऽपि तथैव स्युः? ततः पयोमुचः



प्रत्युपकारनिरपेक्षाः जगत्तापं नुदन्तीति उपपादितम्। अयं च विशेषस्थो महतामेव तथात्वात् [न] विश्वव्यापीति॥

उत्पादयति लोकस्य प्रीतिं मलयमारुतः।
ननु दाक्षिण्यसम्पन्नः सर्वस्य भवति प्रियः॥१७२॥

मलयमारुतो दक्षिणः पवनः लोकस्य जगतः प्रीतिमुत्पादयति। किं पुनः कारणं येनायं सर्वेषां प्रिय इति साधयन्नाह– नन्वित्यादि। नन्वित्यनुमतौ। दाक्षिण्यं परच्छन्दानुवर्तित्वम्। सर्वप्रीतिजननानुगुणो गुणः पौरुषेयः, दक्षिणदेशभवत्वं चेति शब्दश्लेषः। तेन सम्पन्नः सुभगः सर्वस्य जनस्य प्रियो भवति। न कस्यचिदप्रियः। कथमनुकूलवर्ती कस्यचिदप्रियोऽप्रीतिकरः स्यात्। तस्मान्मलयजमारुतो दक्षिणः सर्वेषां प्रीतिमुत्पादयतीति समर्थितम्। अयं च श्लेषाविद्धो दाक्षिण्यसंपन्न इत्यस्य श्लिष्टत्वादुक्तेन विधिनेति॥

जगदानन्दयत्येष मलिनोऽपि निशाकरः।
अनुगृह्णाति हि परान् सदोषोऽपि द्विजेश्वरः॥१७३॥

एष निशाकरश्चन्द्रो मलिनोऽपि कलङ्कयोगात् अशुद्धोऽपि जगत् लोकमाह्लादयति प्रीणयति। विरुद्धमेतत्, कथं सकलङ्कः प्रीतिकरोऽदोषस्य तथाभावात्। तत्साधयति- भवत्येवम्। हिः यस्मादर्थे। यतः सदोषोऽपि कथञ्चित् कलङ्कवानपि न केवलमदोषः। द्विजेश्वरश्चन्द्रो विप्रश्चेति श्लेषः। स त्विह तु न विवक्षितः, विरोधस्यैवाभिधित्सितत्वात्। अनुगृह्णाति उपकरोति ह्लादयति परान् धर्मोपदेशादिना। तस्मान्मलिनोऽपि निशाकरो जगदाह्लादयतीत्युपपद्यते। अयं च विरोधवान्। उक्तेन विधिना विरोधदर्शनादिति॥

मधुपानकलात् कण्ठान्निर्गतोऽप्यलिनां ध्वनिः।
कटुर्भवति कर्णस्य कामिनां पापमीदृशम्॥१७४॥

मधुनः कुसुमासवस्य पानेन कलान्मधुरात् कण्ठान्निर्गतोऽलिनां मधुलिहां मधुरोऽपि ध्वनिः कामिनां विरहिणा[60b]मपि कर्णस्य कटुरुद्वेजनीयोऽत्यन्तोत्कण्ठाकरत्वाद् भवति। एतच्चायुक्तम्। कथमीदृशः प्रीतिकरो ध्वनिः उद्वेजयति तत्साध्यते–

किं न युक्तम्, यतः पापमीदृशं कामिनां रागिणाम् एवंरूपं कर्म यतोऽयमेवंविधो मधुरो ध्वनिः अन्यथा प्रतिभाति। किमत्र क्रियताम् ! तस्मात्सम्भवत्येतदिति साधितम् । अयमयुक्तकारी मधुरस्य ध्वनेः उद्वेगहेतुत्वायोगादिति ॥

अयं मम दहत्यङ्गमम्भोजदलसंस्तरः ।
हुताशनप्रतिनिधिर्दाहात्मा ननु युज्यते ॥१७५॥

अम्भोजानां कमलानां दलानि पत्राणि तेषां तन्मयो वा संस्तरः तल्पम्। अयम् अनुभूयमानः मम अङ्गं देहं दहति तापयति । युक्तं चैतत् । कथम् ? हुताशनस्य अग्नेः प्रतिनिधिः सदृशः पाटलत्वात् दाहात्मा दाहस्वभावो रक्तपद्मपत्रसंस्तरो युज्यते नन्विति साधितम् । अयं च युक्तात्मा कथितेन विधिना दाहकत्वयोगादिति ॥

क्षिणोतु कामं शीतांशुः किं वसन्तो दुनोति माम् ।
मलिनाचरितं कर्म सुरभेर्नन्वसाम्प्रतम् ॥१७६॥

कामं नामाभ्युपगमे शीतांशुश्चन्द्रः मां क्षिणोतु तापयतु युक्तमेतत् । वसन्तः किं कस्मात् मां दुनोति तापयति ? नैतद् युक्तम् । इदं त्वयुक्तमिति साधयन्नाह- मलिनेत्यादि । मलिनेन कलङ्किना शीतांशुना आचरितम् अनुष्ठितं कर्म क्रिया तापलक्षणम् असाम्प्रतम् अयुक्तम् । ननु कस्य ? सुरभेर्वसन्तस्य सुरभेश्चाभिलषितस्येति श्लेषः । कथं दुष्टानुष्ठितं कर्म निर्दोषो जुषति । तस्मात् क्षिणोतु शीतांशुः । वसन्तः किं दुनोतीति पूर्वं समर्थितम् । अयं युक्तायुक्तः, शीतांशुना तापस्य योगात् वसन्तेनायोगादुक्तेन विधिनेति ॥

कुमुदान्यपि तापाय किमङ्ग ! कमलाकरः ।
नहीन्दुगृह्येषूग्रेषु सूर्यगृह्यो मृदुर्भवेत् ॥१७७॥

तापाय पीड़ार्थं कल्पन्ते । अयुक्तमेतदिति अपिशब्देनायोगः सूच्यते । चन्द्रपक्षाणां तापकारित्वायोगात् । किमङ्ग किं पुनः कमलाकरः तापाय न भवेत् । भवत्येव । युक्तमेतत् । किं तदयुक्तमिदं तु युक्तमिति साधयति- नहीत्यादि । इन्दोः एकान्तशीतस्य गृह्येषु पक्षेषु कुमुदेषूग्रेषु तापकारिषु, सूर्यस्य एकान्ततप्तस्य गृह्यः आयत्तः



कमलाकरो मृदुः शीतो भवेत् । कथमेवं सम्भवति ? तस्मात् कुमुदानां तापकरत्वम् अयुक्तम् । कमलाकरस्य तु युक्तमिति साधितम् । अयं तु विपर्ययो युक्तायुक्त इति ॥

[61a] आदिग्रहणसंगृहीताः केचिद्भेदा उदाह्रियन्ते ॥

सुखाय सुधियां लक्ष्मीर्न कदाचिदशर्मणे ।
किमुत श्रीः सुखप्राप्त्यै जायते न विपश्चिताम् ॥
अविरुद्धोऽयम् ॥

सुखाय विपदः सन्तु सम्पदोऽपि सुखाय ते ।
दुर्नयप्रस्थितानां हि सम्पदोऽपि विपत्तयः ॥
अविरुद्धविरुद्धोऽयम् ॥

अपकारोऽप्युपात्तेषु हिताय किमु सत्कृतिः ।
कृपाध्यासितचित्तानामीदृशी महतां स्थितिः ॥

एवमन्येप्यादिशब्दसंगृहीताः प्रभेदा ऊहितव्या इति ॥

॥ अर्थान्तरन्यासचक्रम् ॥

व्यतिरेकमाविष्कुर्वन्नाह—

शब्दोपात्ते प्रतीते वा सादृश्ये वस्तुनोर्द्वयोः ।
तत्र यद् भेदकथनं व्यतिरेकः स कथ्यते ॥१७८॥

विवक्षितयोः कयोश्चिद् द्वयोर्वस्तुनोरर्थयोः सादृश्ये कथञ्चित् तुल्यत्वे शब्देन वाचकेन साक्षादुपात्ते प्रतिपादिते सति शब्दाद्वा उपात्ते गृहीते प्रतिपत्तिप्रतीते वा । अशब्दोपात्तेऽपि शब्दोपात्तार्थबलात् प्रकरणादेर्वा ज्ञाने न केवलं शब्दोपात्ते । द्वयी खलु प्रतीतिः सम्भवति । शाब्दी नैयायिकी च, अन्यथा प्रतीत्यसंभवात् । यदुक्तम्—

नहि प्रतीतिः सुलभा शब्दन्यायविलङ्घिनीइति ।
[१. ७५]

तत्र तयोर्वस्तुनोर्विषये भेदस्य कस्यचिद्विशेषणस्य तत्सम्बन्धिनः कथनमभिधानं यदीत्यनूद्य स व्यतिरेकः कथ्यत इति विधीयते ॥

तमुदाहरन्नाह—

धैर्यलावण्यमाहात्म्यप्रमुखैस्त्वमुदन्वतः ।
गुणैस्तुल्योऽसि भेदस्तु वपुषैवेदृशेन ते ॥१७९॥

धैर्यं निर्विकारत्वं लावण्यं सौन्दर्यं लवणरसत्वं च माहात्म्यं गुणलक्षणं वैपुल्यं च प्रमुखम् आदिर्येषामेवमादीनां तैर्गुणैः त्वं विवक्षितः कश्चित् । उदन्वतः समुद्रस्य तुल्योऽसि । सादृश्यमुक्तम् । भेदं दर्शयन्नाह– भेदस्त्वित्यादि । भेदस्तु विशेषको वपुषा ईदृशेन दृश्यमाने[न] करचरणादिमता रुचिरेण वपुषा शरीरेणैव नान्यथा । तस्येदृशं वपुर्नास्तीति ॥

तद् व्याचष्टे—

इत्येकव्यतिरेकोऽयं धर्मेणैकत्रवर्तिना ।
प्रतीतिविषयप्राप्तेर्भेदस्योभयवर्तिनः ॥१८०॥

इत्येवंप्रकारो यः सोऽयमेकव्यतिरेको विज्ञेयः । कुतः ? एकत्रवर्तिना पुंसि एकत्र वर्तमानेन धर्मेण स्वभावेनेदृशेन वपुरात्मना शब्दोपात्तेन हेतुना उभयवर्तिनः पुरुषोदन्वतोः, तस्य भेदस्य विसदृशत्वस्य प्रतीतेः । [61b] प्रतीतिर्वा विषयो गोचरः, तस्य तत्र वा प्राप्तेः कारणात् । प्रतीयमानत्वादिति यावत् ॥

अभिन्नवेलौ गम्भीरावम्बुराशिर्भवानपि ।
असावञ्जनसंकाशस्त्वं तु चामीकरच्छविः ॥१८१॥

अम्बुराशिः सागरः । भवानपि त्वं चाभिन्नवेलौ । अभिन्ना अनतिक्रान्ता वेला मर्यादा याभ्यामिति । गम्भीरावगाधस्वभावाविति सादृश्यम् । भेदमाह– असावम्बुराशिरञ्जनसंकाशः अञ्जनेन तुल्यः । कृष्ण इति यावत् । त्वं तु भवान् पुनः चामीकरस्य सुवर्णस्येव च्छविर्वर्णोऽस्येति चामीकरच्छविर्गौर इति यावत् ॥

तद्विवृणोति—

उभयव्यतिरेकोऽयमुभयोर्भेदकौ गुणौ ।
कार्ष्ण्यं पिशङ्गता चोभौ यत् पृथग् दर्शिताविह ॥१८२॥



यत् यस्मात्कार्ष्ण्यं श्यामत्वं पिश[ङ्ग]ता गौरत्वं चेत्येतौ गुणौ धर्मौ उभयोरम्बुराशिपुरुषयोरसाधारणत्वेन भेदकौ विसदृशत्वकरौ पृथग् दर्शितौ शब्देनोपात्तौ इह प्रयोगे, तस्मादयमुभयव्यतिरेकः प्रतिपत्तव्य इति ॥

त्वं समुद्रश्च दुर्वारौ महासत्त्वौ सतेजसौ ।
इयता युवयोर्भेदः स जलात्मा पटुर्भवान् ॥१८३॥

त्वं भवान् समुद्रश्च युवां दुर्वारौ । दुष्करं वाः पानीयं यस्य समुद्रस्य, पुरुषस्तु दुर्वारोऽव्याहतप्रसरः । शब्दश्लेषः । महासत्त्वौ महान्तः सत्त्वाः मकरादयः । महान्ति वा सत्वानि यत्र समुद्रे । महत्सत्वं वीर्यम् यस्य पुंसः । शब्दश्लेषः । सतेजसौ सह तेजसा वह्निना वाडवेन वर्तते समुद्रः । पुरुषस्तु सह तेजसा अनुभावेन वर्तते । अत्रापि शब्दः श्लिष्यते । साम्यमेतत् भिन्दन्नाह । इयता एतावन्मात्रेण युवयोः समुद्रस्य तव च भेदो वैलक्षण्यं लक्ष्यते । समुद्रो जलात्मा जलमुदकमात्मा यस्य जडश्चाचिद्रूप आत्मा यस्येति शब्दच्छलम् । भवान् पटुः कुशलः प्राज्ञ इति ॥

तद्विभजते—

स एष श्लेषरूपत्वात् सश्लेष इति गृह्यताम् ।
साक्षेपश्च सहेतुश्च दर्श्यते तदपि द्वयम् ॥१८४॥

स एष ईदृशो व्यतिरेकः सह श्लेषेण वर्तते सश्लेष इत्येवं गृह्यतां व्यवह्रियताम् । कुतः श्लेषो यथोक्तरूपः स्वभावो यस्य तस्य भावः तस्मात् । सहाक्षेपेण सह च हेतुना तिष्ठतीति साक्षेपश्च सहेतुश्चेति द्वावपरौ व्यतिरेकौ विद्येते । तदप्येतद् द्वयं न केवलमन्यत् । दर्श्यते उदाह्रियते ॥

स्थितिमानपि धीरोऽपि रत्नानामाकरोऽपि सन् ।
तव कक्ष्यां न यात्येव मलिनो मकरालयः ॥१८५॥

भवानिव स्थितिमान् मर्यादावानपि धीरोऽपि निर्विकारोऽपि रत्नानां मुक्ताप्रवालानाम् आकरो निलयोऽपि सन् तव कक्ष्यां समतां न यात्येव मकरालयः । समुद्रो मलिनः अशुद्धः । त्वं तु परिशुद्ध इति साक्षेपोऽयमीदृशो व्यतिरेकः प्रतिपत्तव्यः । न यातीति निषेधनादिति ॥

वहन्नपि महीं कृत्स्नां सशैलद्वीपसागराम् ।
भर्तृभावाद्भुजङ्गानां शेषस्त्वत्तो निकृष्यते ॥१८६॥

शैलैः समन्तकूटादिभिर्द्वीपैः सिंहलप्रमुखैः सागरैर्दक्षिणप्रभृतिभिः सह वर्तमानां कृत्स्नाम् अशेषां महीं त्वमिव वहन् बिभ्रदिति श्लेषः । [शेषः] फणिपतिरनन्तः त्वत्तो निकृष्यते हीयते, भवानेव ततोऽतिरिच्यते । कुतः ? भुजङ्गा नागा विटाश्चेति शब्दच्छलेन दोषोक्तिः । तेषां भर्तृभावात् स्वामित्वात् तस्य । त्वं तु साधूनां भर्ता इति सहेतुरयं व्यतिरेको भर्तृभावादिति हेतूपन्यासात् ॥

शब्दोपात्ते प्रतीते वा सादृश्य [२. १७८] इत्युक्तं तत्र कतरोऽयं व्यतिरेक इत्याह–

शब्दोपादानसादृश्यव्यतिरेकोऽयमीदृशः ।
प्रतीयमानसादृश्योऽप्यस्ति सोऽनुविधीयते ॥१८७॥

शब्देनोपादानं प्रत्यय उपादीयतेऽनेनेति शब्दोपादानं यस्य तत् सादृश्यं वस्तुद्वयस्य तुल्यत्वं यत्र व्यतिरेके स तथोक्तः । अयं प्रक्रान्तः । ईदृशः उक्तप्रकारः प्रतिपत्तव्यः । प्रतीयमानः शब्दोपादानमन्तरेण अर्थप्रकरणादेर्गम्यमानं सादृश्यं यत्र सोऽप्यस्ति व्यतिरेको न केवलं पूर्वः । स प्रतीयमानसादृश्योऽनुविधीयते ॥

इदानीमुदाह्रियते—

त्वन्मुखं कमलं चेति द्वयोरप्यनयोर्भिदा ।
कमलं जलसंरोहि त्वन्मुखं त्वदुपाश्रयम् ॥१८८॥

तव मुखं कमलं चेति [द्वे समाने हृद्ये] वस्तुनी, कान्त्याद्युपचारात् प्रतीयमानसादृश्ये, अनयोर्द्वयोः भिदा भेदः कथ्यते । कमलं जले संरोहति जायते [इति] जलसंरोहि । तव मुखं त्वदुपाश्रयं त्वमुपाश्रयोऽधिकरणं यस्येति आश्रयभेदकथनमनयोर्वैसादृश्यम् । कान्त्यादिना तु सदृश इति ॥

अभ्रूविलासमस्पृष्टमदरागं मृगेक्षणम् ।
इदं तु नयनद्वन्द्वं तव तद्गुणभूषितम् ॥१८९॥

मृगस्येवेक्षणं भ्रुवोर्विलासो नर्तनं विद्यतेऽस्मिन्निति भ्रूविलासमस्पृष्टोऽस्वीकृतो मदस्य मदकरो रागोऽनेनेति । अस्पृष्टमदरागमिदं प्रत्यक्षम् । तुशब्दो भेदं द्योतयति ।



तव नयनयोर्द्वन्द्वं युगलं ताभ्यां भ्रूविलासमद[62b]रागाभ्यां भूषितमलंकृतं मृगेक्षणनयनद्वन्द्वयोश्च लोहितादिसादृश्यं प्रतीयत इति ॥

पूर्वस्य व्यतिरेकस्यास्य च को विशेष इत्याह—

पूर्वस्मिन् भेदमात्रोक्तिरस्मिन्नाधिक्यदर्शनम् ।
सदृशव्यतिरेकश्च पुनरन्यः प्रदर्श्यते ॥१९०॥

पूर्वस्मिन् त्वन्मुखं कमलं चेत्यादौ भेदो विसदृशत्वमात्रमेव । अतिशयप्रकाशशून्यत्वात् । तस्योक्तिः कथनं कमलं जलसंरोहि त्वन्मुखं त्वदुपाश्रयमिति । अस्मिन् प्रयोगे पुनराधिक्यस्यातिशयस्य दर्शनं प्रतिपादनं प्रतिपत्तिर्वा न पूर्ववद् भेदमात्रोक्तिः । भ्रूविलासादिलक्षणो गुणो नयनद्वन्द्वस्यास्ति न मृगेक्षणस्येति आधिक्यदर्शनम् । तस्मादनयोः प्रयोगयोः प्रतीयमानसादृश्ययोर्व्यतिरेके समानेऽपि अयं विशेषः सादृश्ये वस्तुद्वयस्य साम्ये शब्दोपात्ते सति व्यतिरेकः सदृशपक्षपाती । चकारः किञ्चिदित्यर्थे । पुनरन्यः केवलं पूर्वोक्तः । शब्दोपात्तसादृश्योऽयं चापरो विशिष्टः प्रदर्श्यत इति ॥

त्वन्मुखं पुण्डरीकं च फुल्ले सुरभिगन्धिनो ।
भ्रमद्भ्रमरमम्भोजं लोलदृष्टि मुखं तु ते ॥१९१॥

तव मुखं पुण्डरीकं पद्मं च द्वे इमे वस्तुनी फुल्ले प्रबुद्धे सुरभिरिष्टो गन्धोऽनयोरिति सुरभिगन्धिनी । समासान्त इकारः । शब्दोपात्तमीदृशं सादृश्यं तत्पदप्रयोगात् । अत एव प्रतीतसादृश्ये व्यतिरेकाधिकारेऽस्मिन् कथमकस्मादयमुत्तीर्णः शब्दोपात्तसादृश्यो व्यतिरेकः पतित इति शङ्कापरिहारार्थं पुनः प्रस्तावं कर्तुं सादृश्यव्यतिरेकश्च पुनरन्यः प्रदर्श्यत इति उक्तं विवरिष्यति । इमं व्यतिरेकं पूर्वत्रेत्यादिना भिनत्ति । भ्रमन्तौ भ्रमरौ यस्मिन् अम्भोजे तत्तथा लोले चञ्चले दृष्टी चक्षुषी यत्र तादृशं मुखं ते तव । तुशब्दो भेदं द्योतयति इति ॥

चन्द्रोऽयमम्बरोत्तंसो हंसोऽयं तोयभूषणः ।
नभो नक्षत्रमालीदमिदमुत्कुमुदं पयः ॥१९२॥

अयं दृश्यमानश्चन्द्रोऽम्बरस्य नभस उत्तंसः शेखरः तत्सदृशत्वात् । अयमध्यक्षो हंसस्तोयस्य भूषणो भूषयतीति नन्दिग्रहीत्यादिना ल्युः । भूषणं वा अलङ्कार-

वस्तु करणे ल्युट्। नभ इदमन्तरीक्षं नक्षत्रमालि तारकाधारि। मल मल्लधारणे। नक्षत्राणां वा माला वृन्दं विद्यते अस्मिन्निति मत्वर्थीयः। इदमपरोक्षं पयः सरः उद्गतानि कुमुदानि अस्मिन्नित्युत्कुमुदमिति ॥

[63a] अयं च प्रतीतसादृश्यो व्यतिरेको न पुनर्वचनोपात्तसादृश्य इति दर्शयन्नाह—

प्रतीयमानसौक्ष्म्यादिसाम्ययोर्वियदम्भसोः ।
कृतः प्रतीतशुद्ध्योश्च भेदोऽस्मिन् चन्द्रहंसयोः ॥१९३॥

सौक्ष्म्यमच्छत्वमादिर्यस्य नीलत्वादेः। तेन तदेव वा साम्यं सादृश्यम् अशब्दोपात्तम् अम्बरादेर्वस्तुनः तदव्यभिचारादर्थात् प्रतीयमानं गम्यमानं ययोस्तयोर्वियच्चाम्भश्चेति। वियदम्भसोर्भेदो विशेषः कृतः। नक्षत्रमालि नभः पयः उत्कुमुदमिति साक्षात् प्रतिपादितः। प्रतीता न्यायलब्धा न वाचनिकी शुद्धिः शौक्ल्यं ययोस्तयोः। हंसश्च चन्द्रश्चेति तयोः हंसचन्द्रयोर्भेदः। कुतः ? चन्द्रोऽयमम्बरोत्तंसः हंसोऽयं तोयभूषणः इति शब्दोपात्तः, न न्यायात् इति ॥

नन्वयमपि सादृश्यव्यतिरेक एव, चन्द्रहंसयोर्नभःपयसोश्च शुद्ध्यादिना सदृशयोर्यथोक्तभेदकथनात्। तत्किं पूर्वक एव सादृश्यव्यतिरेक उच्यते इत्याशङ्क्याह—

पूर्वत्र शब्दवत्साम्यमुभयत्रापि भेदकम् ।
भृङ्गनेत्रादितुल्यं तत् सदृशव्यतिरेकता ॥१९४॥

पूर्वत्र त्वन्मुखं पुण्डरीकं चेत्यादौ, उभयत्रापि मुखे पुण्डरीके च सादृश्यं शब्दवत्। शब्दो वाचकोऽस्मिन् इति शब्दोपात्तमिति यावत्। चन्द्रोऽयमित्यादौ तु प्रतीतं न वचनलब्धम्, भृङ्गश्च नेत्रं च तदादिर्यस्य तल्लोलत्वस्य तत्तुल्यं सदृशं सत् भेदकं मुखपुण्डरीकयोरसाम्यनिमित्तमुक्तम्, तत्तस्मात् सदृशव्यतिरेकतापूर्वक एव तन्मुखमित्यादिः सादृश्यव्यतिरेक उच्यते, नानन्तरश्चन्द्रोऽयमित्यादि। तत्र शब्दवत्सादृश्याभावात्। शब्दवता च सादृश्येन सदृशव्यतिरेकव्यवहारस्य कर्तुमिष्टत्वात्।



अथवा द्वयोरपि सदृशव्यतिरेकता व्याख्यायते। पूर्वत्रेत्यादि चन्द्रोऽयमित्यादौ प्रतीतं सादृश्यं न शब्दवत् यथा विवृतं पूर्वत्र। त्वन्मुखमित्यादौ च शब्दवत्। इयता भेदः। भेदकं भृङ्गनेत्रादि। नक्षत्रकुमुदाम्बरतोयपरिगृहीतिरादिशब्देन। तदेतदुभयत्रापि त्वन्मुखमित्यादौ चन्द्र इत्यादौ च तुल्यं सदृशं वर्तते। तस्मात् सदृशव्यतिरेकता उभयत्रापीत्यपेक्ष्यते। उदाहरणद्वयमपीदं सदृशव्यतिरेकः। सदृशपदार्थकृतो व्यतिरेकः सदृशव्यतिरेक इति कृत्वा। एतदर्थं च सदृशव्यतिरेकश्च पुनरन्यः प्रदर्श्यते इति [ २. १९० ] पादान्तरं द्रष्टव्यम् ॥

अरत्नालोकसंहार्यमहार्यं सूर्यरश्मिभिः ।
दृष्टिरोधकरं यूनां यौवनप्रभवं तमः ॥१९५॥

यूनां तरुणानाम्। प्रभवत्यस्मादिति प्रभवः। यौवनं द्वितीयं वयः प्रभवः कारणं यस्य तत्तमोऽन्धकारं सदसद्विवेकविबन्धकत्वाद् अज्ञानम्। रत्नानां मणीनामालोकैः दीप्तिभिः संहार्यं भेद्यं न तथा अरत्नालोकसंहार्यम्। सूर्यस्य रश्मिभिरभीषुभिः अवार्यमनपनेयम्। दृष्टेः सदसद्दर्शनस्य रोधं विबन्धं करोति [इति] दृष्टिरोधकरं यूनां विषममिदं तम इति ॥

तद् व्याचष्टे—

स्वजातिव्यतिरेकोऽयं तमोजातेरिदं तमः ।
दृष्टिरोधितया तुल्यं भिन्नैर्धर्मैरदर्शि यत् ॥१९६॥

यद् यस्मात् तमोजातेः प्रसिद्धाया बहिर्ध्वान्तस्य तुल्यमिदमनन्तरोक्तं तमः। कथम् ? दृष्टिरोधितया हेयोपादेयदर्शनविबन्धकत्वेन हेतुना। अन्यैः दृष्टिरोधितायाः सकाशात् भिन्नैः अरत्नालोकसंहार्यत्वादिभिर्धर्मैः हेतुभूतैः भिन्नं विलक्षणं तमोजातेरित्युत्प्रेक्ष्यते। अदर्शि यद् दर्शितमुक्तम्। तस्मात् स्वजातिव्यतिरेकोऽयमीदृशः। तस्याः तमोजातेः प्रसिद्धायाः कथञ्चिद् व्यतिरिक्तत्वाद् एवंविधस्य तमस इति ॥

॥ इति व्यतिरेकचक्रम् ॥

विभावनामुद्भावयन्नाह—

प्रसिद्धहेतुव्यावृत्त्या यत्किञ्चित् कारणान्तरम् ।
यत्र स्वाभाविकत्वं वा विभाव्यं सा विभावना ॥१९७॥

यथोक्तौ प्रसिद्धस्य लोकप्रतीतस्य साक्षादर्शनात् किञ्चित्कार्यं प्रति हेतोः कारणस्य कस्यचिद् व्यावृत्त्या निरासेनावक्षेपात् । कथं तर्हि कार्यसम्भव इत्याह– यत्किञ्चिदनुरूपं तत्र कारणान्तरं प्रसिद्धात् कारणादन्यन्निमित्तं विभाव्यम् अवगम्यते । यत्र कारणान्तरमपि नापेक्ष्यते तत्र का गतिरित्याह– स्वाभाविकत्वं वेति । स्वाभाविकं नैसर्गिकं वस्तुधर्मसिद्धं तस्य भावः तत्त्वम् । स्वाभाविकं वा । न केवलं कारणान्तरं कार्यस्योत्प्रेक्ष्यते । विभाव्यं [चिन्तनीयं] सा तादृशी तल्लक्षणा विभावना ज्ञेया । विभाव्यते प्रकाश्यते कारणान्तरं स्वाभाविकत्वं वा अनया अस्यामिति वा विभावना तथाविधोक्तिरिति ॥

तमुदाहरन्नाह—

अपीतक्षीबकादम्बमसंमृष्टामलाम्बरम् ।
अप्रसादितसूक्ष्माम्बु जगदासीन्मनोहरम् ॥१९८॥

पीताः पीतवन्तः । बहुलवचनात् कर्तरि क्तः । आरम्भे वा । अथवा

वनाय पीतप्रतिबद्धवत्साम्
[रघुवंशे २. १]

इतिवत् । न तथा अपीता अकृतमधुपानाः सन्तः क्षीबाः मत्ताः कादम्बाः कलहंसाः असंमृष्टम् अपरिशोधितम् सत् अमलम् अनाविलम् अम्बरम् आकाशम्, कतकादिभिः अप्रसादितम् अनपनीतकालुष्यं सत् सूक्ष्मम् अच्छम् अम्बु च यत्र जगति तन्मनोहरं सुभगमासीत् अभूदिति ।

अनञ्जितासिता दृष्टिर्भ्रूरनावर्जिता नता ।
अरञ्जितोऽरुणश्चायमधरस्तव सुन्दरि ॥१९९॥



[64a] सुन्दरि ! तव दृष्टिः अनञ्जिता अञ्जनशलाकया यथास्थानमस्पृष्टा सती असिता कृष्णा । भ्रूश्च अनावर्जिता प्रयत्नेन केनचित् अनामिता सती नता वक्रा । अरञ्जितो[ऽपि] लाक्षारसरागादिना अरुणो लोहितः अधरश्चायं [दृश्यमानः । एतत् ] सर्वम् अलौकिकं तवेति ॥

नन्वेतन्मदादिकं मधुपानादिहेतुकम्, तत्कथं तेन विभावयितुमुत्सहते ? हेतुफलभावस्य सर्वत्र प्रतिनियमदर्शनात् । तदेतद् व्याहतमुच्यते । न च काव्येऽपि तादृशात्प्रकरणादन्यत्र विरुद्धमाद्रियते । यद् वक्ष्यति दोषपरिसंख्याने देशकालकलालोकन्यायागमविरोधे [ ३. ३१८ ] एतदाशङ्क्य ब्रवीति–

यदपीतादिजन्म स्यात् क्षीबत्वाद्यन्यहेतुजम् ।
अहेतुकं च तस्येह विवक्षेत्यविरुद्धता ॥२००॥

क्षीबत्वमादिर्यस्यामलत्वादेः श्लोकद्वयनिर्दिष्टस्य कार्यस्य तत्तथा यत् क्षीबत्वादिकार्यं पीतादेरपरः शरदागमयौवनोदयलक्षणो हेतुर्यस्येत्यन्यहेतुकं स्याद् भवेत्, अत एव नास्य पीतादेर्जन्मोत्पत्तिरित्यपीतादिजन्म, तदतद्धेतुत्वयोरेकत्र विरोधात् । आदिशब्देन संसृष्टादिकारणं वाक्यद्वयोपात्तं गृह्यते । अत एव [अन्य]हेतुकं च, प्रसिद्धहेतुव्यावृत्तेन अस्य हेतुरस्तीति । न चैवं शङ्कनीयम्, अन्यहेतुकं हि सहेतुकम् । तत्कथमहेतुकं स्यात् ? सहेतुकत्वाहेतुकत्वयोरेकत्र समावेशायोगादिति । नहि येन सहेतुकं तेनैवाहेतुकमुच्यते, यतो विरोधः स्यात् । प्रसिद्धकारणव्यावृत्तेरहेतुकम् । अन्यहेतुकत्वात्तु सहेतुकमिति पर्यायेणाविरोधः । यथा पादवानेवापादश्च, कस्यचित्पादस्याभावात् । तस्य तादृशस्य कार्यस्येह प्रयोगविवक्षा प्रतिपादनाभिलाषः । साक्षात्तथानुक्तस्यापि सामर्थ्यात् प्रसिद्धस्येतरस्यैवाहेतोरभावेऽनुपपत्तेरवगमः । स्वाभाविकत्वं तु इह न विवक्षितम् । वक्ष्यमाणैव सा विभावना । न च काव्ये सर्वत्र शाब्द्येव प्रतिपत्तिः । सामर्थ्यभाविन्या अपि तस्या दर्शनादिति विस्तरेण प्रथमे परिच्छेदे प्रतिपादितम् । या पुनः शब्दं न्यायं च तादृशं ना[पे]क्षते [सा] सुदुर्लभा । यदुक्तं नहि प्रतीतिः सुलभा शब्दन्यायविलङ्घिनीति [१. ७५] । यत एवमिति तस्मादविरुद्धता दृष्टिविरोधः प्रागभावितो नास्ति अपीतक्षीबेत्यादाविति ॥

वक्त्रं निसर्गसुरभि वपुरव्याजसुन्दरम् ।
अकारणरिपुश्चन्द्रो निर्निमित्तं सुहृत्पुमान् ॥२०१॥

सुन्दरि ! [64b] वक्त्रं तव निसर्गेण स्वभावादेव सुरभि सुगन्धि, न मुखवासादिना । वपुश्चाव्याजे[न] प्रयत्नेन तादृशेन विना सुन्दरम् अभिरूपम् । अकारणेन विनापकारेण केनचित् चन्द्रो रिपुः वर्तते, व्यथाहेतुत्वाद् विरहिणाम् । स विवक्षितः कश्चित् पुमान् निर्निमित्तं सुहृत् मित्रं वर्तते, तथाविधसम्भवोपकारकभावाद् इति ॥

कतमेयं विभावनेति विवृणोति—

निसर्गादिपदैरत्र हेतुः साक्षान्निवर्तितः ।
उक्तं च सुरभित्वादिफलं तत् सा विभावना ॥२०२॥

निसर्गादिभिः पदैः शब्दैः कर्तृभूतैः करणैर्वा । आदिशब्देनाव्याजादिपरिग्रहः । हेतुः कारणं सुरभित्वादिः मुखवासादिलक्षणः साक्षाद्वाचकव्यापारेण, न सामर्थ्यात् । निवर्तितो निषिद्धः फलं च तस्य सुरभिसुन्दरत्वादिग्रहणेनोपादीयते । उक्तं साक्षादेव । ततः किमित्याह– तत् सा विभावनेति । यत एवं ततस्तस्मात् स्वाभाविकफला विभावना ज्ञातव्या । या परैः

हेतोर्निषेधनात् तस्य यत् फलस्य विभावनम् ।
ज्ञेया विभावनेनैवासावेवं कथ्यते यथा ॥

[ ]

इत्युक्ता । न तु पूर्वं कारणं विना विभावनैव सा कथितेन विधिना । ननु सर्वथा हेतुनिषेधे कथं फलस्योदयः ? स्वभावादिति चेत्– कोऽयं स्वभावः, फलस्य तस्यान्यस्य वा ? न तावदस्य स्वयमेव निषेधात् । स्वाभाविकफलाभ्युदयात् । फलस्यापि स्वभावः सतोऽसतो वा ? सतस्तावत् स्वभावो न हेतुः । स्वभाववत् तदव्यतिरेकात् फलस्यापि सिद्धत्वात् । स्वभावात् फलं ज्ञायत इति रिक्ता वाचोयुक्तिः । न च भावस्वभावयोर्भेदः । तत्त्वग्रहणान्निःस्वभावत्वप्रसङ्गात् । तस्येति सम्बन्धायोगाच्च । विकल्पनिर्मितस्त्वपरीक्षाक्षमो न निषिध्यते । भेदः फलस्य स्वभाव इति ।[1] असतोऽपि सुतरां न हेतुः । तदव्यतिरेकेण तद्वत्स्वभावस्यास्याप्यसत्त्वात् । कथं स्वभावात् फलं भवति ? न ह्यसतो जनकत्वमतिप्रसङ्गात् । तत्कथं स्वाभाविकविभावनेयं



न विरुद्धयते । काव्ये च तथाविधप्रस्तावव्यतिरेकेण विरुद्धं नाद्रियत इति उक्तम् । उच्यते । इहाप्यदृष्टादिकं निमित्तं तथाविधमस्त्येव वस्तुनः । तथापि लोकस्तदुपेक्षमाणः प्रसिद्धं च कारणम् तादृशमपश्यन् स्वाभाविकं फलमिति व्यवहरति । लोकव्यवहारान्न विरोधि [65a] च काव्यमिति । तदनुसारेण स्वाभाविकं फलं विभाव्यते । शास्त्रीयोऽपि चायं स्वाभाविकफलवादः यदाहुः–

कः पद्मनालदलकेशरकर्णिकानां
संस्थानवर्णरचनामृदुतादिहेतुः ।
पत्राणि केऽत्र रचयन्ति पतत्त्रिणां वा
स्वाभाविकं जगदिदं नियतं तथैव ॥ इति ।

तस्माल्लोकशास्त्रानुरोधेनैतदुक्तं तत्परायणत्वात् काव्यस्येति । अलमतिगहनेन ॥

॥ इति विभावनाचक्रम् ॥

समासोक्तिं व्यक्तीकुर्वन्नाह—

वस्तु किञ्चिदभिप्रेत्य तत्तुल्यस्यान्यवस्तुनः ।
उक्तिः संक्षिप्तरूपत्वात् सा समासोक्तिरिष्यते ॥२०३॥

किञ्चिदिष्टं वस्त्वभिप्रेत्य मनसिकृत्य तेन अभिप्रेतेन वस्तुना तुल्यस्य सदृशस्य अन्यस्य वस्तुनः कस्यचिन्न विसदृशस्य । ततस्तत्प्रतीत्यसम्भवात् । सदृशेनैव तु तदुपलक्षणा उक्तिरन्यपरा या अन्यस्यैव तन्त्रा, अ[न्य]स्य प्रतीतेः । सा तल्लक्षणा समासोक्तिः इष्यते तज्ज्ञैः । कुतः ? संक्षिप्तं विवक्षितवस्त्वपेक्षया स्वल्पं रूपं स्वभावो यस्याः तद्भावः तत्त्वम् तस्मात् । ततोऽन्वर्थेयं संज्ञा संक्षेपोक्तिः समासोक्तिरिति कृत्वा । तस्मादियं गुणीभूता अर्थान्तरं [स्फुटयति] न तु स्वार्थतन्त्रा । इयमेव चान्यैः ध्वनिरिति व्यवह्रियते । यदाहुः—

यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ ।
व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः । इति ॥

[ध्वनिकारिकायाम् १. १३]

तामुदाहरन्नाह—

पिबन्मधु यथाकामं भ्रमरः फुल्लपङ्कजे ।

अप्यसन्नद्धसौरभ्यं पश्य चुम्बति कुड्मलम् ॥२०४॥

फुल्ले प्रवुद्धे पङ्कजे स्थितं मधु मकरन्दं यथाकामम् इच्छानुरूपं पिबन् भ्रमरः। असन्नद्धं सौरभ्यमस्मिन्निति असन्नद्धसौरभ्यम् अनुपजाततादृशगुणं कुड्मलं चुम्बति। पश्य यथा अस्यातिलोलता। इत्यामुखयति कश्चित्। शब्दार्थस्तावदयमीदृशः प्रतिभाति ॥

भावार्थमत्र दर्शयन्नाह—

इति प्रौढाङ्गनाबद्धरतिलीलस्य रागिणः ।

कस्याश्चिदपि बालायामिच्छावृत्तिर्विभाव्यते ॥२०५॥

इति इह वाक्ये प्रयुक्ते प्रौढायाम् आरूढमन्मथविभ्रमविमर्दभूमौ अङ्गनायां बद्धा निवेशिता रतिः सम्भोग एव लीला विभ्रमो येन यस्य वा तस्य रागिणः। कस्याश्चित् बालायाम् प्रथमवयोवर्तिन्याम् अप्रौढायां कस्याश्चिद्विषये इच्छाया रागस्य वृत्तिः प्रसरो विभाव्यते प्रतीयते। न तु साक्षादुच्यते। ततोऽयमेवार्थो विधेयत्वात् प्रधानम्। शब्दार्थस्तूपसर्जनीभूतस्तत्परत्वाभावाद्वाक्यस्येति ॥

समासोक्तेः प्रभेदं दर्शयन्नाह—

विशेष्यमात्रभिन्नापि तुल्याकारविशेषणा ।

अस्त्यसावपराप्यस्ति भिन्नाभिन्नविशेषणा ॥२०६॥

[65b] यत्किञ्चिद् वस्तु सामान्याकारप्रतीतमीदृशमिदं नान्यथेति कुतश्चिद् व्यवच्छिद्य केनचिद् गुणादिना व्यवस्थाप्यते तद्विशेष्यम् । तदेव तन्मात्रमुपाधिभेद-व्यवच्छेदात् भिन्नमतुल्यं यस्यां सा तथा विशेष्यमात्रेण वा भिन्ना अवयवधर्मस्य समुदाये न्यासात्। विजातीयविशेष्यापि सती तुल्याकारमभिन्नं विशेषणमुपाधिरस्या-मिति तुल्याकारविशेषणा या सापीयं समासोक्तिरस्ति। न केवलम् अन्या। यदाह-अपराप्यस्ति न केवलमेषा। कीदृशी ? भिन्नं किञ्चिदभिन्नं च विशेषणमुपाधिरस्यामिति भिन्नाभिन्नविशेषणा। विशेष्यं तु उभयत्राभिन्नमिति॥



तदुभयमुदाहरति —

रूढमूलः फलभरैः पुष्णन्ननिशमर्थिनः ।

सान्द्रच्छायो महावृक्षः सोऽयमासादितो मया ॥२०७॥

योऽयं महान् वृक्षः कालमियन्तं प्रार्थितः, स आसादितः प्राप्तः प्रसन्नेन विधिनोपानीतः। रूढं परिणतं मूलं जटालक्षणं यस्य महावृक्षस्य, रूढमविकलं निजप्रकृतिलक्षणं बलम् मूलम् [तस्य] राज्यमूलत्वात्। यस्य पुंसः। फलानां वृक्षोचितानां च कालानां च सम्पदां भरैः सन्दोहैरर्थिनः फलं काङ्क्षिणः पुष्णन्नुपकुर्वन् महावृक्षः पुरुषश्च यथाक्रमम् सान्द्रा निरन्तरा छाया आतपच्छेदलक्षणा यस्य सान्द्रा पर्याप्ता देहप्रभास्वभावा अङ्गरूपा कीर्तिलक्षणा वा यस्य पुंसः सोऽयमासादित इति। इयं विशेष्यमात्रभिन्ना तुल्याकारविशेषणा। विशेष्यवृक्षस्य विवक्षितात् पुरुषात् भिन्नत्वात् रूढमूलत्वादेश्च विशेषणस्योक्तेन प्रकारेणाभिन्नत्वादिति ॥

अनल्पविटपाभोगः फलपुष्पसमृद्धिमान् ।

सच्छायः स्थैर्यवान् दैवादेष लब्धो मया द्रुमः ॥२०८॥

एषोऽभिलषितोऽर्थः। दैवात् कुतश्चित् भागधेयात् लब्धः प्राप्तो मया। विटपानां विटपरूपो वा आभोगः प्रसारोऽनल्पो महान् यस्य द्रुमस्य। फलानि पुष्पाणि च समृद्धयः श्रियः वृक्षोचिताः [यस्य]। सहाच्छायया चन्द्रा कौलोर्कविलोकरूपया वर्तते सच्छायो द्रुमः। पुरुषस्तु पूर्वोक्तया कान्त्यादिरूपच्छायया युक्त इति सच्छायः। स्थैर्यवान् द्रुमो वातादिभिरनुत्पाट्यत्वात्। पुरुषस्तु विपक्षैर्दुर्धर्षत्वात्। एषा विशेष्यमात्रभिन्ना भिन्नविशेषणा, विवक्षितात् पुरुषाद्विशेष्यात् द्रुमस्य विशेषस्य भिन्नत्वात्। अनल्प-विटपाभोगत्वस्य फलपुष्पसमृद्धिमत्त्वस्य च द्रुम एव सम्भवात्। सच्छायतायाः स्थैर्यस्य चोभयत्रापि भावादुक्तेन विधिनेति ॥

तदुभयं विवृणोति—

उभयत्र पुमान् कश्चिद्वृक्षत्वेनोपवर्णितः ।

सर्वे साधारणा धर्माः पूर्वत्रान्यत्र तु द्वयम् ॥२०९॥

उभयत्र उभयो रूढ़मूल इत्यादौ अनल्पविटपाभोग इत्यादौ च प्रयोगयोः पुमान् पुरुषः कश्चित् अभिमतः वृक्षत्वेन वृक्षगुणसाम्यात् द्रुमरूपेणोपवर्णितः संकीर्तितः तत्परत्वात् अनपेक्षितस्वार्थवृत्तेर्वृक्षादिशब्दस्य पुरुषविशेषप्रत्यायकत्वम्। भेदस्त्वियान्। पूर्वत्र रूढमूलमित्यादौ सर्वे ये केचित् तत्रोपात्ताः रूढ़मूलमित्यादयः साधारणास्तुल्या धर्मा विशेषणानि उभयत्रापि सम्भवात्। अन्यत्र तु अनन्तरोक्ते अनल्पविटपाभोग इत्यादौ पुनर्द्वयं साधारणमसाधारणं सच्छायत्वस्य स्थैर्यवत्तायाश्च उभयत्रापि सम्भवात्। अनल्पविटपाभोगत्वस्य पुष्पफलसमृद्धिमत्तायाश्च वृक्ष एव सम्भवादिति ॥

निवृत्तव्यालसंसर्गो निसर्गमधुराशयः।
अयमम्भोनिधिः कष्टं कालेन परिशोष्यते ॥२१०॥

अयम् अपरोक्षवृत्तिः अम्भोनिधिः सागरः कालेन संवर्तसमयेन परिशोष्यते विलयं नीयते। कष्टं बत इति खेदे। पुरुषः कालेन मृत्युना परिशोष्यते परासुः क्रियते। अम्भोनिधिः व्यालैः सर्पैः संसृष्टः। पुरुषस्तु, निवृत्तो व्यालैः दुष्टैः संसर्गोऽस्येति निवृत्तव्यालसंसर्गः। अम्भोनिधिः स्वभावलवणजललक्षणाशययुक्तः। पुरुषस्तु निसर्गेण स्वभावेन मधुरः सुरसः प्रीतिकरः आशयः चित्तं यस्येति निसर्गमधुराशयः। गाम्भीर्यादयस्तु गुणाः साधारणाः प्रतीयन्त एव। अन्यथा कथमम्भोनिधित्वेन पुरुषो वर्ण्यते ततश्चापूर्वोऽयमम्भोनिधिरिति ॥

तद् व्याचष्टे—

इत्यपूर्वसमासोक्तिः पूर्वधर्मनिवर्तनात्।
समुद्रेण समानस्य पुंसो व्यावृत्तिसूचने ॥२११॥

इति ईदृक् अपूर्वसमासोक्तिः इष्यते। व्यावृत्तिसूचनेऽपरिशेषेण प्रतीतौ विषये। तेन समुद्रेण समानस्य पुंसः उभयोरपि शोषणलक्षणस्य विनाशस्य वृत्तेरुपात्तापेक्षया एतदुक्तम्। गाम्भीर्यादावपि समानस्येति गम्यत एव। समुद्रे अपूर्वस्य प्रसिद्धस्य धर्मस्य व्यालसंसर्गादेः निवर्तनात् निषेधात् निवृत्तव्याल इत्यादिना। अपूर्वसमासोक्तिरिति प्रकृतम् ॥

॥ इति समासोक्तिचक्रम् ॥



अतिशयोक्तिमादर्शयन्नाह—

विवक्षया विशेषस्य लोकसीमातिवर्तिनः।
असावतिशयोक्तिः स्यादलङ्कारोत्तमा यथा ॥२१२॥

विशेषस्य वस्तुगतस्य प्रकर्षस्य अतिमात्रस्य [66b] कस्यचिद्विवक्षया प्रतिपादनाभिप्रायेण हेतुना लोकस्य जगतः सीमा स्थितिः। तामतिवर्तितुं लंघयितुं शीलं यस्याः सा लोकसीमातिवर्तिनी। या इत्यनूद्य असो सा तल्लक्षणा अतिशयोक्तिः स्यादिति विधीयते। विवक्षा या इति पाठे अतिशयस्य लोकसीमातिवर्तिनी या विवक्षा असौ अतिशयोक्तिरिति योजनीयम्। अतिशयस्य यथास्थिताद् वस्तुनः अविकलस्य उत्कर्षस्य प्रतिपादिका इति अतिशयोक्तिः। सा च इयमलङ्काराणामन्येषाम् उत्तमा प्रधाना, धत्यन्तमनोहरत्वात्। यथाहि वस्तुनो मनोज्ञस्य प्रकृत्या ततोऽपि अतिरिक्ता काप्यवस्था प्रतिसंस्क्रियते, सा नितरामनुरागमातनोतीति अलङ्काराधिराजत्वेनैषा अभिषिच्यते कविभिरिति ॥

एवं लक्षणतः प्रदर्श्य अतिशयोक्तिं लक्ष्यतः परिस्फुटयन्नाह—.

मल्लिकामालभारिण्यः सर्वाङ्गीणार्द्रचन्द्रनाः।
क्षौमवत्यो न लक्ष्यन्ते ज्योत्स्नायामभिसारिकाः ॥२१३॥

मल्लिकानां मालाः स्रजो बिभ्रतीति मल्लिकामालभारिण्यः। इष्टकेत्यादिना ह्रस्वः। अनेनोत्तमाङ्गशौक्ल्यमाहार्यं दर्शयति। सर्वम् अङ्गं व्याप्नोति सर्वाङ्गीणमार्द्रम् अश्यानं चन्दनं यासां तास्तथा। क्षौमवत्यः सितसूक्ष्माम्बरधारिण्यः। एतेन शेषाङ्गश्वैत्यमाहृतम्। अभिसारिका मदनशरतादद्ह्यमानमनसः स्वयमेव कान्तान्तिकम् उपयान्त्यः स्त्रियः। ताश्च दुर्दिनाभिसारिकाः शरदभिसारिका इत्यादयो ह्य[न्य]त्रोक्ताः। इह शरदभिसारिकाः विवक्षिताः। यथाह— ज्योत्स्नायां न लक्ष्यन्त इति। नेपथ्यं च तदनुरूपं दर्शितम्। ज्योत्स्नायां चन्द्रिकायां न लक्ष्यन्ते, न निर्धार्यन्ते, एता अभिसारिकाश्चन्द्रिकेयमिति। एवमतिसान्द्रा चन्द्रिका यतस्तत्र वस्त्वन्तरं तादृशं न विभाव्यत इति। वस्तुतः तथात्वाभावेऽपि विशेषस्तादृशः कल्प्यते। यथा यथावस्थितवस्त्वतिवृत्तिसन्दर्शितेदृशातिशयालोकवेलाविलङ्घिनी इयमतिमनोहरा जायते तद्विदामिति ॥

कस्मात्र विशेषो विवक्षित इति विवृण्वन्नाह—

चन्द्रातपस्य बाहुल्यमुक्तमुत्कर्षवत्तथा ।
संशयातिशयादीनां व्यक्तौ किञ्चिन्निदर्श्यते ॥२१४॥

चन्द्रस्य आतपो ज्योत्स्ना तस्य बाहुल्यं घनत्वम् तच्च उत्कर्षस्यास्तीति उत्कर्षमतिमात्रम् उक्तम् उद्भावितम् यतः तत्राभिसारिकाः कल्पितमल्लिकादिसिताकल्पाः । क्षीरसागरे तरन्त्यो [67a] हंससंहत्य इव न विभाव्यन्ते । यथेयमतिशयोक्तिः तथा एवं संशये संशयस्य वा अतिशयो विशेषः । संशयातिशयोक्तिः एकदेशेन समुदायोपलक्षणादिः यस्याम् । निश्चयातिशयोक्त्यादीनां तासाम् व्यक्तौ विशेषावगमनिमित्तं व्यक्त्यै वा व्यक्त्यर्थं किञ्चित् कियन्मात्रं लक्ष्यं निदर्श्यते उदाह्रियत इति ॥

स्तनयोर्जघनस्यापि मध्ये मध्यं प्रिये तव ।
अस्ति नास्तीति सन्देहो न मेऽद्यापि निवर्तते ॥२१५॥

प्रिये ! तव स्तनयोः पयोधरद्वयस्य जघनस्यापि नितम्बस्य मध्ये स्थाने मध्यं मूर्त्तं देहावयवभूतमस्ति किं वा नास्तीत्युभयपक्षपाती सन्देहः संशयः । तत्परं चिरमारभ्य पश्यतो मे मम अद्यापि न निवर्तते । मध्यं तव नितम्बिनि इत्यपि पठ्यते । सुगमम् । तनीयसोऽपि तत्र मध्यस्य सूपलक्ष्यत्वात् संशयो जातु जायते तथाप्येवमतिभूमिमतिरोपितः कविना, यतः तद्विदः प्रमदमया जायन्ते । तदीदृशी संशयोक्तिरिति रमणीयेति ॥

निर्णेतुं शक्यमस्तीति मध्यं तव नितम्बिनि ।
अन्यथा नोपपद्येत पयोधरभरस्थितिः ॥२१६॥

नितम्बिनि ! तव मध्यं स्तनजघनयोरन्तरमस्तीति निर्णेतुं निश्चेतुं शक्यम् पार्यते । कथम् ? पयोधरयोः पयोधरलक्षणस्य भरस्य स्थितेरवस्थानस्य तदाधारमध्यव्यतिरेकेण अन्यथा प्रकारान्तरेण अनुपपत्तेरयोगात् । पयोधरभरः तावत् अवतिष्ठमानोऽतिस्थूलत्वात् साक्षादपेक्षते [मध्यरूपमाश्रयम् । तत्र] मध्ये सन्देहः । तदप्ययमेव निश्चाययति । विना तेनानुप[पद्य]मानावस्थान[त्वात्] काममतिक्षामम्



मध्यं तत्रापि [उन्नेयम्] एव । अत्र निश्चयो जगतः । नैवमन्यथानुपपत्तिमृते लभ्यतेः । तथापीयमतिगतिरीदृशी युक्ततया नीता कविनेति निश्चयातिशयोक्तिरीदृशी प्रीतिसर्वस्वं रसिकानामिति ॥

अहो विशालं भूपाल ! भुवनत्रितयोदरम् ।
माति मातुमशक्योऽपि यशोराशिर्यदत्र ते ॥२१७॥

भुवनानां स्वर्गादीनां त्रितयं त्रयोऽवयवा अस्येति तस्योदरं मध्यं विशालम् अतिविस्तीर्णम् अहो विस्मयनीयम् ! कथम् ? यत् यस्मात् भूपाल ! तव यशसां राशिः कीर्तिसन्दोहो मातुं परिच्छेतुम् इयत्तया अशक्योऽपि अत्र भुवनत्रितयोदरे माति पर्याप्तः तिष्ठति नातिरिच्यते । तस्मात् अतिप्रकाण्डमिदमिदानीं प्रतीयते सयुक्तिकमेवम् अस्माभिः । लोकस्तु प्रसिद्ध[67b]मात्रमनुधावति । बहुगुणसंकीर्तनं यशः । तच्च क्वचित् किञ्चिन् । यदपि सर्वत्र तदपि न तथा जगत्त्रये माति, यथा [य]त्किञ्चिन्मूर्त्त[व]स्तु क्वचिदवकाशे । तथाप्येवं विशालं यशो विवक्षितं यन् तन्मानाद् भुवनोदरं साध्यते इति यशोऽतिशयोक्तिरेवंविधा विदग्धेति ॥

अतिशयोक्तिप्रशं[सा]मुखेन निगमयन्नाह—

अलङ्कारान्तराणामप्याहुरेकं परायणम् ।
वागीशमहितामुक्तिमिमामतिशयाह्वयाम् ॥२१८॥

इमामनन्तरोक्तामुक्तिमतिशय इत्याह्वयः संज्ञा यस्या इत्यतिशयाह्वयामतिशयोक्तिमिति यावत् । वागीशानां कवीनामुत्कर्षयोगात् । महितां पूजितामत्यन्तवल्लभाम् । अलङ्काराणां शेषाणामलङ्काराणामपि न केवलं काव्यस्य धर्मिणः । अतिशये वापिशब्दः । परायणमाश्रयमेकं प्रधानमाहुः कथयन्ति कवयः । तथाहि स्वभावोक्तिरपि विशेषोक्त्यनुगामिनी शोभते या यथावस्थितवस्तुस्वरूपपरिदीपनी । अन्यथा कथञ्चिदपि अतिशयाशंसनेन तन्मात्रकथने निर्जीव[ः] कीदृशः काव्यालङ्कारः ? विशेषलक्षणत्वात्तस्य । किं पुनर्वक्रोक्तयस्तत्तद्विशेषरूपाः उपमारूपकादयः ? तस्मादलङ्काराणामपीयमलंक्रियाऽतिशयोक्तिरिति सूक्तमेतत् अलङ्कारा[न्तरा]णामप्येकं परायणमिति । आदिशब्द[१. २१४]संगृहीताः अतिशयोक्तिविकल्पाः केचिदुदाह्रियन्ते—

परिरम्भेषु रम्भोरु ! पयोधरपराकृतम् ।
नास्ति मध्यं तवेत्येतत् विपर्यस्यति मे मनः ॥

विपर्यासातिशयोक्तिः ।

नीला नेत्रद्युतिः शुद्धा सुदत्या दन्तदीधितिः ।
तस्याः संभिन्नयोर्दत्तो गङ्गायमुनयोः श्रियम् ॥

उपमानुगतातिशयोक्तिः ।

मुखेन्दुहसितज्योत्स्नासङ्गतास्तव सुन्दरि ।
निशाः प्रकाशमायान्ति निमग्नशशिमण्डलाः ॥

रूपकानुगतातिशयोक्तिः ।

नीलया तव लोलाक्षि ! लोलया लोचनत्विषा ।
आपूरिता दिशो भान्ति निशापरिगता इव ॥

उत्प्रेक्षानुगतातिशयोक्तिः ।

एवमन्येऽप्यतिशयोक्तिविकल्पा अनुगन्तव्या इति ॥

॥ इत्यतिशयोक्तिचक्रम् ॥

उत्प्रेक्षामालक्षयन्नाह—

**अन्यथैव स्थिता वृत्तिश्चेतनस्येतरस्य वा ।**
**अन्यथोत्प्रेक्ष्यते यत्र तामुत्प्रेक्षां विदुर्यथा ॥२१९॥**

चेतनस्य सजीवस्य अचेतनस्य निर्जीवस्य वस्तुनः वृत्तिः अवस्था अन्यथैव विवक्षितप्रकारापेक्षया अन्येनैव रूपेण यथा भवति [तथा] स्थिता वर्तमाना सती यथावस्थानादन्येन प्रकारेण अन्यथा उत्प्रेक्ष्यते परिकल्प्यते [68a] यत्र उक्तौ तामेवंलक्षणामुत्प्रेक्षां विदुः विदन्ति कथयन्ति कवयः । उत्प्रेक्ष्यते अन्यथाक्रियते वस्तुस्थितिः अस्याम् अनया इति वा उत्प्रेक्षा । यथेत्युदाहरति ॥

**मध्यन्दिनार्कसन्तप्तः सरसीं गाहते गजः ।**
**मन्ये मार्तण्डगृह्याणि पद्मान्युद्धर्तुमुत्सुकः ॥२२०॥**



मध्यन्दिने मध्याह्ने अर्कः मार्तण्डः अतिप्रचण्डः । तेन सन्तप्तः दग्धो गजः तत्प्रतीकारकाङ्क्षी सरसीं जलाशयं गाहते प्रविशति इति यथावस्थितेयं चेतनस्य गजलक्षणस्य वस्तुनो वृत्तिरुक्ता । सेयमन्यथा स्थितस्य अन्यथा उत्प्रेक्षा । मार्त्तण्डस्य येन सन्तप्तः [तस्य] गृह्याणि पक्षाणि तत्पादोपजीवित्वात् पद्मानि उद्धर्तुम् उन्मूलयितुम् उत्सुकः समीहते गजः । यतः साक्षादपकर्तुम् अशक्तौ तदाश्रितापकारद्वारेणापि स एव प्रत्यपकृतः स्यात् । कृतसंतापसंपर्कः सुतरा[म]र्के इति ॥

तद् व्याचष्टे —

**स्नातुं पातुं बिसान्यत्तुं करिणो जलगाहनम् ।**
**तद्वैरनिष्क्रयायेति कविनोत्प्रेक्ष्य वर्ण्यते ॥२२१॥**

स्नातुममन्दबहिस्तापशान्तये । पातुम् उदकम् । बिसान्यत्तुं मृणालानि कषयितुम् अन्तस्तप्तेः क्षुत्तर्षलक्षणायाः परिक्षयार्थम् । करिणो मध्यन्दिनार्कसन्तप्तस्य जले जलस्य वा गाहनं सरःप्रवेशो वर्तते । यथास्थितेयं वस्तुनश्चेतनस्य वृत्तिः कीर्त्तिता । तत् तादृशं जलगाहनं वैरस्य सूर्यसन्तापकारिण्यपकाराशयस्य निष्क्रयाय तत्पक्षपद्मोद्धरणद्वारेण प्रतिकरणार्थम् इति एवम् अन्यथोत्प्रेक्ष्य अध्यारोप्य वर्ण्यते कथ्यते कविना यथा रसावहं भवतीति ॥

**कर्णस्य भूषणमिदं ममायतिनिरोधिनः ।**
**इति कर्णोत्पलं प्रायस्तव दृष्ट्या विलङ्घ्यते ॥२२२॥**

आयताक्षि ! तव दृष्ट्या लोललोचनेन कर्णोपान्तपातिन्या विजृम्भमाणकान्तिद्वारेण कर्णोत्पलं श्रवणावतंसकुवलयं विलङ्घ्यते तिरस्क्रियते, तत्कान्त्या लङ्घनसम्भावनया तथेत्युक्तम् । यद् वक्ष्यति । दृष्टेरंशुभिः स्पृश्येत न वेति [२.२२३] । किमित्येवं क्रियते ? ममायतिः विजृम्भणं तत्प्रसरं निरुन्धानस्य विघ्नयतः कर्णस्यापकारिणो भूषणं शोभाकरमिदमुत्पलं तन्मया लङ्घनीयम् इति कृत्वा । प्रायःशब्द इत्युत्प्रेक्षां सूचयति । अत्राचेतनस्य नयनांशुलक्षणस्य वस्तुनोऽन्यथास्थिता वृत्तिरन्यथोत्प्रेक्ष्य वर्ण्यत इति ॥

नन्वत्र न तव दृष्ट्या कर्णोत्पलं स्पृश्यते नापि तत्कान्त्या, तथाप्यदर्शनात् । तत्कथमुत्प्रेक्ष्यते ? पूर्वत्र तु तथा जलगाहनदर्शनात् [68b]तादृगुत्प्रेक्षा सम्भवति ।

इह तु न किञ्चिद् बीजं तथोत्प्रेक्षायाः, सर्वथा दृष्टिकर्णोत्पलयोः संसर्गाभावादित्याह—

अपाङ्गभागपातिन्या दृष्टेरंशुभिरुत्पलम् ।
स्पृश्येत वा न वैवं तु कविनोत्प्रेक्ष्य कथ्यते ॥२२३॥

अपाङ्गभागः लोचनोपान्तदेशः तत्र पतन्त्या अवलोकयन्त्या दृष्टेरंशुभिः किरणैः उत्पलं श्रुतिवतंसं स्पृश्येत संसृज्येत । कस्याश्चिदुत्पलं स्पृश्यते । नापि तत्कान्त्या तथाप्यदर्शनात् । तत्कथमेवमुत्प्रेक्ष्यते ? पूर्वत्र तु तथा जलगाहनदर्शनात् तादृगुत्प्रेक्षा-सम्भावना । अङ्गनायाः सम्भाव्यमेतत् । अथ कथञ्चित् नेति निर्बन्धः, तदा न वा स्पृश्येत । नात्रास्माकमभिनिवेशः । कथं तर्हि तथोत्प्रेक्ष्यत इत्याह— एवं त्वित्यादि । तुशब्दोऽर्थान्तरविवक्षायाम् । एवमतिशयोक्त्या नयनांशुभिः स्पर्शं कर्णोत्पलस्सिद्धं कृत्वा अर्थान्तरं यथोक्तमुत्प्रेक्ष्यमनिमित्तं परिकल्प्य कविना कथ्यते प्रयुज्यते । ततश्चातिशयोक्तिप्रभावितेयमुत्प्रेक्षा कल्प्यते । अत एवोक्तम्—

अलङ्कारान्तराणामप्याहुरेकं परायणम् ।
वागीशमहितामुक्तिमिमामतिशयाह्वयाम् ॥ इति ॥
[२.२१८]

लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः ।
इतीदमपि भूयिष्ठमुत्प्रेक्षालक्षणान्वितम् ॥२२४॥

तमः कर्तृ अङ्गानि वपूंषि लिम्पतीव, यथा कश्चिच्चन्दनादिना लिम्पति । नभः कर्तृ अञ्जनं वर्षतीव यथा देवो जलं वर्षति । इत्येवंरूपमिदमपि लक्ष्यं न केवलं पूर्वोक्तम् । उत्प्रेक्षाया लक्षणेन अन्यस्थिताया वस्तुवृत्तेरन्यथापरिकल्पनरूपेण अन्वितम् उपेतम् भूयिष्ठमत्यर्थम् । उत्प्रेक्षैव इयं न उपमा इति यावत् ॥[1]

1 अत्र

पिनष्टीव तरङ्गाग्रैरुदधिः फेनचन्दनम् ।
तदादाय करैरिन्दुर्लिम्पतीव दिगङ्गनाः ॥

इत्यार्षरामायणश्लोकं [युद्धका० ४. ११५] केचिदधिकं पठन्ति ।



अन्ये तूपमात्मतां मन्यन्ते इत्युद्भाव्य निराकुर्वन्नाह—

केषाञ्चिदुपमाभ्रान्तिरिवश्रुत्येह जन्यते ।
नोपमानं तिङन्तेनेतित्यक्रम्याप्तभाषितम् ॥२२५॥

केषाञ्चिद् वादिनामिहोत्प्रेक्षायामुपमा इयमिति उपमाभ्रान्ति[ः] विपर्यासो जन्यते । इवश्रुत्या इवशब्देन । इवशब्दोऽयमुपमासूचक इह उच्यते । तस्मादियमुपमेति भ्राम्यन्ति केचित् । इयं च कल्पना तावदागमविरुद्धेत्याह,— नेत्यादि । तिङन्तेन आख्यातेन क्रियाप्रधानेन सह कस्यचित् उपमानं सादृश्यप्रतीतिर्नास्तीति यदाप्तानां यथा[र्थ]दर्शिनां[2] भाषितं वचनम् आगमः तल्लक्षणत्वादागमस्य । आप्तो[प]देशः प्रमाणमागम इति । तदतिक्रम्याप्रमाणीकृत्य इवशब्ददर्शनात् तैराप्तवचनमति-क्रान्तमुपमेति च भ्रान्तमिति । इवशब्दस्य आप्तवचनातिक्रमं भ्रान्तिजननं [69a]च प्रति कर्तृत्वं विवक्षितमिति ॥

नन्वाप्तवचनं न्यायसंवादि प्रमाणम् । न पुनराप्तभाषितमिति विभीषिकामात्रेण । न चात्र काचिद् युक्तिः । केवलं श्रद्धामात्रमिति । युक्तिसंवादितामाप्तवादस्य दर्शयन्नाह

उपमानोपमेयत्वं तुल्यधर्मव्यपेक्षया ।
लिम्पतेस्तमसश्चासौ धर्मः को नु समीक्ष्यते ॥२२६॥

इदं तावदविवादास्पदमुपमानत्वं कस्यचिदुपमेयत्वं चा[न्यस्य] वस्तुनः तयोर्द्वयोस्तुल्यः साधारणो यो धर्मः क्रियालक्षणो गुणरूपो वा तस्य व्यपेक्षया समाश्रयेण हेतुना भवेत्, नान्यथा । यथेन्दुवदनयोः कान्त्यादितुल्यधर्मपरिग्रहेण । सा चेयं नीतिरिह नास्तीत्याह— लिम्पतेरिति लिम्पतिरिह त्रिधैव सम्भवति, शब्दात्मकः क्रियास्वभावः कर्तृरूपश्चेति । शब्दस्तावन्नोपमानं तमसः, तयोस्तुल्यधर्मादर्शनात् । न हि लिम्पतिशब्दस्य तमसश्च क्रियारूपो गुणलक्षणो वा कश्चित् तुल्यो धर्मः प्रतिभाति, येनोपमानोपमेयभावः स्यात् चन्द्रमुखयोरिव । ततः क्रियारूपो लिम्पतिरुपमानं भवतु । तस्यापि तमसा तुल्यो न कश्चिद् धर्मोऽस्ति येनोपमा स्यादिति पश्यन् पृच्छति— लिम्पतेरुपमानस्य तमसश्चोपमेयस्य असौ तुल्यो धर्मः गुणः कः

2 महाभाष्ये ३.१.७

कीदृशः समीक्ष्यते दृश्यते ? न कश्चिन्निरूप्यमाणस्तादृशो धर्मो लभ्यत इत्यर्थः । नु इति वितर्के, अनुसमीक्ष्यत इतिचैकं पदम् ॥

अत्र पराभिप्रायमाशङ्कते—

यदि लेपनमेवेष्टं लिम्पतिर्नाम कोऽपरः ।
स एव धर्मो धर्मी चेत्यनुन्मत्तो न भाषते । २२७॥

लेपनमेव क्रियारूपमिष्टमिष्यते तुल्यो धर्मस्तयोरस्माभिरिति यदि मन्यसे तदा लेपनव्यतिरेकेण लिम्पतिर्नाम कोऽपरोऽवशिष्यते धर्मी, यस्यासौ धर्मः स्यात् ? न तावत् शब्दस्य लेपनस्यातदाश्रितत्वेनातद्धर्मत्वात् तदर्थस्तु स्यात् । न चार्थ एव धर्मः वाच्यवाचकभावविलक्षणत्वाद् धर्मधर्मिभावस्य सर्ववादिनाम् । तदिदमापन्नं लेपनमेव धर्मो धर्मी चेति । तच्च विप्रतिषिद्धम् अस्वस्थभाषितमिहापनयन्नाह– स इत्यादि । स एव धर्म आश्रितो लेपनं नाम येनोपमीयते, स एव धर्मी च आश्रयो लेपनमेव यदुपमानीस्यात् । इत्येवं व्याहृतमनुन्मत्तः स्वस्थचित्तो [69b] न भाषते न वक्ति । किंतु उन्मत्त एव विप्रतिषिद्धमभिधत्ते । तथाहि धर्मधर्मिणोराश्रिताश्रयलक्षणयोरभेदे तद्विरोधाद् भेदो लोकशास्त्रप्रसिद्धः कथमतिवर्तितुमनुसंधत्ते ? न शक्यते । अन्योऽप्युन्मत्तो लोकशास्त्रविरुद्धाभिधायी भवन्भवेत् । नहि तस्य शृङ्गमस्ति । कथं नोन्मत्तः । एवं तावल्लिम्पतितमसोरुपमानोपमेयभावो न घटत इति ॥

यदि लिम्पतिः क्रियारूपो नोपमानं शब्दात्मकस्तु दूरोत्सारित एव कारकार्थः, तर्हि कर्तृलक्षणो लिम्पतिरुपमानं भवेत । नायं पक्षो विरुद्ध्यत इति परमतमुद्भाव्य निरस्यन्नाह—

कर्ता यद्युपमानं स्यान्न्यग्भूतोऽसौ क्रियापदे ।
स्वक्रियासाधनव्यग्रो नालमन्यदपेक्षितुम् ॥२२८॥

कर्ता लेपनक्रियां प्रति स्वतन्त्रः कारकविशेषः उपमानं तमसः स्यात् इति यदि मनुषे, नैषोऽपि पक्षोऽपरिहृतः । यत्रासौ कर्ता य उपमानीक्रियते 'स्वस्याः स्वस्य वा क्रियया लेपनस्य साधने निर्वर्तने व्यग्रो व्यापृतः तत्रोपक्षीणसामर्थ्यः । अत एव क्रियापदे लिम्पतीत्यस्मिन् भावप्रधाने तिङन्त इत्यतः क्रियाङ्गत्वेनाप्रधानं क्रियाया एव साध्यत्वेन प्राधान्यम् । कारकार्थस्तु तदुपकरणं तत्सिद्धौ हेयत्वादप्रधानम् । सर्वत्रैव हि



फलाभिसन्धिना प्रवृत्तेन पुरुषेणैतदन्यथानुपपत्त्या तदंशभावेनादेयः परिगृह्यते । फलनिष्पत्तौ तु न किञ्चित् । तेन फलमेव'तु उपादीयते । तदुक्तम्—

उपायाद्वापि येऽहेयास्तानुपायान् प्रचक्षते ।
उपेयं तन्मतं यस्य सिद्धये तत्परिग्रहः ॥

इति । अत एव भावाख्यातं कारकतिङन्तं वा सर्वं क्रियाप्रधानं गीयते । तव्याद्यन्तं तु कारकावाचकं भावार्थं च सर्वमेव स्वभावतः सिद्धावस्थाप्रतीतेर्द्रव्यस्य प्रधानभावपरम् । अत एव सर्वत्र गम्यमानत्वाद् एतदपि गीयते– यत्र क्रियापदं न श्रयते तत्रास्तिर्भवतिपरः प्रयुज्यते इति । एतच्च विस्तरेण शब्दार्थचिन्ताविवृतौ चिन्तितमिति ततोऽवधार्यम् । सर्वमेतत् समभिसन्धाय न्यग्भूतोऽसौ क्रियापद इत्युक्तम् । कथमतोऽन्यथैतत् कल्प्येत ? यत एवं तस्मादन्यदुपमेयाभिमतं तमो व्यपेक्षितुमुपमानभावेनाश्रयितुं नालं शक्नोति । कथमेका स्थाली पाकमेकं साधयन्ती तदैव पाकान्तरं साधयितुमीहते । उपमानं च प्रसिद्धसाधर्म्येण साध्यसाधनमुच्यते । यथा कान्तत्वेन प्रसिद्धेन चन्द्रेण मुखं कान्तं साध्यते, चन्द्र इव मुखं कान्तमिति । तद्वदिह लेपनक्रियासाधनपरायणः कर्ता न तमस्तथा साधयितुमुत्सहते, असम्भवात् । स्वक्रियापरित्यागेन तु उपमानं भवद् भवेत् । तदा लिम्पतीव तम इति संगच्छते । नहि लेपनक्रियामकुर्वन् लिम्पति नाम । तन्निमित्तत्वादस्य व्यपदेशस्य । अतिप्रसङ्गाच्च । ततश्च यदि लिम्पति कथं तमस उपमानम्, अथोपमानं कथं लिम्पति इति व्याहतमेतत् ॥

स्यादेतत् । यथा स्वक्रिया न विरुद्ध्यते, उपमानं च तमसः स्यात् तथोच्यते– यो लेपनं करोति तेन तुल्यं तम इति सर्वं सुस्थम् । तदेतदुद्भाव्य निराकुर्वन्नाह—

यो लिम्पत्यमुना तुल्यं तम इत्यपि शंसतः ।
अङ्गानीति न सम्बद्धं सोऽपि मृग्यः समो गुणः ॥२२९॥

यः कश्चिद् देवदत्तादिर्लिम्पति लिपिक्रियामाचरति अमुना तेन लिपिक्रियाविशिष्टेन कर्त्रा तुल्यं तम इत्येवमपि यः शंसति घटनां मन्यते, तस्यैवं शंसतो योजयतो वादिनो मतेन यदेतल्लिम्पतीवाङ्गानीत्यत्राङ्गानीति व्याप्यपदं तत्सम्बद्धं न स्यात् असङ्गतं भवेत् । तथा हि यदा लेपनमात्रं व्याप्यनिरपेक्षमात्मसमवेतं भवनादिवत् करोतीति शस्यते, तदाङ्गानीति व्याप्यं केन सम्बध्यताम् ? लेपनेन कर्तृमात्रानु-

वन्धिना। अलब्धसम्बन्धमर्थान्तरवदसङ्गतमङ्गं स्यादिति यावत्। ननु योऽङ्गानि लिम्पति तेन तुल्यं तमोविवक्षायां कथमसम्बन्धः? नन्वेवमपि लेपनविपयमङ्गमर्थान्तरम् अपेक्षमाणः कर्ता कथमर्थान्तरं तमोऽपेक्षितुमीष्टे? लेपनं तु आत्मगतं भवनादिवदङ्गवदनर्थान्तरमविनिर्भागवर्ति निर्वर्तयन्नपेक्षतापि तमः अभ्युपगतमेतत्। इदमपि वा भवेत् कथञ्चित्। तथापि नोपमानोपमेयभावः, साधर्म्यादर्शनादिति। मूलमुद्धरन्नाह– सोऽपीत्यादि। पूर्वं साधर्म्यमभ्युपगम्य सर्वमुक्तं येन गुणेनोपमा सोऽपि समः साधारणो द्वयोः वृत्तेः, कान्त्यादिवत्। गुणो धर्मो मृग्यः अन्विष्यताम्। इह तावन्न दृश्यते। तथाहि लेपनं तावत् कर्तुरेव धर्मः न तमसः, केवलं तत्रोत्प्रेक्ष्यते नापि [70b] धर्मान्तरं साधारणम् इहास्ति, विवक्षितं वा। यद् वक्ष्यति न तथा लिम्पतौ लेपादन्यदत्र प्रतीय[ते] इति॥

कथमिव नास्तीति वैधर्म्यदृष्टान्तेन स्पष्टयन्नाह—

यथेन्दुरिव ते वक्त्रमिति कान्तिः प्रतीयते।
न तथा लिम्पतौ लेपादन्यदत्र प्रतीयते ॥२३०॥

इन्दुरिव ते वक्त्रमिति प्रयोगे कान्तिरुभयोः समो गुणः प्रतीयते दृश्यते यथा तथा तद्वत्। लिम्पतौ लेपनकर्तरि लेपाद्धर्मादन्यत्र। धर्मान्तरं तमस्तुल्यं न प्रतीयते, यत उपमा स्यात्। लेपस्तु लिम्पतावेव वर्तते न तमसीति किमाश्रयेयमुपमा स्यात्॥

तदेवं प्रमाणसंवाद्याप्तभाषितमतिक्रम्य कैश्चिदिवश्रुतिजनितभ्रान्तिरुपमीकृतेयमुत्प्रेक्षेति निगमयन्नाह—

तदुपश्लेषणार्थोऽयं लिम्पतिर्ध्वान्तकर्तृकः।
अङ्गकर्मा च पुंसैवमुत्प्रेक्ष्यत इतीष्यताम् ॥२३१॥

यत एवं तत् तस्मादुपश्लेषणं लेपनक्रियारूपमर्थोऽभिधेयम्। ध्वान्तं च तमः कर्तृ अङ्गं च कर्म व्याप्यं यस्य स तादृशो लिम्पतिर्धातुरेवमुक्तेन प्रकारेण वस्तुनो लिम्पदपि तमोऽतिघनत्वात् लिम्पतीवेति उत्प्रेक्ष्यते परिकल्प्यते पुंसा कविना तदर्थस्योत्प्रेक्षितत्वात्। अभेदाव्यवसायेन शब्द उत्प्रेक्ष्यते इत्युक्तम्। ततश्चोत्प्रेक्षैवेयमित्येवमिष्यताम्, नोपमेति। तस्मादितीदमपि भूयिष्ठम् उत्प्रेक्षालक्षणान्वितमिति सिद्धम्। अयमेव न्यायो वर्षतीवाञ्जनं नभ इत्यत्राप्यनुगन्तव्यः॥



व्यवहारार्थमुत्प्रेक्षासूचकान् शब्दान् दर्शयन्नाह—

मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादिभिः।
उत्प्रेक्षा व्यजते शब्दैरिवशब्दोऽपि तादृशः ॥२३२॥

इत्येवंरूपः शब्दराशिरादिर्येषां तर्कयामि कल्पयामि उत्पश्यामि यथेत्येवमादीनां तैः शब्दैरुत्प्रेक्षा उक्तलक्षणा शब्दान्तरोक्ताप्यव्यक्ता सती व्यज्यते द्योत्यते। इवशब्दोप्युक्तेन विधिना तादृश उत्प्रेक्षाव्यञ्जकः। न केवलमेत इति॥

॥ इत्युत्प्रेक्षाचक्रम् ॥

सूक्ष्मलेशसाधारणप्राधान्यकथने न हेतुं निदर्शयन्नाह—

हेतुश्च सूक्ष्मलेशौ च वाचामुत्तमभूषणम्।
कारकज्ञापकौ हेतू तौ च नैकविधौ यथा ॥२३३॥

हेतुश्च सूक्ष्मो लेशश्चेति त्रयमेतद् वाचां काव्यानामुत्तमं प्रधानं भूषणम् अलङ्कारः। उत्तमभूषणमेवैतत्त्रयम्। नत्विदमेव अतिशयोक्त्यादेरपि तथाभावात्। एवं च ब्रुवता [यद्भामहोक्तिविरोधो] भवति, तन्निरस्तम्। [तथा च]—

हेतुश्च सूक्ष्मलेशौ च नालङ्कारतया मताः।
समुदायाभिधेयस्य वक्रोक्त्या नाभिधानतः॥ इति।
[काव्यालङ्कारे २.८६]

इह जनको बीजादिर्गमकश्च धूमादिरिति हेतुद्वयं दृश्यते। तत्र कतमोऽयं हेतुः? द्विविधोऽप्यत्र गृहीत इत्याह– कारकेत्यादि। कारको भावाभावरूपस्य कार्यस्य जनकः, ज्ञापकश्च सत एव कस्यचित् सम्बन्धात् [71a]कुतश्चित्प्रतिपादक इति कारकज्ञापकौ हि भुवि ज्ञेयौ। तौ च कारकज्ञापकौ। नैको विचित्रो विधः प्रकारो ययोरिति नैकविधौ भवतः। जन्यकार्यवैचित्र्यात्। यथेत्युदाहरति॥

अयमान्दोलितप्रौढचन्दनद्रुमपल्लवः।
उत्पादयति सर्वत्र प्रीतिं मलयमारुतः ॥२३४॥

अयमनुभूयमानो मलयमारुतो दक्षिणोऽनिलः सर्वत्र लोकस्य प्रीतिं प्रमोदमुत्पादयति करोति। किंविशिष्टः? आन्दोलितानि आकम्पितानि अप्रौढानि अभिनवानि चन्दनद्रुमाणां पल्लवानि येन स तादृशः सुरभिः शिशिरो मृदुश्च उत्पादयति इति प्रकृतम्॥

ननु किमत्र भूषणम्? केवलमनेनैतत् क्रियते इति स्वरूपकथनमात्रम्। विशेषस्तु न कश्चित। विशेषरूपश्चालङ्कार इति विशेषं योजयन्नाह—

प्रीत्युत्पादनयोग्यस्य रूपस्यात्रोपबृंहणम्।
अलङ्कारतयोद्दिष्टं निवृत्तावपि तत् समम्॥२३५॥

प्रीतेरुत्पादने करणे योग्यास्यानुरूपस्य स्वभावस्यान्दोलितेत्यादिनोद्भावितस्य सुरभित्वादेरुपबृंहणं प्रतिसंस्करणं यदेतत्, तदत्र प्रयोगेऽ[लं]कारतया काव्यभूषण-रूपेण उद्दिष्टं विवक्षितं विशेषरूपत्वात्। न पुनरनेनैतत् क्रियते इत्यर्थमात्रं तस्य अलङ्कार्यत्वात। अयं भावकार्यः कारकहेतुरपाकृतः, प्रीतिसत्ताकरणात्। यदेतद्भावकारि दर्शितं रूपं तदिदं निवृत्तावभावेऽपि कार्ये न केवलं भावे। समं तुल्यम, अभावस्यापि कस्यचित् तेन करणादिति॥

तदुदाहरति—

चन्दनारण्यमाधूय स्पृष्ट्वा मलयनिर्झरान्।
पथिकानामभावाय पवनोऽयमुपस्थितः॥२३६॥

चन्दनानामरण्यं वनमाधूय आन्दोलयित्वा सौरभ्यं मान्द्यं चानेन सूचितम्। शैत्यमुद्भावयति- मलये महीधरे निर्झरान् सानुदेशपातिनी वारिधाराः स्पृष्ट्वा आमृश्य अयं दक्षिणः पवनो मनोहरः पथिकानां विरहिणामभावाय निधनार्थमुपस्थितो विजम्भत इति॥

कथमेवंप्रीतिकरो मारुतो मृत्यवे भवतीत्याह—

अभावसाधनायालमेवंभूतो हि मारुतः।
विरहज्वरसम्भूतमनोज्ञारोचके जने॥२३७॥



एवंभूत आधूतचन्द[ना]रण्यः स्पृष्टमलयनिर्झरो रम्यो मारुतः अभावस्य दशम्याः दशायाः साधनाय करणार्थम् अलं समर्थः। हिशब्दो वाचोयुक्तौ प्रसिद्धौ वा। कस्मिन् विषये? मनोज्ञानि रम्याणि रागजनकानि वस्तूनि मलयमारुतादीनि तेषु अरोचकं विद्वेषः। विरहः प्रियजनवियोगो ज्वरः सन्तापरूपत्वात् ततः संभूतं जातं मनोज्ञारोचकं यस्य जनस्य तस्मिन् विषये तस्या[71b]भावं साधयति। स हि तादृशः पवनो विरहज्वरमतितरां वर्द्धयन् निधनं विधत्ते विरहिणाम्। अयमभावकार्यः कारकहेतुः पथिकाभावकरणादिति॥

इह तावद्भावाभावरूपेण द्विधा कार्यम्। तत्राभावरूपं कार्यं निर्वर्त्यविकार्यप्राप्य-भेदेन त्रिधा भिद्यते। अभावरूपं तु प्रागभावादिरूपेण चतुर्धा। तत्र भावत्रिविधे कार्ये हेतुव्यापारं निरूपयन्नाह—

निर्वर्त्ये च विकार्ये च हेतुत्वं तदपेक्षया।
प्राप्ये तु कर्मणि प्रायः क्रियापेक्षैव हेतुता॥२३८॥

निर्वर्त्यं यदसदेव प्रागभावरूपेण व्यवस्थितं क्रियते घटादिवत्। यस्य सत एव अवस्थान्तरं क्रियते तद्विकार्यम्। लूयमानकाण्डादिवत्। तस्मिन् निर्वर्त्ये विकार्ये च कर्मणि विषये हेतुत्वं कारकत्वं तयोर्निर्वर्त्यविकार्ययोरपेक्षया समाश्रयणेन हेतुत्वं जनकत्वं द्रष्टव्यम, द्वयोस्तथोत्पाद्यत्वात्। वस्तुस्वरूप एव कारकव्यापारो न क्रियामात्रे। प्राप्यते क्रियया संबध्यते केवलं न निर्वर्त्यते नापि विक्रियते वेदवदध्ययनेनेति प्राप्यम्। तत्र कर्मणि व्याप्ये हेतुता कारकत्वं क्रियां व्यापारं तद्विषयामपेक्षते आश्रयतीति। क्रियापेक्षैव न कर्मस्वरूपापेक्षा। अत्रापि क्रियासंबन्धनं रूपान्तरं क्रियत इति विकार्यत्वम् अस्तीति चेदाह- प्राय इति। यद्यपि वस्तुगतिरीदृशी तथापि प्रायो बाहुल्येनैव प्रतीयत इत्यर्थः॥

कीदृशो निर्वर्त्यहेतुरिति पूर्वोक्तमनुस्मारयन् आह—

हेतुर्निर्वर्तनीयस्य दर्शितः शेषयोर्द्वयोः।
दत्त्वोदाहरणद्वन्द्वं ज्ञापको वर्णयिष्यते॥२३९॥

हेतुर्निर्वर्तनीयस्य कर्मणो भावरूपस्याभावरूपस्य च हेतुः कारको दर्शित उदाहृतः। संप्रति शेषयोरनुक्तयोर्द्वयोः। विकार्यप्राप्ययोः सम्बन्धि उदाहरणयोर्द्वन्द्वं युगलं दत्त्वा प्रदर्श्य पश्चात् ज्ञापको हेतुर्वर्णयिष्यते उदाहरिष्यत इति॥

उत्प्रवालान्यरण्यानि वाप्यः सम्फुल्लपङ्कजाः ।
चन्द्रः पूर्णश्च कामेन पान्थदृष्टेर्विषं कृतम् ॥२४०॥

उद्गतानि प्रवालानि पल्लवानि येषां तान्यरण्यानि वनानि । संफुल्लं विकसितं पङ्कजं यासां ताश्च वाप्यो दीर्घिकाः । चन्द्रः पूर्णः पर्याप्तः । सर्वमेतन्मनोज्ञं वस्तु पान्थानां विरहिणां विरहज्वरसम्भूतमनो[विकारयुक्त]ानां दृष्टेश्चक्षुषो विषम् अविषह्यत्वात् कृतं विषरूपेण परिणामितम् कामेन मन्मथेन, तद्वशात् । तेषां तद्दृष्टि-मूर्छाकरत्वात् । जितमन्मथानां तु किं तैरिति कामेनेत्युक्तम् । अयं विकार्यहेतुः कामः, तेन तादृशाम् अरण्यादीनां सतामेव पान्थदृष्टिविषरूपेण विकृतत्वादि[72a]ति ॥

मानयोग्यां करोमीति प्रियस्थाने कृतां सखीम् ।
बाला भ्रूभङ्गजिह्माक्षी पश्यति स्फुरिताधरम् ॥२४१॥

मानः प्रातिकूल्यं प्रियविषयं भ्रूभेदाव्याहारादिरूपं तत्र योग्ये दृष्टे तस्मिन् मानं निर्वाहयामि न वेत्येवंरूपमीमांसाभ्यासो वा तां करोमीति कर्तुं प्रागेव माननिर्वाहं परीक्षमाणा सती बाला काचिदङ्गना भ्रुवोर्भङ्गेन विकारलीलया जिह्ममारोपकोपकुटिलम् अक्षि यस्याः सा तादृशी पश्यति । स्फुरिताधरम् स्फुरितः कृतरोषलोलोऽधरो यस्मिन् दर्शन इति क्रियाविशेषणम् । किं पश्यति ? प्रियस्य जीवितनाथस्य स्थाने भूमिकायां कृतां व्यवस्थापिताम् अयमसौ मे प्रिय इति तद्रूपेण परिकल्पितां सखीम् काश्चित् पश्यतीति प्रकृतिं प्राप्य हेतुरयं निर्वर्तनविकारव्यतिरेकेण सखीविषयस्य दर्शनमात्रस्य बालया साधनादिति । एवं कारकहेतुस्त्रिधोदाहृतः ॥

ज्ञापकमुदाहरन्नाह—

गतोऽस्तमर्को भातीन्दुर्यान्ति वासाय पक्षिणः ।
इतीदमपि साध्वेव कालावस्थानिवेदने ॥२४२॥

अर्कः सूर्यः अस्तम् अदर्शनं गतः । भाति इन्दुः चन्द्र उदितः । पक्षिणश्च वासाय निलयार्थं वासं वा यान्ति इतस्ततः । इत्येवंविधमिदं लक्ष्यमनपेक्षिततादृश-विशेषं स्वरूपकथनमात्रमपि प्रागेव प्रतिसंस्कृतमन्यत् साधु समीचीनं भूषणमेव नान्यथा । कुत्र ? कालस्यावस्था अत्र प्रदोषलक्षणा तस्या निवेदने ज्ञापने सूर्यास्तमयादिना



हि तदव्यभिचारिणा रजनीमुखमाख्यायते । इति ज्ञापकहेतुरयं द्रष्टव्य इति । अनेन चेदं निषिद्धम्—

गतोऽस्तमर्को भातीन्दुर्यान्ति वासाय पक्षिणः ।
इत्येवमादि किं काव्यं वार्तामेनां प्रचक्षते ॥ इति ।
[ काव्यालङ्कारे २.८७ ]

अवध्यैरिन्दुपादानामसाध्यैश्चन्दनाम्भसाम् ।
देहोष्मभिः सुबोधं ते सखि ! कामातुरं मनः ॥२४३॥

इन्दोः पादानामत्यन्तशिशिराणां किरणानाम् अवध्यैस्तैरनपनेयैः चन्दनाम्भसां मलयजरसचर्चोपचाराणामसाध्यैरवध्यैः प्रत्युत उद्दीपनैः यैर्देहस्योष्मभिः सन्तापैर्निमित्तैः तव कामेनातुरं मन्मथमथितम मनः सुबोधं सुज्ञातं व्यक्तमवगम्यते । व्यवहितमपि तादृशां देहोष्मणां तथाविधमनोनान्तरीयकत्वात् । सखीत्यामन्त्र्यते ॥

पन्थानमेवमनुसरद्भिरयमलङ्कारः काव्येषु लक्षणीय इत्यतिदिशन्नाह—

इति लक्ष्याः प्रयोगेषु रम्या ज्ञापकहेतवः ।
अभावहेतवः केचित् व्याक्रियन्ते मनोरमाः ॥२४४॥

इत्येवंविधिना ज्ञापकाश्च ते हेतवश्चेति ज्ञापकहेतवो रम्या मनोहराः प्रयोगेषु काव्येषु लक्ष्या ज्ञातव्याः स्वयं च प्रयोक्तव्याः । तद् यथा—

[72b] निर्वृतिं परमां वक्ति वक्त्रं तव नितम्बिनि !
स्विन्नमुद्भिन्नमन्दाक्षमामीलल्लोललोचनम् ॥

जृम्भितं श्वसितं कम्पः कार्श्यं मूर्छाकुलं वचः ।
वदन्ति तव तन्वङ्गि ! विरहज्वरवेदनाम् ॥

दृष्टिरामन्थरा ताम्रा ताम्यत्तरलतारका ।
रागाभिभवमाचष्टे मृगाक्षि ! तव दुर्जयम् ॥

वराङ्गि ! तव दुर्वारमुखरस्तोकदूषणः ।
सुरतोत्सवसंकल्पमाकल्पः कथयत्ययम् ॥ इति ।

एवं भावस्वभावहेतुरुदाहृतः । इदानीमभावाश्च हेतवश्चेति अभावहेतवः केचित् कतिपये न सर्वे, विकल्पानामानन्त्याद् , व्याक्रियन्ते उदाह्रियन्ते मनोरमा रसावहा इति ॥

अनभ्यासेन विद्यानामसंसर्गेण धीमताम् ।
अनिग्रहेण चाक्षाणां जायते व्यसनं नृणाम् ॥२४५॥

विद्यानां गुणदोषविवेकभूमीनां त्रयीप्रभृतीनाम् चतुर्वर्गशास्त्राणां विदन्त्याभिः चतुर्वर्गमिति कृत्वा, अनभ्यासेन श्रुतचिन्ताभावनालक्षणस्याभियोगस्याभावेन । अनभ्यस्तविद्योऽपि यदि वृद्धोपसेवी, तावतार्थेन मोदयते । यथोक्तम्—

न सज्जनाद् दूरतरः कचिद् भवेत्,
भजेत साधून् विनयक्रमानुगः ।
स्पृशन्त्ययत्नेन हि तत्समीप[गं]
विसर्पणास्तद्गुणपुष्परेणवः ॥

इति । तदपि नास्तीत्याह– धीमतां शास्त्रज्ञानां नयव्यवहारिणामसंसर्गेण संसर्गस्य संगतेरभावेन धीमत्संसर्गरहितोऽपि यदि प्रविनीतः स्यात् , न विपद्यते । तदपि नास्ति । अक्षाणामिन्द्रियाणां चक्षुरादीनामापायिकविप[य]प्रवृत्तिरोधरूपस्य निग्रहस्य जयस्याभावेन च हेतुना नृणां पुसां व्यसनं विपत्तिर्जायते । नात्र संशयः । तस्माद्विद्याभ्यासादिमता पुंसा भाव्यम् । अत्र विद्याभ्या[साद्यै]रनुत्पादात् व्यसनं भावरूपं कार्यमुद्भवतीति भावकार्यः प्रागभावः कारकहेतुरिति ॥

गतः कामकथोन्मादो गलितो यौवनज्वरः ।
क्षतो मोहश्च्युता तृष्णा कृतं पुण्याश्रमे मनः ॥२४६॥

कामो विषयो भोगः । तस्य तत्र वा कथा साभिलाषोऽभिलापः चेष्टा च तादृशी प्रशमपरिपन्थिनी । सैवोन्मादो विभ्रमः, विकारप्रपञ्चलक्षणत्वात् । स तावद् गतो विरतः । यौवनं तारुण्यम् कार्यपक्षपातिविनयस्वास्थ्यविरुद्धमत्यन्तराग- परिदाहकत्वात् ज्वरः । सोऽपि गलितो विगतः । मोहः संसारे दुःखात्मके सुखमिति विपर्यासः । सोऽपि क्षतः क्षीणः । तृष्णापि तदनुसारिणी विषयाशक्तिलक्षणा च्युता नष्टा । ततश्च पुण्याश्रमे धर्मविषये विरागैकरसे मनः [73a] चित्तं कृतं निवेशितमिति



कश्चित्पश्चिमवयोवर्ती [73a] निर्विण्णः कथयति । अत्र कामोन्मादादीनामुत्पन्नानामे- वात्मतमयाद् धर्ममार्गे मतिर्जातेति भावकार्यः प्रध्वंसाभावः कारकहेतुरुदाहृत इति ॥

वनान्यमूनि न गृहाण्येता नद्यो न योषितः ।
मृगा इमे न दायादास्तन्मे नन्दति मानसम् ॥२४७॥

अमूनि इमानि दृश्यमानानि वनान्यरण्यानि शान्तानि न गृहाण्यनेकादीनव- दीनान्येताश्च लक्ष्यमाणा नद्यो निम्नगाः भिषेकादिक्षमा न योषितो विषयविषमूर्छा- भूमयः । इमे च मृगा तृणोदकमात्रवृत्तयः तपस्विजनायमाना न दायादाः तनया[दि]- स्नेहबन्धानर्थहेतवः । यत एवमेतत्सर्वं कल्याणमुपस्थितं कुतश्चिद् दैवात् , तत् तस्मान्मे मानसं नन्दति परं प्रीत्युत्सवमनुभवति इति कश्चित् गृहचारकविरक्तमतिः वनप्रस्थं कश्चिदासाद्य अभिनन्दति । अत्र वनगृहादीनामन्योन्यस्मिन्नभावात् उक्तेन विधिना मनोनन्दनमुत्पद्यत इति भावकार्योऽयमितरेतराभावः कारकहेतुरादर्शित इति ॥

अत्यन्तमसदार्याणामनालोचितचेष्टितम् ।
अतस्तेषां विवर्धन्ते सततं सर्वसम्पदः ॥२४८॥

आर्याणां सतामत्यन्तमेकान्तेनासन्नास्ति अनालोचितं सदसदित्यविचारितं दोषरूपं चेष्टितं चरितम् । सर्वदा विमृश्यकारिण एव ते, तल्लक्षणत्वादार्याणाम् । अन्यथा तद्भावहानेः । यत एवमतः कारणात् तेषामार्याणां सततं नित्यं सर्वाः सम्पदः विभूतयः ऐहिक्यः साम्परायिक्यश्च वर्द्धन्ते प्रकर्षं गच्छन्ति । स्थितिरेषा सताम् । इह सर्वथा अनालोचितचेष्टिताभावात्सम्पद्धनं फलमुपजायते इति भावकार्योऽत्यन्ताभावः कारकहेतुर्निदर्शित इति ॥

उद्यानसहकाराणामनुद्भिन्ना न मञ्जरी ।
देयः पथिकनारीणां सतिलः सलिलाञ्जलिः ॥२४९॥

उद्याने प्रमदवने सहकाराणां चूतानां मञ्जरी कलिका अनुद्भिन्ना उदिता न किम् ? नैव । ततः किमित्याह– देय इत्यादि । पथिकनारीणां विरहिणीनां मनोज्ञवस्तु- दर्शनज्वलितविरहानलदग्धानां लोकान्तरं गतानामिदानीं सतिलस्तथास्थितैस्तिल- संयुक्तः सलिलस्य अञ्जलिर्देयो दीयतां, किमद्यापि प्रतीक्ष्यते ? इहानुद्भेदप्रागभावः

उद्भेदरूपः पथिकनारीनिधनस्य जनक इति अभावकार्यः प्रागभावः कारकहेतुः आविष्कृतः। प्रध्वंसाभावादयस्त्रयोऽभावहेतवोऽभावकार्या नोदाहृतास्त उदाह्रियन्ते—

अदृष्टया हरिणीदृष्टस्तस्यास्तच्च[दनु]स्मरन्।
व्यर्थजीवितसंकल्पः सोऽयमञ्चति पञ्चताम् ॥

[73b]पद्मिनीयं न सा तन्वी पद्ममेतन्न तन्मुखम्।
इन्दीवरमिदं चक्षुर्न तदित्यसवो गताः ॥

न कदाचिदभूत्तन्व्यास्तस्या विनयविभ्रमः।
इति ध्यायन्नयं लोकः परैति परलोकताम् ॥

ज्ञापकहेतुश्च कश्चित् अभावोऽभावविष[य]ः प्रदर्श्यते—

भ्रूभङ्गविगमस्तन्वि ! तव कोपविपर्ययम्।
अस्य जीवितमाचष्टे दृष्टेः प्रकृतिमादिशन् ॥ इति।

अभावहेतुप्रस्तावमुपसंहरन्नाह—

**प्रागभावादिरूपस्य हेतुत्वमिह वस्तुनः।**
**भावाभावस्वरूपस्य कार्यस्योत्पादनं प्रति ॥२५०॥**

प्रागभाव आदिर्यस्य प्रध्वंसाभावादेः तद्रूपं स्वभावो यस्य वस्तुनः पदार्थस्य। व्यावृत्तानुवृत्तबुद्धिग्राह्यत्वाद् अभावस्यापि भाववद्वस्तुत्वं न विरुध्यते। हेतुत्वं कारकत्वमिह प्रस्तावे दर्शितमिति शेषः। कतरत्कार्यमधिकृत्येत्याह— भावेत्यादि। भावो विधिरभावः प्रतिषेधः। तदुभयं स्वरूपमात्मा यस्य तस्य [भावा]भावस्वरूपस्य चेति प्रत्येकं योज्यम्। नत्वेकमुभयात्मकम् इति कार्यस्य फलस्य उत्पादनं प्रतिक्रियामुद्दिश्य इति ॥

चित्रहेतूनधिकृत्याह—

**दूरकार्यस्तत्सहजः कार्यानन्तरजस्तथा।**
**अयुक्तयुक्तकारी चेत्यसंख्याश्चित्रहेतवः ॥२५१॥**



दूरं हेतुव्यापारविषयान्तरगतकार्यं यस्य स तथा। तेन कार्येणात्मीयेन सह युगपज्जायते तत्सहजः फलसमानकालभावीत्यर्थः। कार्यं प्रथममुत्पद्यते, तस्या[न]न्तरं पश्चाद्धेतुर्जायते इति कार्या[न]न्तरजः। तथा समुच्चये। अयुक्तमनुचितं कार्यं करोति युक्तमनुरूपं करोतीति च राशिद्वयम्। अयुक्तकारी युक्तकारी चेत्यर्थः। अयुक्तयुक्तकार्यौ चेत्यपि पाठः। तत्रैवं व्याख्येयम्— अयुक्तं युक्तं च कार्यं ययोः प्रत्येकं तावत् युक्तायुक्तकार्यौ। अयुक्तकार्यो युक्तकार्यश्चेत्यर्थः। इत्येवंप्रकाराश्चित्राः प्रसिद्धहेतुविपरीता अपूर्वरूपा आश्चर्यभूताः हेतवोऽसंख्याता अनवधयो विकल्पानामानन्त्यादिति ॥

नन्वेवंभूते न कश्चिन्मुख्यो हेतुरुपलक्ष्यते। तत्कथमेतत्सम्भव इत्याह—

**तेऽमी प्रयोगमार्गेषु गौणवृत्तिव्यपाश्रयाः।**
**अत्यन्तसुन्दरा दृष्टास्तदुदाहृतयो यथा ॥२५२॥**

ते अमी अनन्तरोक्ता दूरकार्यादयश्चित्रा हेतवः न मुख्या इष्यन्ते। किं तर्हि ? गौणी गुणनिवृत्ता प्रसिद्धिविषयविपरीता समारोपिता वृत्तिर्व्यवस्था हेतुभावस्वभावाः व्यपाश्रयोऽधिष्ठानं येषां तस्यां वा ये व्यापाश्रया गौणा इति यावत्। प्रयोगाः काव्यानि मार्गाः पन्थानः। अथ विशेषव्याप्तिहेतुत्वात् तेषु सर्गबन्धादिषु [74a] प्रयुक्ता अत्यन्तम् एकान्तेन सुन्दरा मनोहरा दृष्टा लक्षिताः। के पुनस्ते ? येषां चित्रहेतूनामुदाहृतयः प्रयोगा उदाह्रियन्त इति कृत्वा। ताः किम् ? प्रतिपाद्यन्त इति शेषः। यथेति निदर्शयति ॥

**त्वदपाङ्गाह्वयं जैत्रमनङ्गास्त्रं यदङ्गने।**
**मुक्तं तदन्यतस्तेन सोऽप्यहं मनसि क्षतः ॥२५३॥**

अङ्गने ! अङ्गजस्य कामस्य अस्त्रम् आयुधं जैत्रम् जगज्जयशीलं तवापाङ्गमपाङ्गदर्शनमित्याह्वयोऽभिधानमस्येति त्वदपाङ्गाह्वयं यदिदं तत् त्वया मुक्तं क्षिप्तमन्यतोः अन्यस्मिन् जिगीषिते पुरुषे क्वचित् तेनान्यतो मुक्तेन सोऽप्यहं यो न लक्षीकृतः मनसि कृतो हतः। न केवलं यत्र मुक्तं स एवेत्यपिशब्दः। तदेतच्चित्रम्। प्रसिद्धं ह्यस्त्रं यत्र प्रयुज्यते तं विषयं क्षिणोति। इदं त्वव्यापारगौरवं वस्तु हिनस्ति इति दूरकार्यः चित्रहेतुरीदृशः प्रतिपत्तव्य इति ॥

आविर्भवति नारीणां वयः पर्यस्तशैशवम् ।
सहैव विविधैः पुंसामङ्गजोन्मादविभ्रमैः ॥२५४॥

नारीणां वयः पर्यस्तं क्षिप्तं तदुपमादिनोदयात् शैशवं बाल्यमनेनेति पर्यस्तशैशवं यौवनमिति यावत् । अङ्गजः काम उन्मादो विकारहेतुत्वात् । तस्य विभ्रमाः तदनुरूपा दशाविशेषास्तैः कार्यभूतैर्विविधैर्नानाप्रकारैः चक्षुःप्रीतिमनःसङ्गसंकल्पोत्पत्तिनिद्राभङ्गादिभिः[1] पुंसां सम्बन्धिभिः सह युगपदेवापूर्वाचारः समाविर्भवति उदेतीति चित्रमेतत् । प्रतीतो हि हेतुः कार्यात् पूर्वभावी तदुत्पादयति । अयं तु हेतुः सहैव कार्येण जायते इति कार्यसहजश्चित्रो हेतुरेवंविधो बोद्धव्यः ॥

पश्चात् पर्यस्य किरणानुदीर्णं चन्द्रमण्डलम् ।
प्रागेव हरिणाक्षीणामुदीर्णो रागसागरः ॥२५५॥

हरिणाक्षीणां रागः पुरुषाभिलाषः । सागरो वैपुल्यादिना । प्रागेव यावन्नेन्दुरुदेति उदीर्णो वृद्धिमगमत् । पश्चाद्रागसागरोदयानन्तरं किरणान् पर्यस्य दिक्षु विक्षिप्य उदीर्णमुदितं चन्द्रस्य मण्डलमित्यपूर्वोऽयं हेतुः । यः कार्यादूर्ध्वमुदेति इति कार्यान्तरजश्चित्रहेतुरेवंरूप इति ॥

राज्ञां हस्तारविन्दानि कुड्मलीकुरुते कुतः ।
देव ! त्वच्चरणद्वन्द्वरागबालातपः स्पृशन् ॥२५६॥

देव ! तव चरणयोर्द्वन्द्वस्य युगलस्य रागो बालश्चासौ आतपश्चेति बालातपः तरुणतरणिकिरणसुन्दरः, लोहितत्वादिति । राज्ञां हस्तारविन्दानि कान्त्यादिना स्पृशन् अभिसारित्वेनामृशन् सन् कुतः कस्मात् कुड्मलीकुरुते मुकुलयति । अञ्जलिप्रणामत्वेनायुक्तमेतत् । बालातपो हि पद्मोन्मीलनहेतुः । अयं त्वपूर्वो [74b] बालातपो यः पद्मानि निमीलयतीति । अनुचितकार्यकरणात् अयुक्तकारी चित्रहेतुरेवंविध इति ॥

---

1. दृङ्मनःसङ्गसंकल्पा जागरः कृशतारतिः ।
ह्रीत्यागोन्मादमूर्च्छान्ता इत्यनङ्गदशा दश ॥



पाणिपद्मानि भूपानां सङ्कोचयितुमीशते ।
त्वत्पादनखचन्द्राणामर्चिषः कुन्दनिर्मलाः ॥२५७॥

देव ! तव पादानां नखाश्चन्द्राः कान्त्यादिना तेषामर्चिषः किरणाः कुन्दकुसुमनिर्मलाः शुद्धाः भूपानां राज्ञां पाणीन् पद्मानि कान्त्यादिना सङ्कोचयितुं प्रणतिकरसम्पुटरूपेण मीलयितुमीशते कल्पन्ते । युक्तकारी चित्रहेतुरेवंविधः, चन्द्रतः पङ्कजसंकोचस्योचितत्वादिति ॥

हेतुमुपसं[हरन्नाह]—

इति हेतुविकल्पस्य दर्शिता गतिरीदृशी ।

इति कथितेन विधिना हेतोर्विकल्पस्य प्रभेदस्य सामान्यरूपानुगतस्य गतिः स्वरूपमीदृशी कथितरूपा दर्शिता प्रतिपादिता ॥

॥ इति हेतुचक्रम् ॥

सूक्ष्ममालक्षयन्नाह—

इङ्गिताकारलक्ष्योऽर्थः सौक्ष्म्यात् सूक्ष्म इति स्मृतः ॥२५८॥

संप्रति सूक्ष्मो लक्ष्यते । इङ्गितं कस्यचिदन्तर्गतस्य भावस्य ज्ञापनार्थं तादृशि प्रस्तावे बुद्धिपूर्वकं क्रियमाणं तादृशं कायिकं चेष्टितम् । आकारस्तु स्वयमेव भावानुरूपमाविर्भवन् तत्सूचकमवस्थान्तरं शरीरस्येत्यनयोर्भेदः । ताभ्यां लक्ष्यो गम्योऽर्थः कश्चिदन्तर्मात्राधिरूढः सुरतोत्सवादिः सूक्ष्मः इति स्मृतो विज्ञायते तज्ज्ञैः । कुतः ? शब्दालोकातिवर्तिनो वस्तुनः कायविज्ञप्तिमात्रेण तादृशेन लक्ष्यतया सौक्ष्म्यात् सूक्ष्मत्वात् तथाविधैरेव ग्रहणादिति ॥

[इङ्गितलक्ष्य]सूक्ष्ममुदाहरति—

कदा नौ सङ्गमो भावीत्याकीर्णे वक्तुमक्षमम् ।
अवेत्य कान्तमबला लीलापद्मं न्यमीलयत् ॥२५९॥

आकीर्णे जनसंबाधे स्थाने नौ आवयोः सङ्गमो योगः कदा कस्यां वेलायां भावी भविष्यतीति वक्तुं वाचा प्रतिपादयितुं भयत्रपिष्णुतया अक्षमम् अशक्तं कान्तं रमणम् आकारात् तथाविधादवेत्य ज्ञात्वा लीलार्थं पद्मं विभ्रमकमलं करतलगतं न्यमीलयत् अबला काचिद् विलासिनीति ॥

तद् विवृणोति—

पद्मसंमीलनादत्र सूचितो निशि सङ्गमः ।
आश्वासयितुमिच्छन्त्या प्रियमङ्गजपीडितम् ॥२६०॥

अत्र प्रयोगे निशि रात्रौ संगमः सुरतरूपः संकल्पात्मना सूक्ष्मो व्यवस्थितः, पद्मस्य संमीलनात् । मुकुलीकरणात् इङ्गितविशेषान्निमित्तात् । सूचितः प्रकाशितः । कान्तस्य किमेवं स्यादित्याह– आश्वासयितुमित्यादि । प्रियं वल्लभमङ्गजेन कामेन पीडितमाकुलीकृतम् इङ्गितग्रहणे निपुणं भावसमर्पणेनाश्वासयितुमाशापत्रिकादानेन व्यवस्थापयितुमिच्छन्त्या बालया [75a] सूचित इति प्रकृतम् । अयमिङ्गितसूक्ष्मो दर्शितः, पद्मसम्मीलनात् उत्पलकृतस्य कायकर्मण इङ्गितरूपत्वादिति ॥

आकारसूक्ष्ममुदाहरन्नाह—

त्वदर्पितदृशस्तस्या गीतगोष्ठ्यामवर्धत ।
उद्दामरागतरला छाया कापि मुखाम्बुजे ॥२६१॥

गीतलक्षणगोष्ठी विनोदस्तस्यां त्वयि अर्पिता व्यापारिता दृक् दृष्टिः यस्या यया वा तस्या मुखाम्बुजे कान्त्यादिना उद्दामेन उदीर्णेन रागेण रत्यभिप्रायेण तरला उज्ज्वला रक्तच्छाया कान्तिः कापि विशिष्टा या निधुवनानन्दोत्सवमन्तर्वर्तिनमाविष्करोति । अवर्धत व्यजृम्भत । अयमाकारसूक्ष्मो निर्दिष्टः, तादृशो मुखच्छायायाः स्वयमेव तथाविधाभिप्रायवशादबुद्धिपूर्वमाविर्भावादिति ॥

तद् व्याचष्टे—

इत्यनुद्भिन्नरूपत्वाद्रत्युत्सवमनोरथः ।
अनुल्लंघ्यैव सूक्ष्मत्वमभूदत्र व्यवस्थितः ॥२६२॥



इत्युक्तेन प्रकारेण रतिः सुरतमुत्सवो महः प्रीतिविशेषलक्षणत्वात् तस्मिन् मनोरथोऽभिलाषः । सूक्ष्मत्वं दुरुपलक्षणत्वमनुल्लङ्घ्य अनतिक्रम्यैव सूक्ष्म एव व्यवस्थितो भावरूपेणाभूत् । कुतः ? अनुद्भिन्नमशब्दप्रकाशितमव्यक्तं रूपं स्वभावो यस्य रत्युत्सवमनोरथस्य तस्य भावः तत्त्वं तस्मात् । अत्राप्याकारसूक्ष्मप्रयोगे न केवलम् इङ्गितसूक्ष्मलक्ष्ये कदेत्यादाविति ॥

॥ इति सूक्ष्मचक्रम् ॥

लेशमादर्शयन्नाह– यो लव इत्युद्दिष्टः—

लेशो लेशेन निर्भिन्नवस्तुरूपनिगूहनम् ।
उदाहरण एवास्य रूपमाविर्भविष्यति ॥२६३॥

निर्भिन्नस्याकारात् तादृशात् कुतश्चित् प्रकटीभूतस्य वस्तुरूपस्यार्थात्मनः कस्यचिदनुरागादेर्लेशेन व्याजेन केनचित् निगूहनं कथञ्चित्संवरणमित्यनूद्य लेशो विधीयते । एवमप्यनभिव्यक्तस्वभाव इत्याह - उदाहरणे लक्ष्य एवास्य रूपं स्वभाव आविर्भविष्यति प्रकटतां यास्यति । ततस्तत्रैव परिस्फुटमवगम्यतामिति ॥

तमुदाहरन्नाह—

राजकन्यानुरक्तं मां रोमोद्भेदेन रक्षकाः ।
अवगच्छेयुरा ज्ञातमहो शीतानीलं वनम् ॥२६४॥

राज्ञः कन्यायां कस्याञ्चिदनुरक्तमुद्भूताभिलाषम् मामवगच्छेयुर्जानीयुः रक्षकाः तत्परिपालनाधिकृता वर्षवरादयः । कथम् ? रोम्णामुद्भेदेन हर्षणानुरागकार्यतया तज्ज्ञापकेन हेतुना ! किमिदमासीदिति रोमाञ्चेन निर्भिन्नमनुरागलक्षणं वस्तुरूपमिह तावद्दर्शितम् , तदिदानीं कारणान्तरोपन्यासेन लेशेन निगूह्यते । आः स्मृतिप्रतिलम्भे, ज्ञातं भवतु दृष्टम् । अहो [75b]अतिशये । शीतोऽनिलो यस्मिन् तच्छीतानिलम् अहो यथेदं वनम् यतो रोमाञ्चो जायत इति रोमोद्भेदस्य शिशिरमारुतसंसर्गादप्युपपत्तेरन्यथासिद्ध्या निभिन्नोऽनुरागो निगूढ इति स्पष्टरूपमीदृशम् ॥

आनन्दाश्रु प्रवृत्तं मे कथं दृष्ट्वैव कन्यकाम् ।
अक्षि मे पुष्परजसा वातोद्धृतेन दूषितम् ॥२६५॥

कन्यकां पतिम्वरां दृष्ट्वैव दर्शनसमनन्तरमेवानन्दजनितमश्रु हर्षवाष्पः प्रवृत्तं जातं मे । कथमेतदयुक्तं बत संवृत्तमिति निर्भिन्नस्य वस्तुनोऽनुरागस्य लेशेन निगूहनमिदं क्रियते । आ ज्ञातमक्षि मे पुष्पाणां रजसा रेणुना वातैरुद्धूतेन प्रेरितेन दूषितमुपद्रुतम् इति अश्रुपातस्य रजोदूषणादपि सम्भवात् संवृत्तो लेशेन भावस्तादृश इति ॥

तामनुस्मृत्य पक्ष्माक्षीमक्षि वाष्पायते मम ।
श्रोत्रं सुभाषितानन्दममन्दमभिनन्दति ॥

इत्यपरमुदारहणम ॥

लेशप्रकारमुपसंहृत्य प्रकारान्तरमस्य दर्शयन्नाह—

इत्येवमादिस्थानेऽयमलङ्कारोऽतिशोभते ।
लेशमेके विदुर्निन्दां स्तुतिं वा लेशतः कृताम् ॥२६६॥

इत्येवंरूपमनन्तरोक्तं राजकन्यादर्शनादि यस्य रागनिगूहनादेस्तस्मिन् स्थाने प्रस्तावे अयमलङ्कारो लेशः अतिशोभते, तस्यात्यन्तसुन्दरत्वात् इति स्वमतमुपसंहृतम् । एके अन्ये पुनर्निन्दां दोषोक्तिं लेशतो व्याजेन कथञ्चित् कृतां तादृशविषयां स्तुतिं वा गुणाविष्क्रियामीषत्प्रयुक्तां लेशं विदुः स्मरन्ति । अ[य]मपरो लेशप्रकार इति ॥

तमुदाहरन्नाह—

युवैव गुणवान् राजा योग्यस्ते पतिरूर्जितः ।
रणोत्सवे मनः सक्तं यस्य कामोत्सवादपि ॥२६७॥

युवा तरुणः । विषयसम्भोगैकरसे विविधा[नन्दजु]षि वयसि वर्तमान एव गुणवान् विनयसम्पन्नः । एवम्भूतोऽपि, न यः कश्चित् । किं तु राजा मध्यमलोकपालः ! ऊर्जितस्तेजस्वी महानुभावः तवायमेव योग्यः समुचितः पतिर्वरो वरारोहे ! पुण्येन महता प्राप्तः । यस्य विक्रमैकरसस्य रणे उत्सवे प्रीतिकरत्वान्मनः सक्तं निरतं कामोत्सवात्सुरतसुखादप्यधिकम् , न तस्यात्रास्था यथा समरमहोत्सवे इति ॥



नन्वत्र सर्वथा गुण एव प्रतीयते नतु कश्चिद् दोषो यतो लेशतो निन्दा स्यादित्यत आह—

वीर्योत्कर्षस्तुतिर्निन्दैवास्मिन् भावनिवृत्तये ।
कन्यायाः कल्पते भोगान्निर्विविक्षोर्निरन्तरान् ॥२६८॥

वीर्यस्य विक्रमस्योत्कर्षोऽधिमात्रता तस्य स्तुतिः वर्णनं निन्दैव दोषोक्तिरेव जायते । कथम् ? यतः कन्याया निरन्तरानविच्छेदवर्तिनो भोगान् [76a] सुरतसुखानि निर्विविक्षोरनुबुभूषोः सम्बन्धिनो भावस्य स्वीकाराभिप्रायस्यास्मिन् यथोपवर्णिते पुंसि तन्मनोरथप्रतिकूलवर्तिनि विषये वैमुख्याय कल्पते । ततो निन्दैवेयं जाता स्तुतिः, अन्यथा भावनिवृत्त्ययोगात् । नहि गुणवत्तया प्रतीतः परित्यज्यते किं तु दोषवानेव । तथा असौ अलीकरणरागव्यसनी सुरतसमरमहोत्सवपराङ्मुखः प्रतीतो यतस्तं विभावयतीति निन्दैवेयं लेशतः कृतेति ॥

[मुग्धो] नराधिपः सोऽयं निर्विकारः सुमेरुवत् ।
आश्रितानामपि क्लेशैर्व्यथते यो न जातुचित् ॥

इत्यपरमुदाहरणम् ॥

चपलो निर्दयश्चासौ जनः किं तेन मे सखि ।
आगःप्रमार्जनायैव चाटवो येन शिक्षिताः ॥२६९॥

चपलो दुर्विनीतः यत्किञ्चनकारी निर्दयः क्रूरश्च । किं तेनैवं दुःखदायिना जनेन निर्गुणेन ? पुनस्तादृश एवासौ येनागसामपराधानां प्रतिक्षणभाविनामात्मीयानां प्रमार्जनाय परिशोधनार्थमेव केवलम् , नानुग्रहाय कस्मैचित्तादृशाय चाटवोऽनेकविधा लोलनप्रकाराः शिक्षिताः स्वभ्यस्ताः । किं तेन चाटुचुञ्चुनेति निगमनीयम् ॥

ननु दोष एवात्र सर्वथोक्तो न गुणः क्वचित् यतो लेशतः स्तुतिः स्यात् इत्यत आह—

दोषाभासो गुणः कोऽपि दर्शितश्चाटुकारिता ।
मानं सखीजनोद्दिष्टं कर्तुं रागादशक्तया ॥२७०॥

सखि ! त्वया किमतिदाक्षिण्येन अस्य दास्या भूयते ? अणुभिरपि न कदाचिदञ्चयसे । मानिन्यो हि वयम् । किमपरमस्माकमस्त्रमिति सखीजनेनोद्दिष्टम् उपदिष्टम् मानमुन्नतिं चित्तस्य कर्तुमनुष्ठातुमशक्ततया कयाचिदङ्गनया । कुतः ? रागात् तद्विपयाभिपङ्गान्मान-विरोधिनो हेतोश्चाटुकारिता उपचारचातुर्यं नाम गुणो विशेषः कोऽपि कश्चिदुपात्तो नागरकजनोचितः कोऽपि वा कश्चिद्देकः सर्वदोषवदाभासते । अपराधप्रमार्जनपरत्वेनैव प्रकाशनात दोषाभासो दर्शितः । ततो लेशतः स्तुति[रि]यं कल्पत इति ।

नृशंसो नृपतिः सोऽयं व्यसनी नयनिस्पृहः ।
दोषसंशोधनायैव त्यागो यस्य विजृम्भते ॥

इत्यपरमुदाहरणम् ॥

॥ इति लेशचक्रम् ॥

क्रमं विवरीतुमुपक्रमते—

उद्दिष्टानां पदार्थानामनुदेशो यथाक्रमम् ।
यथासंख्यमिति प्रोक्तं संख्यातं क्रम इत्यपि ॥२७१॥

उद्दिष्टानां पूर्वप्रयुक्तानामर्थानां वस्तूनां केषाञ्चिद् यथाक्रममुद्देशक्रमानतिक्रमेण अनुदेशः प्रत्याम्नायः पुनरर्थान्तराश्रयेण परामर्शः [76b]यथासंख्यमिति यथासंख्यं प्रोक्तम् । यथासंख्यमित्यपेक्ष्य नपुंस[क]त्वम् तस्य विधेयत्वात् । अनुदेशस्यानूद्यतया अप्रधानत्वान्न तल्लिङ्गपरिग्रहः । प्रोक्तम् इति संख्यातमित्यपि प्रोक्तम् । क्रम इत्यपि प्रोक्त इति लिङ्गपरिणामेन योज्यम् । क्रम इत्यपि उपदिश्यत इति वा अध्याहार्यम् इति ॥

तदुदाहरन्नाह—

ध्रुवं ते चोरिता तन्वि स्मितेक्षणमुखद्युतिः ।
स्नातुमम्भःप्रविष्टायाः कुमुदोत्पलपङ्कजैः ॥२७२॥

तन्वि ! ते स्नातुमम्भः [प्रविष्टायाः] सरःप्रविष्टायाः स्मितं चेक्षणं च मुखं च तेषां द्युतिरित्युद्देशः कुमुदान्युत्पलानि पङ्कजानि च तैश्चोरिता मुषिता कुमुदैः स्मितद्युति-



रुत्पलैरीक्षणद्युतिः पङ्कजैर्मुखद्युतिश्चोरितेति यथोद्देशमयमनुदेशः । वस्तुतोऽतथाभावाद् ध्रुवमित्युत्प्रेक्ष्यते ।

यद्येवमुत्प्रेक्षेयं कथं यथासंख्यमिति चेत् ? यद्येवं निरूप्यते, उपमाप्यत्र विद्यते, स्मितादीनां कुमुदादिभिः सादृश्यप्रतीतेः । तस्माद्यत्रालङ्कारान्तरमपि प्रतीयते, तत्रापि उद्देशानुरूपानुदेशसंख्यातमेवालङ्कारो व्यवह्रियते । तत्रैव मुख्यता, विवक्षितत्वात् । यत्र तु अलङ्कारान्तरं न गम्यते तत्र सुतरामेव क्रम इति विज्ञेयम् ॥

॥ इति क्रमः ॥

प्रेयोरसवदूर्जस्वीत्यलङ्कारत्रयं लक्षयन्नाह—

प्रेयः प्रियतराख्यानं रसवद्रसपेशलम् ।
ऊर्जस्वि रूढाहङ्कारं युक्तोत्कर्षं च तत् त्रयम् ॥२७३॥

प्रियतरस्यातिशयेन प्रियस्यार्थरूपस्य कस्यचिदाख्यानं प्रतिपादनम् आख्यायते अनेनेत्यनूद्य प्रेय इति ज्ञाप्यते । रसेन शृङ्गारादिना प्रतिपाद्येन पेशलं मनोज्ञं रसवद् वाक्यं विज्ञेयम् । रूढो दीप्तोऽहङ्कारः सौटीर्यं यत्र तादृशं वचनमूर्जस्वि ज्ञेयम् । तच्चैतत्त्रयं प्रेयो रसवत् ऊर्जस्वि च युक्तः सङ्गतः उत्कर्षोऽधिमात्रता येनेति युक्तोत्कर्ष-मत्यन्तप्रियमेकान्तरसवत् भृशमूर्जस्वीत्यर्थः । अयं चार्थः– अयमु[प]मादिभिरतिशय-विधिभिरुक्तो युक्तोत्कर्ष इति ॥

प्रेयस्तावदुदाहरन्नाह—

अद्य या मम गोविन्द ! जाता त्वयि गृहागते ।
कालेनैषा भवेत् प्रीतिस्तवैवागमनात् पुनः ॥२७४॥

गोविन्द विष्णो ! त्वयि गृहमिदमस्मदीयमतिधन्यमागते सति या प्रीतिः तुष्टिः अद्य अस्मिन् पुण्याहे मम जाता एषा इयं प्रीतिः कालेन पुनरीदृशेन शुभेन समयेन केनचित् तवैव नान्यस्य । कस्त्वादृशः ? आगमनादुपसंक्रमण[77a]महोत्सवात् कारणात् भवेत् जायते । त्वदागमनमेवासाधारण[कारण]मस्याः, ज्योत्स्नाया इव चन्द्र इति ॥

तद् व्याचष्टे—

इत्याह युक्तं विदुरो नान्यतस्तादृशी धृतिः ।
भक्तिमात्रसमाराध्यः सुप्रीतश्च ततो हरिः ॥२७५॥

इत्येतदनन्तरोक्तं युक्तं प्राप्तकालमाह ब्रवीति विदुरो नरोत्तमः कश्चिदेवमभिधानः । यतो नैव गोविन्दागमनादृतेऽन्यतः कुतश्चिदपि तादृशी गोविन्दागमनभाविनी धृतिः प्रीतिर्जायते । यतो युक्तमाहेत्यपीक्षणीयं ततः ईदृशात् प्राप्तकालात् । सुप्रीतोः अत्यन्तप्रसन्नो हरिर्विष्णुरभूत् । किमेतावता सुप्रीतः स्यात् ? न किञ्चिद् गृहागताय तस्मै तथाविधायातिथये तादृशं वस्तूपहृतं यतः सुप्रीतः स्यादित्याह– भक्तिरीदृशी वचनादिरूपा यथाभाविनी सेवा सैव तन्मात्रम् वहिर्वस्तूपहाराद्यनपेक्षणात् । तेन समाराध्यः प्रतिपूजनीयो यतस्तस्मात् तत एव भक्तेः सुप्रीत इति निगमनीयम् ॥

सोमः सूर्यो मरुद् भूमिर्व्योम होतानलो जलम् ।
इति मूर्त्तीरतिक्रम्य त्वां द्रष्टुं देव ! के वयम् ॥२७६॥

होता यजमानः । इत्येवंभूतानि रूपाणि व्यक्तानि अष्टौ मूर्त्तीस्तवातिक्रम्य मु[क्त्वा] देव ! त्वामत्यन्ताव्यक्तपरमतत्त्वं योगिभिरपि महद्भिरगम्यं द्रष्टुं साक्षात्कर्तुं के वयमितरे प्राणिनः ? नैवास्मादृशोऽगोचरो देवः । सोमादीनि व्यक्तानि रूपाणि देवस्य यदि वयं पश्येम इति ॥

तद्विभजन्नाह—

इति साक्षात्कृते देवे राज्ञो यद्रातवर्मणः ।
प्रीतिप्रकाशनं तच्च प्रेय इत्यनुगम्यताम् ॥२७७॥

इतीदृशं यत् प्रीतिप्रकाशनं तत् प्रेयोवचनम् प्रकाश्यतेऽनेनेति कृत्वा रातवर्मणः तन्नाम्नो रघुवंशजन्मनो राज्ञः सम्बन्धि तत्प्रयुक्तत्वात् । देवे शंकरे परमभक्तिसमाराधिते प्रसन्ने किल दत्तदर्शने साक्षात्कृते दृष्टे सति । तेनेत्यर्थाद् गम्यते । तच्च तादृशं वचनमीश्वरविषयं रातवर्मप्रयुक्तं प्रेय इत्येवमनुगम्यतां ज्ञातव्यमिति ॥

॥ इति प्रेयश्चक्रम् ॥



रसवदुदाहरन्नाह—

मृतेति प्रेत्य संगन्तुं यया मे मरणं मतम् ।
सैवावन्ती मया लब्धा कथमत्रैव जन्मनि ॥२७८॥

इयं किल-प्रेयसी मृता स्वर्गमगमदिति हेतोः प्रेतलोकान्तरे क्वचित् ययानया संगन्तुं योगार्थं मरणं देहविसर्जनं मतमिष्टं मम । मृत्वाप्यवश्यं तया संगंस्ये इति । सैव या परासुः किलासीत् नान्या अवन्ती अवन्तिराजतनया मया [अयातजीवि]तेन तथाव्यवसितेनात्रैव जन्मनि न प्रेत्य कथं लब्धा, किमिद[77b]मद्भुतम् । नास्ति भाग्यानां दुष्करम् । उदयनः किल वत्सराजः अवन्तिराजसुतायां वासवदत्तायामासक्तः राज्यचिन्ताविमुखोऽवर्तत इति मन्त्रिभिः सा क्वचिन्निगूह्य मृतेति ख्यापिता । स च तद्विरहमसहमानोऽतिरक्ततयाऽनुमरणं तत्सङ्गमवर्त्म व्यवससौ । ततस्तैः पुनर्जह्रे इति कथोदाहृता ॥

ननु प्रीतिरियं पूर्वोदाहृता । तत्किमनयेति विशेषं दर्शयन्नाह—

प्राक् प्रीतिर्दर्शिता सेयं रतिः शृङ्गारतां गता ।
रूपबाहुल्ययोगेन तदिदं रसवद्वचः ॥२७९॥

प्राक् प्रेयस्यलङ्कारे प्रीतिस्तुष्टिः पुरुषविषया दर्शिता । या पुनरियमनन्तरम् उदाहृता सा त्वियं रतिः स्त्रीविषयानुरक्तिः भावविशेषः शृङ्गाररसयोनिस्तादृशविभावजन्यस्तथाविधानुभावगम्यः । यदाह– शृङ्गारतां शृङ्गाराख्यरसविशेषत्वं गता तद्रूपेण परिणता । कुतः ? रूपस्य स्वभावस्यात्मीयस्य संकल्पविशेषलक्षणस्य बाहुल्येनोदीर्णतया अत्युपचयेन सह योगेन सम्बन्धेन हेतुना । एतदुक्तं भवति– रतिरियमव्यक्ता अनुपचिता अन्तस्तत्त्वेन वर्तमाना संकल्पविशेषस्वभावा भाव उच्यते । अत एव विकारो मानसो भाव इत्यभिधीयते । सैव यदा समुदीर्णा अनुभावात् कुतश्चिन्नाटिकाभिनयादिलक्षणात् व्यक्तिमायाति तदा शृङ्गारो नाम रसः सम्पद्यत इत्यत एवोच्यते– अभिव्यक्ता भावा एव रसाख्यां प्रतिलभन्ते । विस्तरस्तु तच्छास्त्रात् । वक्ष्यमाणेषु रौद्रादिषु रसेषु क्रोधादिभावपरिणामविशेषरूपेष्वप्ययं न्यायोऽनुगन्तव्य इत्यलं विस्तरेण । तत्तस्मादिदमीदृशं वचः काव्यं रसवद्विज्ञेयम्, शृङ्गार[र]सयोगात् । यद्वेदृशं तद्रसवद्वचनमिति योज्यम् ॥

निगृह्य केशेष्वाकृष्टा कृष्णा येनाग्रतो मम ।
सोऽयं दुःशासनः पापो लब्धः किं जीवति क्षणम् ॥२८०॥

येन दुरात्मना ममाग्रतः पुरस्तात् केशेषु निगृह्य अवष्टभ्य कृष्णा द्रौपदी प्रिया आकृष्टा आक्षिप्ता परिभूता, सोऽयमेष पापो दुरात्मा दुःशासनो मया भीमेन लब्धः प्राप्तः किं क्षणमेकं जीवति ? नैव जीवितुं लभते। एष मया हतो वर्तते कौरवाणां पश्यताम्। त्रिभुवनमपि संहतमेतत्परित्राणे न समर्थमिति भीमो गर्जति ॥

कोऽयं रस इति दर्शयन्नाह—

इत्यारुह्य परां कोटिं क्रोधो रौद्रात्मतां गतः ।
भीमस्य पश्यतः शत्रुमित्येतद्रसवद्वचः ॥२८१॥

इति उक्तेन प्रकारेण परां कोटिं प्रकर्षनिष्ठामारुह्य प्राप्य अनुभावेनाभिव्यक्तिमागम्य क्रोधो भावविशेषो रौद्रात्मतां रौद्ररसविशेषस्वभावतां गतः। कस्यासौ क्रोधो य एवमवदत् ? भीमस्य शत्रुं दुःशासनं पश्यतः। अनेन तादृशवस्तुस्वभावो विभावो भावयोनिः सूचित इत्येवंविधं वचः काव्यं रसवद्रौद्ररसयोगादिति ।

अजित्वा सार्णवामुर्वीमनिष्ट्वा विविधैर्मखैः ।
अदत्त्वा चार्थमर्थिभ्यो भवेयं पार्थिवः कथम् ॥२८२॥

उर्वीं महीं सार्णवां सहार्णवैर्वर्तत इति चतुःसमुद्रपर्यन्तामजित्वा अनिर्जित्य अनात्मसात्कृत्वा तज्जयलब्धया च धनसम्पदा विविधैर्विचित्रैः शास्त्रोक्तैरश्वमेधविश्वजिद्वाजपेयराजसूयादिभिर्मखैर्यागविशेषैः करणभूतैः यागसामान्ये तद्विशेषस्य साधकतमत्वात्। अनिष्ट्वा यजनमकृत्वा अर्थिभ्यश्च वनीयकेभ्योऽर्थं यथार्थं यथाकाममदत्त्वा अप्रतिपाद्य अहं राजधर्मशून्यः कथं पार्थिवः पृथिवीपतिः भवेयम् ? नैव, पृथिवीजयादिलक्षणत्वात् पार्थिवताया इति ॥

कतरोऽयं रस इति विवृण्वन्नाह—

इत्युत्साहः प्रकृष्टात्मा तिष्ठन्वीररसात्मना ।
रसवत्त्वं गिरां तासां समर्थयितुमीश्वरः ॥२८३॥



इत्युक्तेन विधिना उत्साहो भावविशेषः प्रकृष्ट आत्मा अस्येति प्रकृष्टात्मा परां कोटिमारूढोऽभिव्यक्तत्वात्। वीरश्चासौ रसश्च तस्य स एवात्मा स्वभावः तेन लक्षितः तिष्ठन् वर्तमानो वीररसतामापन्नः। तासामनन्तरोक्तानां गिरां काव्यरूपाणां रसवत्त्वं वीररसयोगितां समर्थयितुं कर्तुमीश्वरः समर्थ इति ॥

यस्याः कुसुमशय्यापि कोमलाङ्ग्या रुजाकरी ।
साधिशेते कथं देवी हुताशनवतीं चिताम् ॥२८४॥

यस्या देव्याः कोमलमङ्गमस्या इति कोमलाङ्ग्याः मार्दवगुणेनैव केवलेन निर्मिताया अत एव कुसुममयी शय्या कुसुमशय्या पुष्पतल्पमत्यन्तकोमलं किमुतान्यत् ? रुजाकरी पीड़ाहेतुः। सेयमेकान्तसुकुमारदेहा देवी हुताशनवतीमनलज्वालाकरालां चितां चितिमन्तशय्यां कथं नामाधिशेते ? तस्य मार्दवस्य किमिदं शयनम् ? हा दग्धदैव ! किमिदं व्यवसितं त्वया इति ॥

कतमोऽयं रस इति प्रकटयति—

इति कारुण्यमुद्रिक्तमलङ्कारतया स्मृतम् ।
तथापरेऽपि बीभत्सहास्याद्भुतभयानकाः ॥२८५॥

इति कथितेन [पथा] यथा कारुण्यं शोको भावविशेषः कारुण्याख्यरसविशेषाश्रयः उद्रिक्तमभिव्यक्तमोगतं करुणरसात्मना वर्तमानमलङ्कारतया काव्यभूषणत्वेन स्मृतम् इष्टं तज्ज्ञैरिति । तथेत्यादि। यथा रतिक्रोधोत्साहशोकोद्रेकरूपाश्च[78b]त्वारो [शृङ्गार]रौद्रवीरकरुणा रसा निदर्शितास्तथाऽपरे शेषाश्चत्वारो जुगुप्साहासविस्मयभयभावोद्भावस्वभावाः, बीभत्सश्च हास्यश्च अद्भुतश्च भयानकश्चेति बीभत्सहास्याद्भुतभयानका रसा निदर्श्यन्त इति शेषः ॥

पायं पायं तवारीणां शोणितं पाणिसम्पुटैः ।
कौणपाः सह नृत्यन्ति कबन्धैरन्त्रभूषणाः ॥२८६॥

देव ! तवारीणां त्वत्कृपाणकृतान्तपीतजीवितानां शोणितं रक्तं पाणिसम्पुटैः अञ्जलिभिः पायं पायमभीक्ष्णं पीत्वा मत्ताः कौणपाः राक्षसा अन्त्राणि भूषणानि रक्तकुसुमदामायमानानि येषामित्यन्त्रभूषणाः कबन्धैः विशिरोभिः शरीरैः सह

तवारीणामित्यपेक्षणीयम्। नृत्यन्ति [इति] उत्प्रेक्षा, तेषामपि नृत्ययोगात्। अत्र जुगुप्साख्यो भावः तादृशविभावजनितः, अनुभावेन तद्रूपेणाभिव्यक्तः। विकृतरूप-बीभत्सरसस्वभावतामनुभवन्नलङ्कारत्वेनेष्ट इति द्रष्टव्यम् ॥

इदमम्लानमालाया लग्नं स्तनतटे तव।
छाद्यतामुत्तरीयेण नवं नखपदं सखि ॥२८७॥

सखि! तवाद्यापि अम्लाना प्रत्यग्रा परिणयोत्सवनिवेशिता माला कुसुमदामानि यस्या इत्यम्लानमालायाः। अन्ये तु पुरुषायितपरिश्रमेण म्लानमालत्वेऽपि अम्लान-मालाया इति विशेषणमुपहासपरम् इति व्याचक्षते। स्तनस्य तटे प्रदेशे लग्नं व्यवस्थितं नखपदमिदं दृश्यमानं मयूरपदकशशप्लुतकादिरूपं[1] नवमभिनवमार्द्रं छायतां संव्रियतामुत्तरीयेण संव्यानेन। किमेवमतित्वरितम्। आनन्दिताः सखि! वयम्। साधु कृतम्। अत्रानुचितार्थदर्शनविभावात् कृतो हासाख्यो भावः समुद्रिक्तरूपो हास्यरसतामागतः। काव्यशोभाकरमिदं विज्ञेयम् ॥

अंशुकानि प्रवालानि पुष्पं हारादिभूषणम्।
शाखाश्च मन्दिराण्येषां चित्रं नन्दनशाखिनाम् ॥२८८॥

एषां नन्दने उद्याने शाखिनाम् अंशुकानि वस्त्राणि प्रवालानि पल्लवानि हारादि च भूषणमलङ्कारः पुष्पम्। आदिशब्देनाङ्गदकुण्डलादिपरिग्रहः। शाखाश्च विचित्र-संनिवेशविशेषाः। मन्दिराणि प्रासादाः। [अ]हो चित्रमिदमपूर्वमिदं दृष्टम्! इह विस्मयो नाम भावः परिस्फुटीभूतोऽद्भुतरसतामासेवत इति वेदितव्यम् ॥

इदं मघोनः कुलिशं धारासन्निहितानलम्।
स्मरणं यस्य दैत्यस्त्रीगर्भपाताय कल्पते ॥२८९॥

मघोनः शक्रस्य कुलिशं वज्रमिदं दृश्यते। धारासु कोटिषु सन्निहितो व्यवस्थितोऽनलोऽग्निरस्येति धारासन्नि[79a]हितानलम्। यस्य कुलिशस्य स्मरणं किमु दर्शनम्? दैत्यानामसुराणामन्तर्वल्न्यो याः स्त्रियस्तासामतिभयग्रस्तानां गर्भाणां पाताय नाशार्थं कल्पते सम्पद्यते। यस्य स्मरणादप्यसुरस्त्रीणां गर्भाः पतन्ति तदिदं कुलिशमिति

---

1. वात्स्यायनीये कामसूत्रे २. ४. १९-२०



प्रकृतम्। अत्र भयाख्यो भावः समुद्भूतो भयानकरसरूपेण तिष्ठन्नलङ्कारः स्मृत इत्यवसेयम् ॥

नन्वियं रसवत्ता प्रागेव माधुर्यप्रस्तावे दर्शिता। तत् किं पुनरुच्यत इति चेदाह—

वाच्यस्याग्राम्यतायोनिर्माधुर्ये दर्शितो रसः।
इह त्वष्टरसायत्ता रसवत्ता स्मृता गिराम् ॥२९०॥

वाच्यस्य काव्याधेयवस्तुनः सम्बन्धिनी सा ग्राम्यता असभ्यता योनिः प्रभवः अस्येति अग्राम्यतायोनिः। गमकत्वाद्वाच्यस्येति सापेक्षत्वेऽपि समस्यते। रसोऽर्थरसः। माधुर्ये शब्दार्थसाधारणे विभज्यमाने दर्शितः कामं सर्वोऽप्यलङ्कार [१.६२] इत्या-दिना। इह तु रसवदलङ्कारेऽष्टौ यथोक्ता रसास्तेष्वायत्ता प्रतिबद्धा रसवत्ता रस-योगिता अष्टरसा इति यावत्। गिरां काव्यानां सम्बन्धिनः स्मृता अभिमता इति।

रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा।
जुगुप्सा विस्मयश्चेति स्थायिभावाः प्रकीर्तिताः ॥
[नाट्यशास्त्रे ६. १८]

शृङ्गारहास्यकरुणा रौद्रवीरभयानकाः।
बीभत्साद्भुतसंज्ञौ चेत्यष्टौ नाट्यरसाः स्मृताः ॥
[नाट्यशास्त्रे ६. १६]

इति भावरससंग्रहश्लोकाविति ॥

॥ इति रसवच्चक्रम् ॥

ऊर्जस्वि निदर्शयन्नाह—

अपकर्ताहमस्मीति हृदि ते मा स्म भूद्भयम्।
विमुखेषु न मे खड्गः प्रहर्तुं जातु वाञ्छति ॥२९१॥

अहमस्यापकर्ता प्रतिकूलवर्ती प्राप्तश्चेदानीमनेनास्मि भवामीति हेतोस्ते तव हृदि चित्ते भयं त्रासो मृतोऽस्मीति मा स्म भूत् मा भैषीः। न त्वां हन्मि। नहि जातु

कदाचिदपि मे मम खड्गो विमुखेषु समरनिरपेक्षेषु अप्रतिप्रहरत्सु अप्रहर्तृषु क्रमितुं वाञ्छति । नास्त्यस्येदृशी स्थितिः यद्विमुखेषु प्रहरतीति ॥

तद्विवृणोति—

इति मुक्तः परो युद्धे निरुद्धो दर्पशालिना ।
पुंसा केनापि तज्ज्ञेयमूर्जस्वीत्येवमादिकम् ॥२९२॥

इत्यनन्तरोक्तेन क्रमेण पुंसा केनापि केनचित् अनिर्दिष्टगोत्रनामधेयेन दर्पशालिना सौटीर्यसम्बन्धितेन युद्धे निरुद्धः प्राप्तः परः शत्रुः मुक्तस्त्यक्तो न हतः । यदीदृशं वचनं तदेवमादिकमन्यदपि तादृशम्—

प्राणा[न्] जुहोमि युद्धाग्नौ यद्यरातिर्ममोर्जितः ।
न सीतार्पणकार्पण्यम्लानः प्राणिमि रावणः ॥

[79b] इत्याद्यूर्जस्वीत्यवज्ञेयमवगन्तव्यमिति ॥

॥ इति ऊर्जस्वि ॥

अर्थमिष्टमनाख्याय साक्षात्तस्यैव सिद्धये ।
यत्प्रकारान्तराख्यानं पर्यायोक्तं तदीदृशम् ॥२९३॥

इष्टमभिमतमर्थं कञ्चित्प्रियसमागमादिलक्षणं साक्षादञ्जसा वाचकव्यापारेण अनाख्याय अप्रतिपाद्य तस्यैवेष्टस्यार्थस्य सिद्धये निष्पत्त्यर्थं प्रकारान्तरस्य तत्सिद्ध्यनुगुणस्य अन्यस्यार्थस्याख्यानम् आख्यायतेऽनेनेति वाक्यं तादृशम् इति अनूद्य तदीदृशं वचनं पर्यायोक्तमिष्टं मनीषिभिरिति विधिः ॥

तदुदाहरति—

दशत्यसौ परभृतः सहकारस्य मञ्जरीम् ।
तमहं वारयिष्यामि युवाभ्यां स्वैरमास्यताम् ॥२९४॥

परभृतः कोकिलोऽसावयं सहकारस्य सम्बन्धिनीं मञ्जरीं कलिकां दशति भिनत्ति । तमहं परभृतं वारयिष्यामि गत्वा; युवाभ्यां दम्पतीभ्यां स्वैरं स्वतन्त्रम्



आस्यतां स्थीयताम् । अलं मदपेक्षयेति ॥

तद् व्याचष्टे—

सङ्गमय्य सखीं यूना सङ्केते तद्रतोत्सवम् ।
निर्वर्तयितुमिच्छन्त्या कयाप्यपसृतं तथा ॥२९५॥

सङ्केते कृतसंविदि कस्मिंश्चित् स्थाने सखीमात्मनो यूना केनचित् सह सङ्गमय्य सङ्गतां कृत्वा तयो रतोत्सवं रहो निर्वर्तयितुं साधयितुमिच्छन्त्या कयापि कयाचिद् विदग्धया सख्या तथा अनन्तरोक्तेन प्रकारेण परभृतवारणव्यपदेशेनापसृतं ततः सङ्केतादिति ॥

॥ इति पर्यायोक्तम् ॥

समाहितमालक्षयन्नाह—

किञ्चिदारभमाणस्य कार्यं दैववशात् पुनः ।
तत्साधनसमापत्तिर्या तदाहुः समाहितम् ॥२९६॥

किञ्चित्कार्यं प्रसादनादिकमारभमाणस्य साधयितुं सज्जीभूतस्य पुंसो दैववशात् विधिबलात् कारणात् न तु स्वसामर्थ्यात् । तस्य सिषाधयिषितस्य कार्यस्य साधनं साध्यते अनेनेति तस्य पुनरपरस्य प्रत्ययस्य कस्यचित्समापत्तिः सन्निधानं या तदेवंलक्षणं समाहितमाहुः ब्रुवते कवय इति ॥

तदुदाहरति—

मानमस्या निराकर्तुं पादयोर्मे नमस्यतः ।
उपकाराय दिष्ट्यैतदुदीर्णं घनगर्जितम् ॥२९७॥

अस्याः प्रियाया मानं प्रतिकूलवर्तितां निराकर्तुं पादयोरेनामस्या वा नमस्यतः नमतो मे ममोपकाराय आरब्धकार्यानुग्रहार्थं घनस्य मेघस्य गर्जितं मन्मथनिर्भर्त्सितमिव मानिनीमानदुःसहमुदीर्णम् उदितं दिष्ट्येत्यानन्दनिवेदनमिष्टसिद्धेः । इह मान-

निराकरणं कार्यमारब्धम्, तत्र विधिवशाद् घनगर्जितमपरं साधनं च समापन्नमिति लक्षणं योज्यम् ॥

॥ इति समाहितम् ॥

उदात्तमादर्शयन्नाह—

आशयस्य विभूतेर्वा यन्महत्त्वमनुत्तरम् ।
उदात्तं नाम तं प्राहुरलङ्कारं मनीषिणः ॥२९८॥

आशयस्याभिप्रायस्य कस्यचिद्विभूतेः सम्पदो वा यन्महत्वमौदार्यमनुत्तरं नास्मादुत्तरमधिकमस्ति प्रकर्ष[80a]निष्ठाधिष्ठानत्वादिति । तमलङ्कारं निरतिशयोदात्तत्वप्रकाशनरूपमुदात्तं नाम प्राहुर्मनीषिणः कवय इति ॥

गुरोः शासमत्येतुं न शशाक स राघवः ।
यो रावणशिरश्छेदकार्यभारेऽप्यविक्लवः ॥२९९॥

गुरोः पितुर्दशरथस्य शासनं राज्यमिदं मया भरताय दत्तं त्वया वनमावस्तव्यमित्याज्ञामत्येतुं लङ्घितुं न शशाक न समर्थोऽभूत् विनयपरवशतया स राघवो रामः । किमसावित्थमकिञ्चित्करो यत् स्वभाव्यं राज्यमन्यस्मै दीयमानमात्मानं च वने क्षिप्यमाणमपेक्षते ? नैवम् । गुरुभक्तिः कापि सा तस्येत्याह– य इत्यादि । यो राघवः रावणस्य दशकन्धरस्य राक्षसराजस्य दासीकृतत्रैलोक्यस्य शिरसां छेदः कार्यं त्रैलोक्यार्थमनुष्ठेयत्वात् तदेव भारोऽतिदुर्वहत्वात् । तत्रापि किम् ? पुनरात्मविपक्षनिग्रहमात्रेऽविक्लवः शक्तः स तादृशः गुरोराज्ञां नातिचक्रामेत्याशयमाहात्म्यं विनयोत्कर्षराज्यलोभानभिभवादिलक्षणमालक्षयत इति ॥

रत्नभित्तिषु संक्रान्तैः प्रतिबिम्बशतैर्वृतः ।
ज्ञातो लङ्केश्वरः कृच्छ्रादाञ्जनेयेन तत्त्वतः ॥३००॥

पद्मरागादिरत्नविकारा भित्तयः कुड्यानि रत्नभित्तयस्तासु संक्रान्तैरुदितैः प्रतिबिम्बानां प्रतिशरीराणां शतैर्वृतः परिक्षिप्तो लङ्केश्वरो [रा]वणः आञ्जनेयेन हनूमता सीतान्वेषणार्थं तत्र गतेनायं रावणः, प्रतिबिम्बान्येतानीति तत्त्वतः सम्यग् ज्ञातो



निर्धारितः कृच्छ्रात्प्रयत्नेन निपुणं निरूपयता न झटित्येवेति भूतिमहत्त्वमनतिशयमुक्तं गृहाण्यपि रत्नमयानि इति ॥

तदुभयं विवृण्वन्नाह—

पूर्वत्राशयमाहात्म्यमत्राभ्युदयगौरवम् ।
सुव्यञ्जितमिति व्यक्तमुदात्तद्वयमप्यदः ॥३०१॥

पूर्वत्र गुरोरित्यादौ प्रयोगे आशयस्य चित्तस्य माहात्म्यमत्युदात्तत्वमुक्तरूपम् । अत्रा[न]न्तरे रत्नभित्तिष्वित्यादौ अभ्युदयस्य विभूतेर्गौरवं माहात्म्यमुक्तरूपं सुव्यञ्जितमाख्यातमितीदृशमिति वा हेतोरदस्तदुदात्तयोर्द्वयमपि नैकम्। आशयोपात्तं च व्यक्तं परिस्फुटमभवदिति ॥

॥ इत्युदात्तम् ॥

अपह्नुतिमधिकृत्याह—

अपह्नुतिरपह्नुत्य किञ्चिदन्यार्थदर्शनम् ।
न पञ्चेषुः स्मरस्तस्य सहस्रं पत्रिणामिति ॥३०२॥

किञ्चिद्वस्तुरूपमपह्नुत्य निराकृत्य नेदमिति, अन्यस्यार्थस्य धर्मरूपस्य वा दर्शनं विधानं यदित्यनूद्य सापह्नुतिरित्यभिधीयते । तामुदाहरति– [80b] स्मरः कामः पञ्चेषवोऽस्येति पञ्चेषुर्न भवतीति । इषूणां पञ्चत्वं धर्मोऽत्रापह्नूयते । न स्मर इषवो वा । यदाह– तस्य स्मरस्य पत्रिणामिषूणां सम्बन्धि सहस्रं सहस्रसंख्यता । अन्यथा कथं भुवनत्रयं जयेदिति । अन्यस्य सहस्रसंख्यालक्षणस्यार्थस्य धर्मान्तरस्य दर्शनमितीदृशी धर्मापह्नतिरवसेयेति ॥

चन्दनं चन्द्रिका मन्दो गन्धवाही च दक्षिणः ।
सेयमग्निमयी सृष्टिः शीता किल परान् प्रति ॥३०३॥

चन्दनं मलयजं चन्द्रिका ज्योत्स्ना मन्दो मृदुर्गन्धवाही पवनो दक्षिण इति यदेतत् सेयमीदृशी सृष्टिः स्रष्टुरग्निमयी दहनस्वभावा अस्माकम् [कृते] । परान् प्रति

अन्येषां किलेयं सृष्टिः शीताह्लादकरी । किलशब्देन¹ श्रुतगम्यतां शीततायाः सूचयति । दुष्टताया एवानुभवगम्यत्वात् । विरहविप्लुतचित्तः कश्चित्कामुकः कथयतीति ॥

केयमपह्नुतिरित्याह—

शैशिर्यमभ्युपेत्यैव परेष्वात्मनि कामिना ।
औष्ण्यप्रदर्शनात्तस्य सैषा विषयनिह्नुतिः ॥३०४॥

तस्य चन्दनादेर्वस्तुनः परेष्वन्येषु स्वस्थेषु विषये शैशिर्यं शैत्यमभ्युपेत्याग्निकृत्यापह्नुत्या एवात्मनि विषये केनचित् कामिना वियुक्तेन औष्ण्यस्य चन्दनादिगतस्य प्रदर्शनादुद्भावनात्कारणात् सैषा तादृशी विषयापह्नुतिः । विषये क्वचिद्वस्तुरूपापह्नुतेः, न सर्वत्रेति ॥

अमृतस्यन्दिकिरणश्चन्द्रमा नाम नो मतः ।
अन्य एवायमर्थात्मा विषनिष्यन्दिदीधितिः ॥३०५॥

अमृतं सुधा स्यन्दन्ते स्रवन्तीत्यमृतस्यन्दिनः किरणाः अस्येति अमृतस्यन्दिकिरणः पदार्थविशेषश्चन्द्रमा नाम नोऽस्माकं मतः प्रसिद्धः । अयं तु अन्य एवार्थात्मा पदार्थः । कुतः ? विषममृतविरुद्धं निष्यन्दमानाः क्षरन्त्यो दीधितयः किरणा अस्येति विषनिष्यन्दिनो दीधितयो यतस्तस्मात्कथमयं चन्द्रस्तद्विरुद्धलक्षण इति कश्चिद्विरही विप्लवत इति ॥

इयं कतमापह्नुतिरित्याह—

इति चन्द्रत्वमेवेन्दोर्निवर्त्यार्थान्तरात्मना ।
उक्तः स्मरार्तेनेत्येष स्वरूपापह्नुतिर्मता ॥३०६॥

इत्युक्तेन विधिना इन्दोश्चन्द्रत्वममृतमयत्वं स्वरूपं निवर्त्यापह्नुत्यार्थान्तरात्मना विषरूपेणोक्तः उद्भावित इन्दुः । उक्तमित्यपि पाठः । तत्र चन्द्रत्वमुक्तं स्वरूपेण निवर्त्य रूपान्तरेणोक्तमिति योज्यम् । स्मरार्तेन कामातुरेण विरहिणा केनचिदिति हेतोः स्वरूपापह्नुतिरेषा [मता] ज्ञेया, चन्द्रस्वरूपस्या[81a]पह्नुतेरिति ॥

१. मयि शीतेति मुद्रितपुस्तकेषु । शीता किलेति रत्नश्रियः । एष एव वादिजङ्घालाभिमतः पाठः ।



ननूपमापह्नुतिरिह संगृहीता । सा हि कथञ्चिदन्तर्भूतोपमेष्यते । यदाहुः—

अपह्नुतिरभीष्टा च किञ्चिदन्तर्गतोपमा ।
भूतार्थापह्नवादेषा क्रियते साभिधा यथा ॥

[ काव्यालङ्कारे ३. २१ ]

लक्ष्यं चेदं दत्तम् ।

नेयं विरौति भृङ्गाली मदेन मुखरा मुहुः ।
अयमाकृष्यमाणस्य कामस्य धनुषो ध्वनिः ॥ इति ।

[ काव्यालङ्कारे ३. २२ ]

इदं त्वनीदृशमपह्नुतिलक्षणमित्याशङ्क्याह—

उपमापह्नुतिः पूर्वमुपमास्वेव दर्शिता ।
इत्यपह्नुतिभेदानां लक्ष्यो लक्ष्येषु विस्तरः ॥३०७॥

उपमापह्नुतिरीदृशी पूर्वमुपमाविकल्पेष्वेव दर्शिता अन्तर्भाविता ।

न जातु शक्तिरिन्दोस्ते मुखेन प्रतिगर्जितुम् ।
कलङ्किनो जडस्येति प्रतिषेधोपमैव सा ॥

[ २. ३४ ]

इति संगृहीता । तत्रास्याः पृथग्लक्षणं लक्ष्यं चोच्यते । इति कथितपथानुसारेण अपह्नुतेर्भेदानां विकल्पानां विस्तरः प्रपञ्चो लक्ष्यो द्रष्टव्यः । लक्ष्येषु प्रयोगेषु सर्गबन्धादिषु स्वयं चैते प्रयोक्तव्याः । तद्यथा—

जगदेतत् प्रियासर्वं न जगन्नाम किञ्चन ।
तथापि चित्तसन्तोषं नासादयसि न प्रियाम् ॥

सर्वापह्नुतिः ।

प्रिया नैवेयमन्यैव काचिदाभाति भामिनी ।
न हि सा निरनुक्रोशमेवं निरनुषेवते ॥

हेत्वपह्नुतिः ।

न स्तनद्वयमेनत्ते भारः कोऽप्येप दुर्वहः ।
कथं प्राणिमि तन्वङ्गि ! भृशमेनेन ताम्यसि ॥

चटुप्रधानापह्नुतिः ।

एवमन्येऽप्यपह्नुतिभेदाः कल्पनीया इति ॥

॥ इत्यपह्नुतिः ॥

क्रमप्राप्तं शिलष्टं लक्षयति—

शिलष्टमिष्टमनेकार्थमेकरूपान्वितं वचः ।
तदभिन्नपदं भिन्नपदप्रायमिति द्विधा ॥३०८॥

यद् वचो वचनमनेको भिन्नोऽर्थोऽभिधेयं यस्येत्यनेकार्थम् । एकेन समानेन रूपेण शब्दस्वभावेन अन्वितं युक्तं सरूपम् इत्यनूद्य शिलष्टं तदिष्टं स्मर्यत इति विधीयते । तच्चैवं लक्षणं शिलष्टं द्विधा प्रकारद्वयेन भिद्यते । कथम् ? अभिन्नमेकं पदं सुबन्ततिङन्तरूपं यत्र तदभिन्नपदमविकृतशब्दं भिन्नमनेकम्, पदं भङ्गेन योजनात्, प्रायमधिकं यत्र तद् भिन्नपदप्रायम् । तेन वा प्रायमधिकं किञ्चिदभिन्नमिति प्रायोग्रहणेन सूचयति । अनेन रूपेण द्विधेति प्रकृतम् ॥

उदाहरन्नाह—

असावुदयमारूढः कान्तिमान् रक्तमण्डलः ।
राजा हरति लोकस्य हृदयं मृदुभिः करैः ॥३०९॥

असावयं राजा चन्द्रो नृपतिश्च । तत्र चन्द्रस्तावदुदयं पर्वतमारूढः । नृपतिस्तूदयमभ्युदयं राज्यरूपमारूढः प्राप्तः । चन्द्रः कान्तिमान् सौम्यः । नृपतिः कान्तिमानभिरूपः । चन्द्रो रक्तमरुणमुद[81b]यावस्थाभावित्वान्मण्डलं बिम्बमस्येति रक्तमण्डलः । नृपतिस्तु रक्तमनुरक्तं स्निग्धं मण्डलममात्यादिप्रकृतिवृन्दं यस्येति रक्तमण्डलः । लोकस्य हृदयं जनस्य मनः प्रीतियोगेन हरति रञ्जयति । चन्द्रो मृदुभिः शीतैः करैः किरणैर्हरति । नृपतिस्तु मृदुभिरनुद्वेजनीयैः करैरुचितषड्भागादिस्वभावैः हरति । इति शिलष्टमभिन्नपदं भङ्गेन विना यथावस्थानमुभयत्र पदयोजनादिति ॥



दोपाकरेण सम्बध्नन्नक्षत्रपथवर्तिना ।
राज्ञा प्रदोपो मामित्थमप्रियं किं न बाधते ॥३१०॥

प्रदोपो रजनीमुखम, प्रकृष्टोऽधिको दोपो लोभादिरस्येति प्रदोपश्च कश्चित् पुरुपो विवक्षितः । दोषा रात्रिराकर आश्रयस्तत्र दर्शनात् । यस्य दोषाकर इति तत्सन्निधौ दृष्टेः, दोषाकरेण चन्द्रेण, दोपाणां क्रौर्यादीनामाकरः स्थानं तेन नृपेण । नक्षत्रपथे व्योम्नि वर्तते नक्षत्रपथवर्तिना चन्द्रेण, क्षत्रस्य पन्थाः क्षत्रपथः क्षात्रो धर्मः शिष्टपालनदुष्टनिग्रहादिरूपः, न तथाऽक्षत्रपथस्तद्वर्तिना राजधर्मातिक्रमिणा नृपेण संबध्नन् सङ्गच्छमानः । मामित्थमनेन प्रकारेण अप्रियं न विद्यते प्रियाऽस्येति विरहिणं प्रदोषः क्षणदावतारः । किं कस्मात् न बाधते न तापयति ? बाधत एव । अप्रियं न प्रियमप्रियं द्वेष्यं किं न बाधते नापकरोति ? निगृह्णात्येव प्रदोषः प्रकृष्टदोषः पुरुषः कश्चित् । इदं भिन्नपदप्रायं शिलष्टमुक्तेन विधिना प्रदोष इत्यादीनां भिन्नत्वाद् राज्ञा इत्यस्याभेदादिति ॥

अलङ्कारान्तरगोचरः श्लेपोऽपि । स प्रागुक्त इति दर्शयन्नाह—

उपमारूपकाक्षेपव्यतिरेकादिगोचराः ।
प्रागेव दर्शिताः श्लेषा दर्श्यन्ते केचनापरे ॥३११॥

उपमा रूपकमाक्षेपः व्यतिरेकश्चादिर्यस्य दीपकार्थान्तरन्यासादेः स गोचरो विषयो येषां ते श्लेषाः प्रागेवोपमाप्रस्तावादिषु दर्शिताः । ततः सम्प्रति नोच्यन्ते । तत्रोपमागोचरः श्लेपः शिशिरांशुप्रतिद्वन्द्वीत्यादिना [२.२८] दर्शितः । रूपकोपन्नः राजहंसोपभोगार्हमित्यादिना [२.८७] । आक्षेपविपयः अमृतात्मनि पद्मानामित्यादिना [२.१५६] । व्यतिरेकाश्रयः त्वं समुद्रश्च दुर्वारावित्यादिना [२.१८३] । दीपकाधिकरणो हृद्यगन्धवहा इत्यादिना[२.११३] । एवमन्येऽप्यर्थान्तरन्यासादिगोचरा द्रष्टव्याः । ये तु पूर्वं नोक्तास्ते अपरेऽन्ये केचन कियन्तो निदर्श्यन्ते प्रतिपाद्यन्त इति ॥

के पुनस्त इति दर्शयन्नाह—

अस्त्यभिन्नक्रियः कश्चिदविरुद्धक्रियोऽपरः ।
विरुद्धकर्मा चास्त्यन्यः श्लेपो नियमवानपि ॥३१२॥

अभिन्ना एका क्रिया यत्र स तादृशः कश्चिदस्ति श्लेषः। अविरुद्धे सहभाविन्यौ क्रिये यस्मिन् स तद्रूपोऽपरोऽन्यः कश्चिदस्ति। विरुद्धे कर्मणी क्रिये यत्र स चान्यः कश्चिदस्ति। श्लेष इति सर्वत्र सम्बध्यते। नियमोऽवधारणमस्मिन्नस्तीति नियमवानपि विद्यते कश्चित्॥

नियमाक्षेपरूपोक्तिरविरोधी विरोध्यपि।
तेषां निदर्शनेष्वेव रूपव्यक्तिर्भविष्यति॥३१३॥

नियमस्याक्षेपो निषेधो रूपं स्वभावो यस्यां तथाविधोक्तिरभिधानं यत्र तादृशोऽप्यस्ति कश्चित्। नात्र विरोधोऽस्तीत्यविरोधी। सोऽप्यस्ति। विरोधोऽसङ्गतिरत्र विद्यत इति विरोधी। सोऽप्यस्ति। नामसङ्कीर्तनमात्रेण न ज्ञायन्त इत्याह– तेषां श्लेषाणामभिन्नक्रियादीनां निदर्शनेषु लक्ष्येष्वेव नाभिधानमात्रेण रूपस्य प्रतिनियतस्य लक्षणस्य व्यक्तिः प्रत्यवगमो भविष्यति। ततो यथाक्रमं निदर्श्यन्त इति॥

स्वभावमधुराः स्निग्धाः शंसन्त्यो रागमुल्बणम्।
दृशो दूत्यश्च कर्षन्ति कान्ताभिः प्रेषिताः प्रियम्॥३१४॥

कान्ताभिर्नायिकाभिः वासकशय्याभिः प्रेषिताः प्रयुक्ता दृशो दृष्टयो दूत्यश्च निसृष्टार्थादय[:] स्वभावेनैव मधुराः सुभगा उभय्योऽपि स्निग्धाः। प्रेमरसभाविता दृशः दूत्यस्त्वपरुषाः। रागं भावमुल्बणमुदीर्णमन्तर्गतमाकारविशेषेण शंसन्त्यः सूचयन्त्यो दृशः। दूत्यस्तु रागमुल्बणं नायिकानुरक्तिमधिकां चतुरमाचक्षाणाः कर्षन्ति वशीकुर्वन्ति प्रियं वल्लभम्, यत्र प्रेषिताः। अयमभिन्नक्रियः श्लेषः, कर्षणलक्षणयैकया क्रियया दृशां दूतीनां च सम्बन्धादिति॥

मधुरा रागवर्धिन्यः कोमलाः कोकिलागिरः।
आकर्ण्यन्ते मदकलाः श्लिष्यन्ते चासितेक्षणाः॥३१५॥

असितेक्षणाः स्त्रियः कोकिलानां गिरश्च वाचः। मधुराः मनोहराः द्वय्योऽपि। रागं रक्तिभावं वर्धयन्ति रागवर्धिन्यः उभय्योऽपि। कोमलाः कोकिलागिरः श्रवणानुद्वेजनीयत्वात्, असितेक्षणास्तु सुखस्पर्शत्वात्। कोकिलागिरो मदेन समयकृतेन हर्षविशेषेण कलाः पुष्टाः। असितेक्षणास्तु मदेन मधुपानजनितेन कलाः विह्वलाः।



कोकिलागिर आकर्ण्यन्ते श्रूयन्ते। असितेक्षणास्तु श्लिष्यन्ते आलिङ्ग्यन्ते। [82b]
अयमविरुद्धक्रियः श्लेषः, आकर्णनश्लेषणयोः सहभावादिति॥

रागमादर्शयन्नेष वारुणीयोगवर्धितम्।
पराभवति घर्मांशुरङ्गजस्तु विजृम्भते॥३१६॥

एष घर्मांशुरादित्यः पराभवत्यस्तमेति। अङ्गजस्तु कामो विजृम्भते समुद्भवति। वारुण्या प्रतीच्या दिशा योगेन सङ्गमेन वर्धितमुपबृंहितं रागमरुणिमानम् आदर्शयन् घर्मांशुः पराभवतीति प्रकृतम्। अङ्गजस्तु वारुण्या मदिरया योगेन पानलक्षणेन वर्धितं रागं रतिभावमादर्शयन् विभ्रमैराविष्कुर्वन् विजृम्भत इति प्रक्रान्तम्। अयं विरुद्धक्रियः श्लेषः, पराभवविजृम्भणयोरस्तमयोदयरूपयोः परस्परविरोधात् इति॥

निस्त्रिंशत्वमसावेव धनुष्येवास्य वक्रता।
शरेष्वेव नरेन्द्रस्य मार्गणत्वं च वर्तते॥३१७॥

अस्य नरेन्द्रस्य कस्यचिन्निस्त्रिंशत्वम् असौ खड्ग एव वर्तते न म[न]सि निस्त्रिंशत्वम्। असित्वं क्रौर्यं चेति श्लिष्टम्। धनुष्येव वक्रता। न चेतसि वक्रता। नतत्वं शाठ्यं चेति श्लिष्टिः। शरेषु बाणेष्वेव मार्गणत्वं नात्मनि। मार्गणत्वं शरत्वं याचकत्वं चेति श्लिष्यते। अयं नियमवान् श्लेषः। असावेवेत्यवधारणप्रयोगादिति॥

पद्मानामेव दण्डेषु कण्टकस्त्वयि रक्षति।
अथवा दृश्यते रागिमिथुनालिङ्गनेष्वपि॥३१८॥

देव! त्वयि रक्षति जगतीं पद्मानां [एव] दण्डेषु नालेषु कण्टको दृश्यते, न राज्ये। कण्टकः कार्कश्यलक्षणः, पद्मदण्डेषु राजविपक्षश्चेति श्लिष्टत्वात्। अयं नियम आक्षिप्यते। अथवा कथम् नियम्यते? यतो रागिणां वा मिथुनानि स्त्रीपुंसयुग्मलक्षणानि तेषामन्योन्यालिङ्गनेष्वपि विषये[षु] कण्टकः रागजनितपुलकरूपो दृश्यते। तत्कथमेवमवधार्यत इति नियमाक्षेपरूपोक्तिरयं श्लेष इति॥

महीभृद्भूरिकटकस्तेजस्वी नियतोदयः।
दक्षः प्रजापतिश्चासीत् स्वामी शक्तिधरश्च सः॥३१९॥

स विवक्षितः कश्चिन्महीभृत्पर्वतः राजा च, भूरयो महान्तः कटकाः सानवो यस्य पर्वतस्य। भूरिर्विशालः कटकः स्कन्धावारः हस्ताभरणविशेषो वा यस्य स भूरिकटको राजा। तेजस्वी रविः प्रभावविशेषयुक्तश्च नियतः प्रतिदिनमुदयः प्रभावलक्षणो यस्य स नियतोदयो रविः, नियतः स्थिरः उदयो राज्यरूपो यस्य स नियतोदयो राजा। दक्षो नाम प्रजापतिर्विधाता कश्चित। राजा च दक्षः शूरः प्रजानां लोकानां च [83a] पतिः अधिपः स्वामी कार्त्तिकेयः प्रभुश्च, शक्तिः आयुधविशेषः तां धारयतीति शक्तिधरः स्कन्दः। शक्तिमुत्साहमन्त्रप्रभावरूपां धारयतीति शक्तिधरो राजा। आसीदभूत्। अयमविरोधी श्लेषः। महीभृद्भूरिकटकत्वादीनामुभयत्राप्यव्याहतेरिति॥

अच्युतोऽप्यवृषोच्छेदी राजाप्यविदितक्षयः।
देवोऽप्यविबुधो जज्ञे शङ्करोऽप्यभूजङ्गवान्॥३२०॥

अच्युतो विष्णुः, न्यायभ्रंशाभावात्। स्थिरश्च। तत्र यदाऽच्युतो विष्णुस्तदा वृषस्य वृषभस्य अरिष्टनाम्नस्तेनोच्छेदाद् अवृषोच्छेदित्वं विरुद्धम्। पक्षान्तरे तु अविरुद्धम्, वृषस्य धर्मस्य राज्ञा अनुच्छेदात्। राजा चन्द्रः, नृपश्च। तत्र चन्द्रस्य अविदितः क्षयोऽनेनेत्यविदितक्षयत्वं विरुद्धम्, दक्षशापेन कृष्णपक्षे क्षीयमाणत्वात्। पक्षान्तरे तु राज्यापचयाभावादव्याघातः। देवो गतिर्देवो विबुधः। सम्मतिर्देवश्च राजा। तत्र गतिर्देवः कथमविबुधः, असुर इति विरुध्यते। सम्मतिर्देवस्तु राजा, विबुधाः पण्डिता विगता यतः। न तथा अविबुधः बुधयुक्तः पण्डितमण्डलमण्डितास्थानमण्डपः। शङ्करस्त्रिलोचनः, शान्तिकरश्च। तत्र त्रिनेत्रः फणिधरनद्धजटाजूटः सारसनीकृतनागः कुण्डलीकृतपन्नगः कथमभुजङ्गवान् इति विरोधः। राजा तु धूर्तसंसर्गाभावाद् अभुजङ्गवानिति युज्यते। जज्ञे विदितः क्रियाविदित इति सर्वत्र सम्बन्धनीयम्। अयं विरोधी श्लेष उदाहृतः॥

॥ इति श्लेषचक्रम् ॥

विशेषोक्तिमाविष्कुर्वन्नाह—

गुणजातिक्रियादीनां यत्तु वैकल्यदर्शनम्।
विशेषदर्शनायैव सा विशेषोक्तिरिष्यते॥३२१॥



गुणश्च जातिश्च क्रिया च आदिशब्देन द्रव्यपरिग्रहः। तेषां वैकल्यस्याभावस्य दर्शनं वचनं यत्तत्। किमर्थम्? विशेषस्यातिशयस्य कस्यचित्कार्यविषयस्य दर्शनाय प्रतिपादनार्थमेव। अत एव विशेषपरत्वात् सा तल्लक्षणा विशेषोक्तिरिष्यते मनीषिभिरिति॥

तामुदाहरन्नाह—

न कठोरं न वा तीक्ष्णमायुधं पुष्पधन्वनः।
तथापि जितमेवासीदमुना भुवनत्रयम्॥३२२॥

पुष्पधन्वनः कामस्यायुधं कुसुम[म]न्यद्वा तादृशं न कठोरं न कठिनम् न च अतितीक्ष्णं न च निशातं यथान्यत्, आयुधमयोमयं तेजितं खड्गादि तथाप्येवमपीति। विशेषविवक्षायाम्। यदाह– अमुना पुष्पधन्वना आयुधेन वा भुवनानां स्वर्गादीनां त्रयं कृत्स्नं जगत् जितमाक्रान्तमेव नाजितमपि आसीदभवत्। [83b] अहो चित्रम्! इह काठिन्यतैक्ष्ण्यलक्षणस्यायुधत्वेन प्रसिद्धस्य निषेधेनानङ्गास्त्रस्य जगज्जैत्रस्य विशेषः कोऽप्याविष्कृतो जगज्जयकार्यविषयः। तादृशमपीदं जगद्विजयसमर्थमहो यथेदं प्रतिविशिष्टमिति॥

न देवकन्यका नापि गन्धर्वकुलसम्भवा।
तथाप्येषा तपोभङ्गं विधातुं वेधसोऽप्यलम्॥३२३॥

इयं देवानां कन्यका योषिन्न भवति। सम्भवत्यस्मादिति सम्भवः। गन्धर्वाणां देवविशेषाणां कुलं वंशः सम्भवः, तत्र वा सम्भूतिरस्या इति गन्धर्वकुलसम्भवा न भवति। सा हि स्त्रीजातिरत्यन्ताभिरूपा। तथापि पूर्ववत् विशेषविवक्षायाम्। यदाह– एषा स्त्री या न तज्जातिः। वेधसोऽपि येन सृष्टा, यो वा वीतरागः प्रागेवान्यस्य। तपसो विषयसंयमस्य भङ्गं निवृत्तिं विधातुं कर्तुमलं समर्था। किमिदं रूपचातुर्यम्। इह देवजात्यादे रूपोत्कर्षवत्त्वनिवृत्त्या विशेषः, मानुष्यप्येवंविधा या प्रजापतिमपि रागपरवशं करोतीति दर्शितः॥

न बद्धा भ्रूकुटिर्नापि स्फुरितो दशनच्छदः।
न च रक्ताभवद् दृष्टिर्जितं च द्विषतां कुलम्॥३२४॥

केनचिद् धीरेण भ्रुकुटिर्भ्रूभङ्गः कोपजन्मा न बद्धा न रचिता। दशनच्छदश्च अधरो न स्फुरितः कोपान्न कम्पितः। दृष्टिश्च रक्ता रोषारुणा नाभवन्। तथापि च द्विषतां कुलम् अरिवर्गः जितं भग्नम्। चित्रमेतत्। अत्र भ्रुकुटीबद्धदशनच्छदस्फुरणादेः क्रियाया विगमेन निर्विकारारिविजयलक्षणो विशेषो दर्शित इति ॥

न रथा न च मातङ्गा न हया न च पत्तयः।
स्त्रीणामपाङ्गदृष्ट्यैव जीयते जगतां त्रयम् ॥३२५॥

रथाः स्यन्दना न सन्ति। न मातङ्गा हस्तिनः सन्ति। न च हया अश्वाः। नापि पत्तयः पदातयः। चतुरङ्गमनीकमिदं जयोपकरणम्। तथापि स्त्रीणामपाङ्गदृष्ट्या कटाक्षेणैव केवलं जगतां त्रयं त्रिभुवनं जीयते वशीक्रियते। अत्र रथादिलक्षणद्रव्याभावेन जगत्त्रयविजयलक्षणो विशेषः स्त्रीकटाक्षस्याविष्कृत इति ॥

विशेषोक्तेर्विकल्पान्तरं दर्शयन्नाह—

एकचक्रो रथो यन्ता विकलो विषमा हयाः।
आक्रामत्येव तेजस्वी तथाप्यर्को जगत्त्रयम् ॥३२६॥

एकं चक्रमस्येत्येकचक्रो रथः। कथं वहति? यन्ता सारथिश्चारुणलक्षणः अङ्गविकलः। कथं कर्मण्यः? हया रथ्याश्च विषमाः सप्त। कथं धौरेयाः? तथाप्यर्कः तेजस्वी प्रतापविशेषयुक्तो यतस्तस्मात् जगतां त्रयमाक्रामत्यभिभवति। तेजस्तत्रनिमित्तमिति ॥

[केयं] विशेषोक्तिरित्याह—

सैषा हेतुविशेषोक्तिस्तेजस्वीति विशेषणात्।
अयमेव क्रमोऽन्येषां भेदानामपि कल्पने ॥३२७॥

सैषा अनन्तरोक्ता तादृशी हेतुविशेषोक्तिर्नाम विज्ञायते। कुतः? तेजस्वीत्यर्क[84a]स्य विशेषणाद्धेतुरूपात्। तेजस्वित्वात् जगत्त्रयमाक्रामतीति। इमामवान्तरभेदविकल्पनादिशमतिदिशन्नाह- अयमित्यादि। अयमेवानन्तरोक्तः क्रमो न्यायः हेत्वपेक्षया हेतुविशेषोक्तिरित्येवंजातीयः अन्येषामपि भेदानां विशेषोक्तिविकल्पानां कल्पने प्रयोगेऽनुगन्तव्यः। ते चैवं कल्पनीयाः-



न विषं विषमं किञ्चिन्न च पाशोऽस्ति तादृशः।
मूर्च्छयन्ति मृगाक्षीणां बध्नन्ति [च] दृशो जगत् ॥
अविरुद्धक्रियाविशेषोक्तिः ॥

न शस्त्रं निशितं किञ्चित्तादृशं नापि चामृतम्।
स्त्रीणां कोपः प्रसादश्च हन्ति जीवयति क्षणम् ॥
विरुद्धक्रियाविशेषोक्तिः ॥

न किञ्चिन्मार्दवं तन्वि! स्तनयोर्न च नम्रता।
तथापि च तथैताभ्यां जनोऽयमतिरज्यते ॥
चाटुविशेषोक्तिः ॥

दिशा अनया अन्येप्यूहनीया विकल्पा इति ॥

॥ इति विशेषोक्तिचक्रम् ॥

तुल्ययोगितां योजयन्नाह—

विवक्षितगुणोत्कृष्टैर्यत् समीकृत्य कस्यचित्।
कीर्तनं स्तुतिनिन्दार्थं सा मता तुल्ययोगिता ॥३२८॥

विवक्षितः प्रतिपादयितुमिष्टः कश्चिद्गुणो धर्मः साधुरसाधुर्वा तेनोत्कृष्टैरधिमात्रैः प्रसिद्धैः कैश्चिद्वस्तुभिः सह समीकृत्य वस्तुतोऽसाम्येऽपि तथाभावमारोप्य कस्यचिदर्थस्य पुरुषादेः कीर्तनमाख्यानम्। किमर्थम्? स्तुतिः प्रशंसा निन्दा जुगुप्सा चार्थः प्रयोजनं यस्मिन् कीर्तने तत्तथा समीकृतस्य स्तुत्यर्थं निन्दार्थं वा, सा तल्लक्षणा तुल्ययोगिता स्मृता। तेन गुणेन तादृशां तुल्ययोगिताप्रतिपादनात्, तादर्थ्येन तुल्ययोगिता तथाविधोक्तिरिति ॥

तामुदाहरन्नाह—

यमः कुबेरो वरुणः सहस्राक्षो भवानपि।
बिभ्रत्यनन्यविषयां लोकपाल इति श्रुतिम् ॥३२९॥

यमो दक्षिणस्या दिशः पातः । कुबेर उत्तरस्याः । [वरुणः पश्चिमायाः] सहस्राक्षः शक्रः प्राच्याः । भवानपि त्वं च । एते[भ्योऽन्ये] नास्या विषयः । इत्यनन्य-विषयां लोकपाल, इत्येवंरूपां श्रुतिं शब्दं बिभ्रति वहन्ति, सर्वैस्तैर्लोकरक्षणात् । अत्र लोकपालत्वेन विवक्षितेन गुणेन उत्कृष्टैर्यमादिभिः समीकृत्य राज्ञः कस्यचित् कीर्तनस्मृत्यर्थमिति योजनीयम् ॥

सङ्गतानि मृगाक्षीणां तडिद्विलसितानि च ।
क्षणद्वयं न तिष्ठन्ति घनारब्धान्यपि स्वयम् ॥३३०॥

मृगाक्षीणां सङ्गतानि प्रेमाणि त[डि]तां विद्युतां विलसितानि च यथायोगं घनैर्मेघैरारब्धानि घनं निरन्तरमारब्धान्यपि। किं पुनरन्यानि ? स्वयमात्मना प्रकृति-चापल्यात्, न तु कारणवैगुण्येन घनारब्धत्वात् क्षणद्वयमपि द्वाव[84b]पि क्षणौ न तिष्ठन्ति । किं पुनश्चिरम् ?,यदि परमेकं क्षणं तिष्ठन्ति । इह विवक्षितेन गुणेन क्षण-मात्रास्थायित्वेनोत्कृष्टैः प्रतीतैस्तड़िद्विलसितैः समीकृत्य स्त्रीप्रेम्णामतिचपलतया निन्दार्थं कीर्तनमिति लक्षणं योजनीयम् ॥

॥ इति तुल्ययोगिताचक्रम् ॥

विरोधं निदर्शयन्नाह—

विरुद्धानां पदार्थानां यत्र संसर्गदर्शनम् ।
विरोधसाधनायैव स विरोधः स्मृतो यथा ॥३३१॥

विरुद्धानामन्योन्यप्रतिद्वन्द्विनां पदार्थानां क्रियागुणादीनां संसर्गस्य सन्निवेः दर्शनमवगमो यत्रोक्तिप्रकारे । किमर्थम् ? विरोधस्य विप्रतिषेधस्य साधनाय सविशेषं प्रत्यायनार्थमेव । अत एव विरोधप्रधानत्वात् स उक्तिविशेषः विरोध इति स्मृतः कथ्यते कविभिः । यथेत्युदाहरति ॥

कूजितं राजहंसानां वर्धते मदमञ्जुलम् ।
क्षीयते च मयूराणां रुतमुत्क्रान्तसौष्ठवम् ॥३३२॥



अरुणचरणचञ्चवो हंसविशेषा राजहंसाः । तेषां कूजितम् निनदः मदेन सामयिकेन हर्षोत्कर्षेण मञ्जुलं मधुरं वर्धते विजृम्भते । मयूराणां च रुतं कूजितं पुनरुत्क्रान्तमपगतं सौष्ठवमुत्कर्षो यतः, तत् क्षीयते निवर्तते । वृद्धिक्षययोः क्रियापदार्थयोः विरुद्धयोर्मिथः संसर्गस्यैकत्र सन्निवेर्दर्शनमिति लक्षणं योज्यम् ॥

प्रावृषेण्यैर्जलधरैरम्बरं दुर्दिनायते ।
रागेण पुनराक्रान्तं जायते जगतां मनः ॥३३३॥

जलधरैः प्रावृषि भवैः कारणैः अम्बरमाकाशं दुर्दिनायते भिन्नाङ्गं जायते । जगतां मनः पुनस्तै रेव रागेण रतिभावेनाक्रान्तं विषयीकृतं रक्तं जायते। अत्र दुर्दिनत्व-रक्तत्वयोर्विरागरागरूपयोः गुणपदार्थयोः विरोधप्रतिपत्तिरिति लक्षणं योज्यम् ॥

तनुमध्यं पृथुश्रोणि रक्तौष्ठमसितेक्षणम् ।
नतनाभि वपुः स्त्रीणां कं न हन्त्युन्नतस्तनम् ॥३३४॥

तनु कृशं मध्यम् । पृथुर्महीयसी श्रोणिः नितम्बो रक्तश्चौष्ठोऽधरः । असितं कृष्णमीक्षणमक्षि । नता निम्ना नाभिः । उन्नतौ स्तनौ यत्र तादृशं स्त्रीणां वपुः शरीरं कं नाम नरं [न] हन्ति चक्षुःप्रीतिमनःसङ्गादिक्रमेण दशमीं दशां कं न नयति ? सर्वमेतादृशं जनं हन्ति । अत्र तनुमध्यपृथुश्रोणिप्रभृतीनां शरीरावयवद्रव्याणां परस्परविरोधिनां संसर्गदर्शनमिति लक्षणं योजनीयम् ॥

मृणालबाहु रम्भोरु पद्मोत्पलमुखेक्षणम् ।
अपि ते रूपमस्माकं तन्वि ! तापाय कल्पते ॥३३५॥

मृणालवद्बाहू रम्भा कदली तद्वदूरू पद्ममिव मुखमुत्पलवदीक्षणे यत्र तत्तादृश-मत्यन्तशीतवस्तुसरूपमपि रूपं ते तव सम्बन्धि तन्वि ! तापाय तप्त्यर्थमस्माकं कल्पते [85a] भवति । किमिदं विरुद्धम् ? अत्र शीतगुणस्य तद्वतो वा द्रव्यस्य बाहुप्रभृतेः तत्समुदायस्य वा रूपस्य शरीरद्रव्यस्य तापेनोष्णताकारिकर्मणा सह विरोध इति द्रष्टव्यम् ॥

उद्यानमारुतोद्धूताश्चूतचम्पकरेणवः ।
उदश्रयन्ति पान्थानामस्पृशन्तोऽपि लोचने ॥३३६॥

उद्यानेषु मारुतैरुद्धूताश्चूतानां चम्पकानां च रेणवः पांस्वाः परागाः । पान्थानां विरहिणां लोचनमस्पृशन्तोऽपि दूर एव दृश्यमाना उदश्रयन्ति । उदस्रवन्तीत्यपि पठ्यते । उभयत्रापि रोदयन्तीत्यर्थः । तच्च विरुद्धम् । स्पृशतामेव रेणूनां नयनजलोद्गम-निमित्तत्वात् । कथमस्पृशन्त उदश्रयन्ति ? अत्र स्पर्शनिषेधोदश्रयणयोः क्रिययोर्विरोध इति द्रष्टव्यम् । कूजितमित्यादेः [२.३३२] अस्य च को विशेषः । उभयत्रापि क्रिया-विरोधात् । तत्र भिन्नाधिकरणयोः क्रिययोर्विरोधः । इह त्वभिन्नाधिकरणयोरिति महान् विशेषः । अन्यत्राप्येवंप्रकारत्वाद्विशेषस्थितेरिति ॥

कृष्णार्जुनानुरक्तापि दृष्टिः कर्णावलम्बिनी ।
याति विश्वसनीयत्वं कस्य ते कलभाषिणी ॥३३७॥

कलभाषिणि ! ते दृष्टिः कस्य नाम विश्वसनीयत्वम् विस्रब्धतां याति ? न कस्यचित् । कुतः ? यतः कृष्णे नारायणे कृष्णायां द्रौपद्यां वा अर्जुने धनञ्जये चानुरक्ता सती कर्णं तद्विपक्षमङ्गराजमवलम्बते भजते, तस्माद्विरुद्धपक्षपातिनी कथमियं विश्वास्या खलेति शब्दच्छलेन विरोधः प्रतीयते । वस्तुतस्तु दृष्टिः कृष्णा श्यामा क्वचिदर्जुना धवला अनुरक्ता ताम्रा च स्निग्धा वा कर्णं च श्रुतिपथमायातत्वादवलम्बत इत्यविरोधः । श्लेषानुविद्धोऽयमीदृशो विरोधः प्रतिपत्तव्य इति ॥

विरोधमुपसं[हरति]—

इत्यनेकप्रकारोऽयमलङ्कारः प्रतायते ।

इति कथितेन क्रमेणायं विरोधोऽलङ्कारोऽनेको विचित्रः प्रकारो विकल्पोऽस्येति अनेकप्रकारः प्रतायते प्रसरति प्रतीयते लक्ष्यते वा ।

अपरोऽपि प्रकारः कश्चिदुदाह्रियते–

सद्वयोऽप्यद्वयः सोऽयमुन्मुखोऽप्यनताननः ।
कर्कशोऽपि मृदुस्पर्शः स्तनभारो मृगीदृशाम् ॥ इति ।

॥ इति विरोधचक्रम् ॥

अप्रस्तुतस्तोत्रमादर्शयन्नाह—

अप्रस्तुतप्रशंसा स्यादप्रक्रान्तेषु या स्तुतिः ॥३३८॥



अप्रक्रान्ते तु अप्रकृत एव बहिस्तत्त्वेन कस्मिंश्चिद्वस्तुनि बुद्धिस्थे विषये या स्तुतिः संराधनमित्यनूद्य सा अप्रस्तुतप्रशंसा स्यादिति विधीयते, यदुद्देशेऽप्रस्तुतस्तोत्रमुक्तम् । अप्रक्रान्तेप्सितस्तुतिरिति पाठेऽप्रक्रान्तस्येप्सितस्येष्टस्य वस्तुनः कस्यचिदप्रक्रान्ता वा तद्विषयत्वात् । स्तुतिरिति [85b] व्याख्येयं शेषं समानम् ॥

तामुदाहरन्नाह—

सुखं जीवन्ति हरिणा वनेष्वपरसेविनः ।
जलैरयत्नसुलभैस्तृणदर्भाङ्कुरादिभिः ॥३३९॥

जलैर्दर्भाङ्कुरैस्तृणोद्गमैः । आदिशब्देन तरुपल्लवादिभिरर्थैरुपकरणैर्वा अयत्नेन सेवापरिक्लेशादि[राहित्येन] सुलभैः [सुख]प्राप्यैरकृच्छ्राधिगतैरमृतायमानैरपरमन्यं कञ्चिदसेवमानाः परचित्ताराधनदुःखानभिज्ञाः स्वाधीनवृत्तयः सुखं निराकुलं [हरिणाः] वनेषु जीवन्ति । अपि नाम तादृशी वृत्तिरस्माकमपि स्यात् ? प्रतिपक्षपातः खलु प्रजायते । तादृशीं कल्याणीं वृत्तिं कल्पयतो हरिणेषु ईर्ष्या लक्ष्यत इति ॥

सेयमप्रस्तुतैवात्र मृगवृत्तिः प्रशस्यते ।
राजानुवर्तनक्लेशनिर्विण्णेन मनस्विना ॥३४०॥

सेयमनन्तरोक्ता मृगाणां वृत्तिरयत्नसुलभजलदर्भाङ्कुररूपा जीविका, वर्तन्ते जीवन्त्यनयेति कृत्वा । अप्रस्तुता अप्रक्रान्तैव, न प्रस्तुतापि तादृशप्रकरणाभावात् । प्रशस्यते संराध्यते अत्र प्रयोगे केनचिद् राज्ञोऽनुवर्तनम् सेवा । तदेव क्लेशः दुःख-रूपत्वात् । ततो निर्विण्णेनातिविरक्तेन मनस्विनोदात्तेन केनचित्ततोऽप्रस्तुतापीय-मीदृग्विषया [स्तुतिः] काव्यशोभाकरत्वादलङ्कारः । अयमपरोऽत्र उदाह्रियते—

सुखिनस्ते महात्मानः संतोषपरिभाविताः ।
सुखाभासैः परिक्लेशैर्वर्जितात्मपरिग्रहैः ॥

इत्थमप्रक्रमेणैवमनिवृत्तिः प्रशस्यते ।
धनार्जनादिसंक्लेशनिर्वेदवशवर्तिना ॥

समासोक्तेरियं कथं भेद्यते, उभयत्राप्यन्यदभिप्रेत्यावान्तराभिधानात् ? तत्र सदृशम एवार्थान्तरमभिधीयते । इह तु विसदृशमिति महान् भेदः । विसदृशात् कथमर्थान्तर-

प्रतीतिरिति चेत् ? सदृशादपि कथम् ? अर्थप्रकरणादेरिति[1] चेदिहाप्येवमस्तु । तत्र तादृशी प्रतीतिरिहेदृशीति न किञ्चिद्विरुध्यते । अन्ये त्विह प्रशस्यमेवाभिधीयते । तत्र तु निन्द्यमपीति विशेषं व्याचक्षते । तथैकान्तिको भेदोऽनयोर्निदर्शितः स्यादिति ॥

॥ इत्यप्रस्तुतस्तोत्रम् ॥

व्याजस्तुतिमधिकृत्याह—

यदि निन्दन्निव स्तौति व्याजस्तुतिरसौ मता ।
दोषाभासा गुणा एव लभन्ते ह्यत्र सन्निधिम् ॥३४१॥

निन्दन्निव दोषमाचक्षाण इव स्तौति गुणं भाषते यदि चेत्, असावेवंलक्षणा व्याजस्तुतिर्मता इष्टा । कथमत्र गुणाः प्रतीयन्ते ? यतस्तुतिरियं गुणाविष्क्रियालक्षणा स्यादिति ब्रवीति । हिर्यस्मादर्थे । यदत्रोक्तिविशेषे दोषवदाभासन्ते प्रतिभान्ति तादृशपदोपादानादेर्दोषाभासा गुणा एव शौर्यादयो न दोषोऽपि कश्चित् । अत एव लेश[86a]स्तुतेरियं भिद्यते । तत्र हि दोषे गुणः कश्चिदेव प्रती[य]ते । यदुक्तम्—

दोषाभासो गुणः कोऽपि दर्शितश्चाटुकारिता ।

[२. २८०]

इति । सन्निधिमवस्थानं लभन्ते प्रतीयन्त इति यावत् । अत्र व्याजस्तुतौ । ततः स्तुतिरेवेयम् । सर्वथा [न] निन्दा काचिदपीति[2] ॥

तामुदाहरन्नाह—

तापसेनापि रामेण जितेयं भूतधारिणी ।
त्वया राज्ञापि सैवेयं जिता मा भून्मदस्तव ॥३४२॥

१, तुल॰ संयोगो विप्रयोगश्च साहचर्यं विरोधिता ।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः ॥
सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः ।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः ॥
-वाक्यपदीये

२. अत्र श्लोकव्याख्यायां किमपि त्रुटितमिति प्रतिभाति ।



रामेण दाशरथिना भार्गवेण वा तापसेन चतुरङ्गबलहीनेन तपस्विनापि । अ[नादरं] सूचयत्यपिशब्दः । कथञ्चिदनुगृहीतमुनिरूपेण जन्मान्तरोपात्ततपःप्रभावयोगाद्वा । तापसेनेति श्लिष्टम् । अत एवेयं श्लेषानुगतैव प्रवर्तते । यद्वक्ष्यति– इति श्लेषानुविद्धानामित्यादि[२.३४७] । इयं भूतधारिणी पृथिवी जिता आक्रान्ता । त्वया तु चतुरङ्गबलपरिवारिणा राज्ञा नराधिपेनापि सवा । नातःपरमिहाधिकं पदम् अस्तीत्यपिशब्देन सूचयति । सैवेयं जिता तापसेन जिता एव । नान्या तदहमजयं पृथिवीमिति मदोऽहङ्कारस्तव मा भूत् । कोऽत्र विशेष इति चेत्– निन्दनेन च । महानुभावेन जितसमस्तमहीमण्डलेन सकलनरेन्द्रचूडामणिना गुणारामेण रामेण समीकृत्य परया स्तुत्या संयोजितो राजा कश्चिदिति व्याजस्तुतिरीदृशी सुतरां रमणीयेति ॥

पुंसः पुराणादाच्छिद्य श्रीस्त्वया परिभुज्यते ।
राजन्निक्ष्वाकुवंश्यस्य किमिदं तव युज्यते ॥३४३॥

पुराणाज्जीर्णादकिञ्चित्करात् पुंसः पुरुषात् कुतश्चित्, पुराणाच्च पुंसो विष्णोरिति श्लिष्टम् । आच्छिद्यापहृत्य श्रीरभ्युदयो राज्यश्रीश्च देवतेति श्लिष्टम् । त्वया परिभुज्यते निषेव्यते । तदिदमीदृशं कर्म परदाराच्छेदरूपं तवेक्ष्वाकुवंश्यस्य तद्भवस्य मनुकुलजन्मनः । इक्ष्वाकुवंशस्येत्यपि पठ्यते । तत्रेक्ष्वाकूणां ते वा वंशोऽस्येत्यन्यपदार्थः । यदुपज्ञेयं वर्णाश्रमाचारस्थितिलक्षणा लोकयात्रा प्रवर्तते । किं युज्यते ? नैवेदं युक्तं तवेदृशवंशसम्भवस्येत्यर्थः । राजन्नित्यामन्त्र्यते । इह पुराणादकिञ्चित्करात्पुंसः श्रीः सम्पत् आच्छिद्यते इति निन्द्यत एव । पुराणात् पुंसो विष्णोः श्रीः विभूतिर्देवतेति च श्लिष्टा । आच्छिद्यते । तामपि पुरुषोत्तमा[दा]क्रम्याकृष्यत इति वीर्योत्कर्षाविष्कृतेः स्तूयत एव कश्चिन्नृपतिः । तदियं सर्वथा श्लेषमुपजीवतीति ॥

भुजङ्गभोगसंसक्ता कलत्रं तव मेदिनी ।
अहङ्कारः परां कोटिमारोहति कुतस्तव ॥३४४॥

तव कलत्रं भार्या [86b] कलत्रमिव कलत्रं मेदिनी, पालनादिना । मेदिनी पृथिवी जघन्यजातीया च स्त्री । भुजङ्गशब्देनात्र श्लेषः, फणधरो धूर्तश्च विवक्षित इति श्लिष्टम् । तस्य भोगः यथाक्रमं कामः संभोगश्चेति पुनः श्लिष्टम् । तत्र संसक्ता व्यवस्थिता तेन सा ध्रियते इति श्रुतेः । निरता चेत्युभयत्र योज्यम् । यत एवं तत् कुतः

कस्मादुत्कर्षादहंकारः अहमत्राधिक इत्यभिमानः तत्र परां कोटिमधिमात्रतामारोहति ? न युक्तमित्यमहङ्कर्तुं तवेति । निन्देव स्तुतिरियमखिलमहीतलाधि[पत्य]वर्णनलक्षणा अत्र लक्ष्यत इति ॥

अपरे अप्येवं श्लेषानुगता विकल्पा द्रष्टव्या इति निगमयन्नाह --

इति श्लेषानुविद्धानामन्येषां चोपलक्ष्यताम् ।
व्याजस्तुतिप्रकाराणामपर्यन्तः प्रविस्तरः ॥३४५॥

इति कथितेन पथा श्लेषेणोक्त[रू]पेणानुविद्धानां युक्तानां व्याजस्तुतेः प्रकाराणां विकल्पानामन्येषां च शेषाणामपि प्रविस्तरः प्रपञ्चोऽपर्यन्तः अपरिमितः प्रयोगेषु लक्ष्यतां द्रष्टव्यः । इह तु दिङ्मात्रं दर्शितम् । विकल्पाः केचिदपरे निदर्श्यन्ते—

विभर्ति सकलामुर्वीमुरगः स्वपदच्युतः ।
भवानासाद्य साम्राज्यं राजन् किमभिमन्यसे ॥

मायावशेन लोकोऽयमावर्जितमतिस्त्वया ।
त्वद्यशोमुखरः कृष्णचरितः किं चिकित्ससे ॥

श्रुतिः कुवलयं धत्ते लीलया हरिणीदृशाम् ।
विक्रमेण भवानेतन्महता किं तव स्मयः ॥ इति ।

॥ इति व्याजस्तुतिः ॥

निदर्शनमुपदर्शयन्नाह—

अर्थान्तरप्रवृत्तेन किञ्चित्तत्सदृशं फलम् ।
सदसद्वा निदर्श्येत यदि तत् स्यान्निदर्शनम् ॥३४६॥

अर्थान्तरे निदर्श्यापेक्षया अन्यस्मिन् कचिदुचिते कार्ये प्रवृत्तेन तत्साधयता केनचिद्वस्तुना हेतुभूतेन कर्तृभूतेन तेनार्थान्तरेण सदृशं तुल्यं फलं किञ्चित् सदिष्टमसद् अनिष्टं वा निदर्श्येत प्रतिपाद्येत यदि, तदेवंलक्षणं निदर्शनं स्यादिति विधीयते । अर्थान्तरस्य वृत्तेनेत्यपि पाठः । तत्रार्थान्तरस्य कस्यचिद्वृत्तेन कर्मणा सदृशमिति व्याख्येयम् । शेषं समानम् ॥



उदाहरन्नाह—

उदयन्नेव सविता पद्मेष्वर्पयति श्रियम् ।
विभावयितुमृद्धीनां फलं सुहृदनुग्रहम् ॥३४७॥

सविता रविरुदयन्नेवोदयमासादयन्नेव पद्मेषु श्रियं विकाशरूपामर्पयति निधत्ते । उदयपूर्वकेण पद्मविकाशेनार्थान्तरेण सदृशं फलं निदर्शयति—सुहृदामाश्रितानामनुग्रहमुपकारं नाम फल[87a]कार्यमृद्धीनामभ्युदयानां विभावयितुं दर्शयितुमिति सत्फलमिदं निदर्शितं सुहृदनुग्रहस्याभीक्ष्णत्वादि[ति] ॥

असत्फलं निदर्शयन्नाह—

याति चन्द्रांशुभिः स्पृष्टा ध्वान्तराजिः पराभवम् ।
सद्यो राजविरुद्धानां सूचयन्तो दुरन्तताम् ॥३४८॥

चन्द्रस्यांशुभिः स्पृष्टा भिन्ना ध्वान्तस्य तमसो राजिः संघातः पराभवं निधनं याति पराभूयत इति यावत् । सद्यस्तत्क्षणम् । किं कुर्वती ? राजा चन्द्रो नृपतिश्चेति श्लिष्टम् । तेन विरुद्धानां केषाञ्चित् दुष्टो विपद्रूपोऽ[न्तोऽ]वसानं यस्य तद्भावस्तत्ताम् अनर्थनिष्ठतां सूचयन्तीति । राजविरोधहेतुकमसत्फलमेतद् दर्शितम् पराभवस्यानिष्टत्वात् ॥

॥ इति निदर्शनचक्रम् ॥

सहोक्तिं परिवृत्तिं च प्रतिपादयन्नाह—

सहोक्तिः सहभावस्य कथनं गुणकर्मणाम् ।
अर्थानां यो विनिमयः परिवृत्तिस्तु सा यथा ॥३४९॥

गुणानां कर्मणां च सम्बन्धिनः सहभावस्य युगपत् सत्तायाः कथनं प्रतिपादनं यदित्यनूद्य सहोक्तिः सा विज्ञेयेति विधीयते । अर्थानां गुणक्रियादीनां विनिमयो व्यत्ययः इत्यनूद्य परिवृत्तिर्विधीयते । यथेत्युदाहरति ॥

सह दीर्घा मम श्वासैरिमाः संप्रति रात्रयः ।
पाण्डुराश्च ममैवाङ्गैः सह ताश्चन्द्रभूषणाः ॥३५०॥

संप्रति विरहातुरस्य मम श्वासैर्निश्वसितैः सह दीर्घा आयता इमा रात्रयो वर्तन्ते। ममैवाङ्गैरवयवैर्विरहविधुरैः सह पाण्डुराश्चन्द्रो भूषणमासामिति चन्द्रभूषणाः। पाण्डुरत्वे निमित्तमिदमुक्तम्। अत्र दै[र्घ्य]स्य पाण्डुरत्वस्य चोभयसम्बन्धिनः सहभाव उक्तः। निश्वासा रात्रयश्च दीर्घा अङ्गानि रात्रयश्च पाण्डुरा युगपद्भवन्तीति ॥

वर्धते सह पान्थानां मूर्छया चूतमञ्जरी ।
पतन्ति च समं तेषामसुभिर्मलयानिलाः ॥३५१॥

पान्थानां वियोगिनां मूर्च्छया मोहनतया सह [चूतस्य] मञ्जरी सहकारकलिका वर्धते। तेषां पान्थानामसुभिः प्राणैः समं सह मलयानिलाः दक्षिणमरुतः पतन्ति च। अत्र वर्धनयोः पतनयोश्च उभयाधारयोः क्रिययोः सहभावोऽभिहितः। सहजचित्रहेतुगर्भा चेयं सहोक्तिरिति ॥

कोकिलालापसुभगाः सुगन्धिवनवायवः ।
यान्ति सार्धं जनानन्दैर्वृद्धिं सुरभिवासराः ॥३५२॥

कोकिलानामालापैः सुभगा मनोहराः सुगन्धयो वनवायवो येषामिति सुगन्धिवनवायवः सुरभेर्वसन्तस्य वासरा दिवसा जनानामानन्दैः प्रीतिभिः सार्धं सह वृद्धिं यान्ति। वर्धन्त इति यावत्। अत्रोभयाधिकरणयोर्वर्धनक्रिययोः सहभावो दर्शितः। इयमभिन्न[क्रिया]। क्रियान्तरात्तु भिन्नक्रिया इत्यनयोर्भेदः प्रतिपत्तव्य इति ॥

सहोक्तिमुप[संहरति]—

इत्युदाहृतयो दत्ताः सहोक्तेरत्र काश्चन ।

इत्युक्तेन विधिना [87b] सहोक्तेरुदाहृतयः प्रयोगाः काश्चन कतिपये न सर्वा, दत्ता दर्शिताः अत्र शास्त्रे। शेषाः प्रयोगाः सुलक्षणीयाः ॥

॥ इति सहोक्तिः ॥

परिवृत्तिं निदर्शयन्नाह—

क्रियते परिवृत्तेश्च किञ्चिद्रूपनिरूपणम् ॥३५३॥



संप्रति परिवृत्तेश्च परिवृत्तेरपि रूपस्य निरूपणं किञ्चित् संक्षिप्तं क्रियत इति ॥

शस्त्रप्रहारं ददता भुजेन तव भूभुजाम् ।
चिरार्जितं हृतं तेषां यशः कुमुदपाण्डुरम् ॥३५४॥

तव भुजेन भुजगराजभोगायमानेन शस्त्रैः कृपाणादिभिः प्रहारं ददता प्रयच्छता भूभुजां राज्ञाम्। पूजानुग्रहनिन्दा[वात]दानस्य दानत्वाभावात् न चतुर्थी। चिरं दीर्घमर्जितं सञ्चितं कुमुदवत् पाण्डुरं यशस्तेषां भूभुजां सम्बन्धि हृतं गृहीतम्। अत्र प्रहारेण कर्मणा यशोरूपो गुणो विनिर्मितः। इतीदृशी परिवृत्तिरनुगन्तव्या।

जगतां प्रीतिसर्वस्वं [धैर्यं मतिम]तामपि ।
कटाक्षमात्रमुत्सृज्य गृह्णन्ति हरिणीदृशः ॥

इत्यपरमुदाहरणम्।

॥ इति परिवृत्तिः ॥

आशिषमाविष्कुर्वन्नाह—

आशीर्नामाभिलषिते वस्तुन्याशंसनं यथा ।
पातु वः परमं ज्योतिरवाङ्मनसगोचरः ॥३५५॥

अभिलषिते वाञ्छिते वस्तुनि क्वचित् क्रियाविशेषे आशंसनं प्रार्थनमित्यनूद्य आशीर्नाम विज्ञायत इति विधीयते। यथेत्युदाहरति— परमं पारमार्थिकं सकलकल्पनामलविकलं ज्योतिः संवेदनं सर्वपदार्थतत्त्वप्रकाशकत्वात् वाचो मनसश्चाविकल्पत्वात् न गोचरो न विषय इत्यवाङ्मनसगोचरः। अवाङ्मनसगोचरमित्यपि पठ्यते। तत्र न विद्यते वाङ्मनसयोर्गोचरो विषयभावो ग्राहकत्वमस्येति व्याख्येयम्। वो युष्मान् पातु रक्षतु। अत्राभिलषितं रक्षणमाशास्यत इति।

पायादपायतो लोकं लोकविद्गुणसागरः ।
नैरात्म्याद्वयसंवित्तिर्विजितावरणद्वयः ॥

इत्यपरमुदाहरणम् ॥

॥ इत्याशीश्चक्रम् ॥

यत्र तेनैव तदुपमीयते स तद्धर्मः तस्यान्यत्र कचिदवृत्तेरनन्वयनाम अलङ्कारः। यदाहुः-

यत्र तेनैव तस्य स्यादुपमानोपमेयता।
असादृश्यविवक्षातस्तमित्याहुरनन्वयम् ॥

ताम्बूलरागवलयं स्फुरद्दशनदीधिति।
इन्दीवराभनयनं तवेव वदनं तव ॥
[ काव्यालङ्कारे ३. ४५-६ ]

यत्रोपमानेन सहाभेदः, भेदश्च स्तुतिपरः परिदीप्यते ससंदेहो नामासावलङ्कारः कल्पितः। यथोक्तम्—

उपमानेन तत्त्वं च भेदं च वदतः पुनः।
ससंदेहं वचः स्तुत्यै ससंदेहं विदुर्बुधाः ॥

किमयं शशी न स दिवापि राजते
कुसुमायुधो न धनुरस्य कौसुमम्।
इति विस्मयाद् विमृशतोऽपि मे मति-
स्त्वयि वीक्षिते न लभतेऽर्थनिश्चयम् ॥
[ काव्यालङ्कारे ३. ४३-४ ]

अपरश्चोपमारूपकं नामालङ्कारः। तदुक्तम्—

उपमानेन तद्भावमुपमेयस्य साधयन्।
यां वदत्युपमामेतदुपमारूपकं यथा ॥

समग्रगगनायाममानदण्डो रथाङ्गिनः।
पादो जयति सिद्धस्त्रीमुखेन्दुनखदर्पणः ॥ इति।
[ काव्यालङ्कारे ३.३५-६ ]



त्रयमप्येतन्न संगृहीतमित्याशङ्क्य संग्रहं दर्शयन्नाह—

अनन्वयससंदेहावुपमास्वेव दर्शितौ।
उपमारूपकं चापि रूपकेष्वेव दर्शितम् ॥३५६॥

अनन्वयश्च [स]संदेहश्च द्वावप्येतौ उपमासु उपमाविकल्पेषु एव दर्शितं। अन्तर्भावितौ तल्लक्षणयोगात्। तथाहि, अनन्वयस्ताव[त्—

च]न्द्रारविन्दयोः कक्ष्यामतिक्रम्य मुखं तव।
आत्मनैवाभवत्तुल्यम् [२. ३७]

इत्यात्मनोपमितत्वात्, मुखस्योपमैव। न चाभेदे कथमुपमानोपमेयभाव इति शङ्कनीयम्, अनन्वयेऽतिप्रसङ्गात्। न ह्यनन्वय इति व्यपदेशान्तरमात्रेणोपमानोपमेयभावस्तत्र निवर्तते, प्रतीतिर्विरोधात्। अथाभेदेऽपि भेदकल्पनया तद्भावः, इहाप्येवमस्तु। अत एवासाधारणोपमेयमात्मनेवोपमितेरन्यस्यानपेक्षणादन्यत्वप्रदर्शनव्याजेन चन्द्रारविन्दाभ्यां वदनमुपमितमिति व्याचक्षते। तथा कथमसाधारणोपमेति चिन्त्यम्। ससंदेहोऽपि-

किं पद्ममन्तर्भ्रान्तालि किं ते लोलेक्षणं मुखम्।
मम दोलायते चित्तम् [२. २६]

इति संशयमुखेन व्यक्तं सादृश्यप्रतीतेः ससंशयोपमैव। न च मन्तव्यम्—

किमयं शशी न स दिवापि राजते
[ काव्यालङ्कारे ३.४४ ]

इति [स्तुति]परो भेदो न दर्शित इति। एवं नाम कान्तिसंपन्नं मुखं यत् पद्मं तद्व्यवसीयत इति स्तुतेरपि प्रतीतेः। प्रायश्चापरा अप्युपमाः स्तुतिगर्भाः, चन्द्रादिप्रतिविशिष्टवस्तुसादृश्योद्भावनात्। न चायं तत्र[ावश्यं] स्तुतिपरो भेदः कथ्यते, अन्यथापि प्रयोगदर्शनात्। तद् यथा—

एषा किंशुकराजी राजति दावानलो ज्वलन् किमयम्।
विरहविनाशोत्पाते याता किमकालसन्ध्येयम् ॥ इति

अयमालोहितच्छायो मदेन मुखचन्द्रमाः ।
सन्नद्धोदयरागस्य चन्द्रस्य प्रति गर्जति ॥

[२.८६]

इति मुखस्य चन्द्रत्वेन रूपणात् । साम्यप्रतीतिगर्भात रूपकेषु रूपकविकल्पेष्वेव दर्शितमन्तर्भावितम् । रूपकविकल्प [88b] एव कश्चिदुपमारूपकाख्यः । यथा व्यतिरेकगर्भो रूपकविकल्पो व्यतिरेकरूपकमाख्यायते । तदेतत्त्रयं यथालक्षणमुपमा-रूपकसंगृहीतमिति न किञ्चित् [तिर]ष्क्रियते ॥

उत्प्रेक्षावयवो नाम पृथगलङ्कारः परैरिष्यते । यदुक्तम्—

श्लिष्टस्यार्थेन संयुक्तः किञ्चिदुत्प्रेक्षायान्वितः ।
रूपकार्थेन च पुनरुत्प्रेक्षावयवो यथा ॥

तुल्योदयोऽवसानत्वाद्गतेऽस्तं प्रति भास्वति ।
वासाय वासरः क्लान्तो विशतीव तमोगुहाम् ॥ इति ।

[काव्यालङ्कारे ३.४७-४८]

सोऽप्युत्प्रेक्षाविशेषत्वात् उत्प्रेक्षासंगृहीत इति दर्शयन्नाह—

उत्प्रेक्षाभेद एवासावुत्प्रेक्षावयवोऽपि यः ।

यः परैरुत्प्रेक्षावयवः पृथगुक्तः असौ सोऽपि चायमुत्प्रेक्षाया भेदो विशेषः कश्चित् । ततस्तत्संगृहीत एवेति नासंग्रहः कश्चित् ।

संसृष्टिं व्याचष्टे—

नानालङ्कारसंसृष्टिः संसृष्टिस्तु निगद्यते ॥३५७॥

नाना अनेकस्यालङ्कारस्य संसृष्टिः संसर्गः एकत्रोक्तौ सन्निधानं संसृष्टिस्तु निगद्यते विधीयते, यदुद्देशं संकीर्णमुक्तम । तुशब्देनैतदाह– जात्यादीनामिव नास्याः पृथग्लक्षणम् । तेषामेव तु द्वयोर्बहूनां वा संसर्गलक्षणमिति ॥

कथमनेकस्यालङ्कारस्य एकत्रोक्तौ अवस्थानमिति सापेक्षत्वनिरपेक्षत्वरूपं प्रकारद्वयं दर्शयन्नाह—



अङ्गाङ्गिभावावस्थानं सर्वेषां समकक्षता ।
इत्यलङ्कारसंसृष्टेर्लक्षणीया द्वयी गतिः ॥३५८॥

अङ्गमुपकारकम् । अङ्गि च उपकार्यम् । तयोर्भावोऽङ्गाङ्गिभावः साध्यसाधनत्वम् । तेनावस्थानं सन्निधानम् । सर्वेषां ये तत्रोपात्ताः । समा कक्षा बलं येषां तेषां भावः समकक्षता अङ्गाङ्गिभावमन्तरेण स्वातन्त्र्येणावस्थानं चेति– एवंरूपा द्वयी द्विविधा गतिरवस्था [लक्षणीया] द्रष्टव्या । कुत्रालङ्कारे ? संसृष्ट्यलङ्कारे विषय इति ॥

आक्षिपन्त्यरविन्दानि मुग्धे ! तव मुखश्रियम् ।
कोशदण्डसमग्राणां किमेषामस्ति दुष्करम् ॥३५९॥

मुग्धे ! तव मुखस्य श्रियं शोभामरविन्दानि पद्मान्याक्षिपन्ति । त्वन्मुखसदृशानि इति यावत् । इयमुपमा । कथमेतदिति साध्यते– कोशः पद्मगर्भो धनसम्भारश्च, दण्डो नालं चतुरङ्गबलमिति च श्लिष्टम । ताभ्यां समग्राणां पर्याप्तानामेषामरविन्दानां दुष्करम असाध्यं कार्यं किमस्ति किञ्चित् ? सर्वमेव साध्यं यत्त्वन्मुखश्रियमप्याक्षिपन्ति इत्यङ्गाङ्गि-भाव[ा]वस्थानवत्याः संसृष्टेरुदाहरणमेतत् , उपमायाः साध्यत्वेनाङ्गितयावस्थानात् । [89a] कोशेत्यादेश्चार्थान्तरन्यासस्य श्लेषानुविद्धस्य साधनत्वेनाङ्गतया स्थितेरित्य-लङ्कारत्रयं संसृष्टमङ्गाङ्गिभूतं वर्णितम् । उपमा अर्थान्तरन्यास इत्यलङ्कारद्वयं वा । श्लेषस्त्वर्थान्तरन्यासात्मनैव अवस्थितः, न पृथक् संख्यायत इति ।

समकक्षा तु संसृष्टिः नोदाहृता । सा त्वेवं द्रष्टव्या—

स्तनोन्नता तनुः स्त्रीणां लोललोचनमाननम् ।
वचांसि च मधूनीव कथयन्ति न विक्रियाम् ॥ इति ।

इयं जात्युपमासंसृष्टिः समकक्षेति ॥[1]

---

1 अत्र केचन मूल एव

लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः ।
असत्पुरुषसेवेव दृष्टिर्निष्फलतां गता ॥

इति भासशूद्रकस्वीकृतं श्लोकं समकक्षाया उदाहरणत्वेन पठन्ति ।

कोशदण्डेत्यादिना यद्यर्थान्तरन्यासोऽङ्गतयोपन्यस्तः किं तत्र श्लेषेण ? अथ श्लेषः, स एवास्तु किमर्थान्तरन्यासेन ? तदयं न श्लेषो नार्थान्तरन्यासः शुद्धः। न चैतद्द्वयरूपा संसृष्टिरङ्गाङ्गिभावाप्रतीतेरनयोस्तदुदाहरणं चेदमुपमाया एव। [तस्याः] त्वङ्गित्वेनावसायादस्य त्वङ्गताप्रतीतेरित्यत आह—

श्लेषः सर्वासु पुष्णाति प्रायो वक्रोक्तिषु श्रियम् ।
भिन्नं द्विधा स्वभावोक्तिर्वक्रोक्तिश्चेति वाङ्मयम् ॥३६०॥

श्लेषोऽयमुक्तलक्षणः स्वभावोक्तिं जात्यपरपर्यायां मुक्त्वा सर्वासूपमादिषु न कस्याञ्चिदेव, पदार्थस्वभावस्य यथावस्थानात्। अन्यथा तथा तथा परिकल्पनरूपासु वक्रासूक्तिषु श्रियं शोभां पुष्णात्यावहति प्रायो बाहुल्येन। क्वचिदप्रयोगादस्य प्राय इत्याह। तथा चालङ्कारा जातिवर्ज्याः सर्वे श्लेषानुगता एव प्रायः प्रागुदाहृता। जातौ वा क्वचित् प्रयोगात् प्राय इत्युक्तम्। तदयमप्यर्थान्तरन्यासः वक्रोक्तिस्वभावः श्लेषगर्भोऽङ्गतयोपन्यस्त इति। श्लेषैकदेशे एकोऽलङ्कारः। भेदविवक्षया वा अलङ्कारद्वय-मिति द्रष्टव्यम् , यथोक्तं प्राक्। सर्वमिदमलङ्कारजातम् अनेनैव राशिद्वयेन व्यवहार लाघवार्थं संगृह्णन्नाह– वाङ्मयं सर्वमेतदलङ्कारजातं द्विधा, नान्यप्रकारावस्थामवतिष्ठते। कथम्? स्वभावोक्तिर्जातिः पूर्वोक्तलक्षणा यथावस्थितविचित्रपदार्थपरिदीपनरूपा, वक्रोक्तिश्च वस्तुस्वभावस्य तथातथान्यथाभिधानस्वभावा पूर्वोक्तविचित्रप्रभेदा उपमादिरुक्तिश्चेत्यनेन रूपेण द्विधेति प्रकृतम् ॥

॥ इति संसृष्टिः ॥

भाविकत्वमुद्भावयन्नाह—

भाविकत्वमिति प्राहुः प्रबन्धविषयं गुणम् ।
भावः कवेरभिप्रायः काव्येष्वासिद्धि यः स्थितः ॥३६१॥

प्रबन्धः पद्यगद्यमिश्रात्मकस्त्रिविधः सन्तानः प्रबध्यते विरच्यतेऽसाविति। स विषयो यस्य स प्रबन्धविषयः काव्यसमुदायगोचरः। नैकदेशाधिकरणं तं प्रबन्धविषयं गुणं वि[89b]शेषम्। अनुवादोऽयं भाविकत्वमिति। भाविकं नाम स्वार्थिकत्वादस्य विधेः। प्राहुरामनन्ति सूरय इति विधिः। सोऽपि न ज्ञायते कीदृशोऽसौ प्रबन्धविषयो



गुणः यदनुवादेन भाविकत्वं विहितमिति तं प्रभवतः स्वरूपतश्च दर्शयन्नाह– भाव इत्यादि। कवेः प्रबन्धकर्तुरभिप्रायः प्रबन्धनिर्वाहकः प्रयत्नविशेषो विकल्पात्मकः। यदाह– काव्येषु प्रबन्धेषु साध्येषु साधनरूपेण आसिद्धि प्रथमतः प्रभृति प्रबन्धविषयां सिद्धिं समाप्तिमधिकृत्य यः स्थितः तत्त्वव्यापकः स तादृशो भावस्तावत् प्रभवस्तस्य गुणस्य। अत एवासौ प्रबन्धविषयः। प्रबन्धसाधकभावसन्ता[ना]नुवर्तित्वात् , न प्रादेशिकः। ततश्च सर्वालङ्कार[श्रय]भूतोऽसावादिमध्यान्तेषु प्रबन्धमनुवर्तते। एवं प्रभवतस्ताषदुक्तः असौ गुण इति ॥

सम्प्रति स्वरूपतस्तं विभजन्नाह—

परस्परोपकारित्वं सर्वेषां वस्तुपर्वणाम् ।
विशेषणानां व्यर्थानामक्रिया स्थानवर्णना ॥३६२॥

व्यक्तिरुक्तिक्रमवशाद्गम्भीरस्यापि वस्तुनः ।
भावायत्तमिदं सर्वमिति तद्भाविकं विदुः ॥३६३॥

वस्तुनः प्रबन्धार्थस्य समुदायस्य पर्वाण्येव यथा नगरवर्णनादयः। वस्तुनि च तानि पर्वाणीति वा। वस्तुपर्वणां काव्यार्थसंघातसन्धीनाम् अङ्गानि समुदायपर्वणामिव परस्परस्योपकारित्वमन्योन्याङ्गाङ्गिभावेन सापेक्षाणामवस्थानम्। न तु स्वतन्त्राणामयःशलाकानामिव परस्परासंघट्टनम्। तथाभावातिरेके प्रबन्धो नार-भ्येत। ततश्च कथमस्य प्रबन्धविषयता गुणस्य ? प्रबन्धविषयं च यावत् किञ्चिद् विशेष्यं सम्भवति तत्र यानि विशेषणानि तेषां विशेषणानामुपाधीनां व्यर्थानां विगतोऽर्थः प्रयोजनं प्रस्तुते क्वचिदुपयोगो येषां यतो वा तेषां प्रकृतानुपयोगिनां कार्ये विवक्षिते क्वचिदङ्गभावमभजताम् अक्रिया तादृशं कञ्चिदर्थमनपेक्ष्य विशेषणमित्येवा-प्रयोगः। किं तु सार्थकानां प्रकृते क्वचिद् कथञ्चित् उपयोगिनामेव क्रिया कस्यचिद्वस्तुनो यात्रादेः [?] स्थाने समुपनतेऽवसरे प्राप्तकालं वर्णनम्। तादृशं हि वर्णनमतिशोभते। यदाह भारविः—

सुखरतावसरे हि विराजते
[किरातार्जुनीये ५. १६]

इति। न त्वप्राप्तावसरं वर्णयितव्यमित्येवं ज्ञेयम्। अत्र कचिदस्थाने वर्णनं तस्य सौभाग्योपहतत्वाद् गम्भीरस्यापि दुर्बोधस्य न केवलमविषयस्य वस्तुनः धर्मादिरूपस्यार्थस्य प्रस्तावोपनतस्य व्यक्तिः सुखप्रतिपत्तिः। कृताया उक्तेः प्रतिपादनस्य क्रमः प्रकारस्तादृशः करतलाम[50a]लकवत् अर्थप्रकाशनकौशलस्वभावः तस्य वशात् सामर्थ्यात्। अत्र च सर्वत्र भाव एव सत्कवीनां प्रमाणम्। स हि सर्वमीदृशमुचितं विचिनोति, तद्विपर्ययं तु दुर्भगं न स्पृशति, यदाह— भावायत्तमिदं सर्वम्। इतीदमनन्तरोक्तं सर्वं वस्तु पूर्व[व]दुपकारादिलक्षणं विशेषचतुष्टयं भावे प्रबन्धव्यापिनि उचितानुचितविवेकवेधसि मनसि कवेरायत्तं प्रतिबद्धम्, तत्कार्यत्वादिति हेतोः। तत्सर्वमनन्तरोक्तं विदुर्विदन्ति तद्विदः कवयः।

ननु जात्यादिकमपि भाविकमेव, न हि तस्यापि विना भावेन अभिनिर्वृत्तिः। तत्किमिदमेव भाविकम्? उच्यते— पद्येऽप्येवम्। तथापि यो भाव[:] प्राबन्धिको विशिष्टः, तदायत्तमिह भाविकमभिप्रेतम्। अत एवोक्तम्—काव्येष्वासिद्धि यः स्थितः [२.३६१] इति, जात्यादिकं तु प्रादेशिकभावाधीनम्। न हि प्रबन्धानुवर्तिना एकेन भावेन जात्यादिकं जन्यते प्रतिदेशमन्योन्यभावाभिनिवर्त्यत्वात् तस्य। तस्मात् तदन्वर्थैस्तैस्तैरभिधानैर्यथोक्तेन विधिना व्यवह्रियते न भाविकमिति ॥

॥ इति भाविकम् ॥

ये काव्यधर्माः शास्त्रान्तरे स[न्ध्य]ङ्गादि[शब्द]व्यवहृताः त इह तल्लक्षणयोगादलङ्कारेषु संगृहीता इति दर्शयन्नाह—

यच्च सन्ध्यङ्गवृत्त्यङ्गलक्षणाद्यागमान्तरे।
व्यावर्णितमिदं चेष्टमलङ्कारतयैव नः ॥३६४॥

वक्तॄणां[?] वक्तव्यान्तरसमुच्चये सन्धयो— मुखं प्रतिमुखं गर्भोऽवमर्शो निर्वहणमिति पञ्चोक्ताः[1]। तत्र उपक्षेपः परिकरः परिन्यासो विलोभनं युक्तिः प्राप्तिः समाधानं विधानं परिभावना उद्भेदः करणं भेद इति मुखाङ्गानि। विलासः परिसर्पो विधूतं तापनं नर्म नर्मद्युतिः प्रगमनं विरोधः पर्युपासनं पुष्पं वज्रमुपन्यासो

[1] तुल० भारतीयनाट्यशास्त्रं १४. ३७-४७

वर्णसंहार इति प्रतिमुखाङ्गानि। अ[भू]ताहरणं मार्गो रूपमुदाहरणं क्रमः संग्रहोऽनुमानं [प्रार्थना][1] आक्षिप्तकं तोटकमधिबलमु[द्वे]गः संभ्रम इति गर्भाङ्गानि। अपवाद उत्पातः[2] सम्फेटः विद्रवः शक्तिः व्यवसायः प्रसादो द्युतिः खेदो निषेधो विरोध आदानं छलनं प्ररोचनेत्यवमर्शाङ्गानि। सन्धिर्निरोधो ग्रथनं निर्णयः परिभाषणं द्युतिः प्रसाद आनन्दः समय उपगूहनं भाषणं पूर्वभावः काव्यसंहारः प्रशस्तिरिति निर्वहणाङ्गानि।

वृत्तयो—भारती सात्त्वती कैशिकी आरभटी चेति चतस्रः[3]। तासां प्रत्येकं चत्वार्यङ्गानि। तत्र भारत्याः प्ररोचना आमुखं वीथी शिल्पकं चेत्यङ्गचतुष्टयम्। सात्वत्या उत्थापकः परिवर्तकः संलापकः संघात्यश्चेति। कैशिक्या [नर्म] नर्मस्फिञ्जो नर्मस्फोटो नर्मगर्भश्चेति। आरभट्याः संक्षिप्तकोऽवपातो वस्तूत्थापनं संफेटश्चेत्यङ्गचतुष्टयम्।

लक्षणानि—भूषणमक्षरसंघातः शोभा उदाहरणं हेतुः संशयः दृष्टान्तः प्राप्तिः [अभि]प्रायो निदर्शनं निरुक्तकं सिद्धिः विशेषणं गुणातिपातोऽतिशयः तुल्यतर्कः पदोच्चयो दृष्टान्तमुपदिष्टं विचारो विपर्ययो भ्रंशोऽनुनयो माला दाक्षिण्यं गर्हणमर्थापत्तिः प्रसिद्धिः पृच्छा सारूप्यं मनोरथो लेशः संक्षोभो गुणकीर्तनमनुक्तसिद्धिः प्रियवचनमिति षट्त्रिंशदुक्तानि[4]।

एषां तु स्वरूपमिह विस्तरभयादनधिकाराच्च न निर्दिश्यते। तदागमान्तरादेवानुगन्तव्यम्। तदेतदादिर्यस्यान्यस्यापि तादृशस्य लास्याङ्गवीथ्यङ्गादेस्तत्तथा [व्या]वर्णितमधिकारे विस्तरेण अनेकधा चर्चितम्। आगमान्तरेऽन्यस्मिन् शास्त्रे भरतादौ। इदं च सर्वं न केवलं पूर्वोक्तम्। काव्यशोभाकरत्वेन तल्लक्षणयोगादलङ्करणाद् वा अलङ्कार इत्येव। न सन्ध्यङ्गादित्वेन काव्यार्थत्वेन वा पृथगलङ्कारात्। काव्यशोभाकरं हि तथा तादृशं कथमलङ्कारतामतिक्रामेत्? इष्टमनुगतमस्माकं क्रियाकल्प [एतदिति स्वी]क्रियताम्। अतस्तादृशं सर्वमलङ्कारसंगृहीतमिति। नासंग्रहः कश्चिदिहेति भावः। अत एव वक्ष्यति—

संक्षिप्य विस्तरमनन्तमलंक्रियाणाम् [२.३६५]

[1] इयं मातृकायां नास्ति।
[2] अयं नाट्यशास्त्रे नास्ति।
[3] भारतीये नाट्यशास्त्रे २०. १-७२
[4] तत्रैव १६. १-४२

इति । न च काव्यशरीरालङ्कारव्यतिरिक्तः कश्चित् काव्यधर्मः सम्भवति यस्ताभ्यामसंगृहीतः स्यात् । तदिह यथालक्षणमाभ्यां संगृहीतमिति न किञ्चित् चोद्यते ॥

एवं यथाप्रतिज्ञानमलङ्कार[बाहुल्य]वर्जं पूर्वाचार्योपदर्शितपरिमितालङ्कार-विकल्पबीजप्रतिसंस्करणं सम्पाद्य निगमयन्नाह—

पन्थाः स एष विवृतः परिमाणवृत्त्या
संक्षिप्य विस्तरमनन्तमलंक्रियाणाम् ।
वाचामतीत्य विषयं परिवर्तमाना-
नभ्यास एव विवरीतुमलं विशेषान् ॥३६५॥

स इति प्रक्रान्तः एषोऽयं निगम्यमानः । स इति वा पूर्वं प्रतिज्ञातः एष प्रसाधितः । स एष पन्था लक्ष्यलक्षणविकल्परूपो मार्गः । कस्य ? अलंक्रियाणाम् । अलङ्काराणां जात्यादीनां सम्बन्धी विवृतः प्रतिसंस्कृतः । अस्माभिरिति गम्यते । गम्यमानार्थस्य च शब्दस्य प्रयोगं प्रति कामचार [91a] इत्युक्तम् । जात्यादयोऽलङ्काराः सामान्यविशेषलक्ष्यलक्षणप्रभेदतः प्रतिपादिता इति यावत् । कथं पुनरनन्ता अलङ्काराः प्रतिपादयितुं शक्या इत्याशङ्का । यदुक्तम्—

ते चाद्यापि विकल्प्यन्ते कस्तान् कार्त्स्न्येन वक्ष्यति ।
किं तु बीजं विकल्पानां पूर्वाचार्यैः प्रदर्शितम् ।
तदेव प्रतिसंस्कर्तुमयमस्मत्परिश्रमः ॥

[२.१-२]

तदेवानुसरन्नाह—परिमाणेत्यादि । अलंक्रियाणामलङ्काराणां विस्तरं प्रपञ्चं लक्ष्यलक्षण-विकल्पात्मकम् , अनन्तमपरिमितं संक्षिप्य संगृह्य

काव्यशोभाकरान् धर्मानलङ्कारान् प्रचक्षते [ २.१ ]

इति सकलविकल्पव्यापकेन सामान्यलक्षणेन सास्नादिमत्त्वेनेवानन्तं गोप्रभेदं निःशेषं संगृह्य । परिमाणस्य परिमितेर्वृत्त्या सद्भावेन पञ्चत्रिंशदलङ्काररूपेण परिमाणीकृत्य परि[माप्य] इति यावत् । विवृत इति प्रकृतम् । न चैतद् व्याहतमाशङ्कनीयम् । यद्यपरिमितोऽलङ्कारविस्तरः कथमिह परिमित उक्त इति ? योऽसावपरिमितोऽलङ्कार-



विस्तरोऽनुक्तो वर्तते स एवालङ्कारविस्तरः परिमित उक्तस्तज्जातीयत्वादित्यविरोधः । वस्तुतस्तु योऽनुक्तोऽलङ्कारविस्तरोऽपरिमितः सोऽन्य एव । यस्त्वयमुक्तः परिमितो विस्तरः सोऽप्यन्य एव । यदि पुनरेतावानलङ्कारविस्तरः, तदा अनन्ता अलङ्कारा इति विरुद्ध्येत, परिमितत्वादस्य विस्तरस्य । [अत्रो]क्तालङ्कारविस्तरस्याभ्यासानुसारेण तस्याप्य[नुक्ता]लङ्कारविस्तरस्यावगमसम्भवादनन्तोऽलङ्कारविस्तरोऽयं परिमाणवृत्त्या विवृत इत्युक्तम् । यदाह– वाचामित्यादि । ये विशेषालङ्कारा वाचां गिरां विषयं गोचरमतीत्यातिक्रम्य वर्तन्ते, तान् वाचां विषयमतीत्य परिवर्तमानान् वस्तुतो विद्यमानान् इह चानुक्तानिति यावत् । अभ्यासः यथोक्तालङ्कारानुसारी स्वयं काव्यप्रयोगविषयोऽभियोग एव यथावत् कवीनाम्, नान्यत् किञ्चित् विवरीतुं प्रयोगद्वारेण प्रकाशयितुमलं समर्थः । एतन्मार्गानुसारेण हि प्रयोगाभ्यासवतां कवीनां स्वयमेवाक्तिविशेषलक्षणास्तेऽलङ्काराः प्रयोगपथमुप[पद्य]न्ते । ततश्चायमेव मार्गस्तेषाम् अप्यवगमोपाय इत्यनेनैव ते संगृहीताः । अत एवोक्तम्– संक्षिप्य विस्तरमनन्त-मलंक्रियाणां स एष पन्थाः प्रकाशित इति । तस्मादशेषालङ्कारविषयं परिज्ञानमिच्छ-[द्भिर]यं पन्था यथावदभ्यसनीय इति ॥

॥ दण्डिकाव्यलक्षणटीकायां रत्नश्रीनाम्नि द्वितीयोऽर्थालङ्कारपरिच्छेदः ॥

---

३

# दुष्करो नाम तृतीयः परिच्छेदः ।

[92b] तदेवमर्थालङ्कारं परिच्छिद्यानुप्रास[प्रस]ङ्गोक्तलक्षणानुवादेन यमकप्रपञ्चपुरःसरं दुष्करपरिच्छेदमारिप्सुराह—

अव्यपेतव्यपेतात्मा व्यावृत्तिर्वर्णसंहतेः ।
यमकं तच्च पादानामादिमध्यान्तगोचरम् ॥१॥

वर्णानां स्वरव्यञ्जनानां संहतेः समुदायस्य व्यावृत्तिरावृत्तिः पुनरुच्चारणम् । नैकस्य वर्णस्य, तस्या अनुप्रासत्वात् । यथोक्तम्— वर्णावृत्तिरनुप्रासः [१. ५५] इति । तत्प्रसङ्गेन आवृत्तिमेव सङ्घातगोचरां यमकं विदुः [१. ६१] इति कृतलक्षणं यमकम् । तदेवमनूद्य यमकं विधीयते । सा च व्यावृत्तिः [कीदृशी?] वर्णान्तरेणाव्यपेतोऽव्यवहितः व्यपेतो व्यवहितश्चात्मा स्वरूपं यस्या इत्यव्यपेतव्यपेतात्मा । तथा वर्णान्तराव्यवहिता वर्णसंहतेरावृत्तिरव्यपेतयमकम् । या तु व्यवहिता तद् व्यपेतयमकमिति द्विधा यमकं तावद् विकल्प्यते । तच्चैतद् द्विविधं यमकं विषयनिरूपणायामादिश्च मध्यश्चान्तश्च गोचरो विषयोऽस्येत्यादिमध्यान्तगोचरं विज्ञेयम् । कस्य ? पादानां प्रत्येकं चतुर्णां श्लोकावयवानाम् । सापेक्षार्थे गमकत्वात् समासः ॥

पादचतुष्टयस्यादिमध्यान्तभाविनो यावन्तः प्रकाराः सम्भवन्ति तान् दर्शयति—

एकद्वित्रिचतुष्पादयमकानां विकल्पनाः ।
आदिमध्यान्तमध्यान्तमध्याद्याद्यन्तसर्वतः ॥२॥

एकपादयमकस्य द्विपादयमकस्य त्रिपादयमकस्य चतुष्पादयमकस्य [च] विकल्पना विकल्पाः प्रभेदाः कथ्यन्ते भवन्तीति वा शेषः । पादस्यैकस्य पादद्वयस्य पादत्रयस्य पादचतुष्टयस्य वा आदितो वा मध्यतो वान्ततो वा । आदौ मध्येऽन्ते वेति त्रयो विकल्पास्तावत् । मध्यतोऽन्ततश्चादिमं वर्जयित्वेति चतुर्थो विकल्पः । मध्यत आदितश्चान्त्यं विहायेति पञ्चमः । आदितोऽन्ततश्च मध्यं त्यक्त्वेति षष्ठः ।



सर्वत आदौ मध्येऽन्ते चेति सप्तमो विकल्पः । सर्वत इत्यस्यान्ते श्रुतस्य तसः प्रत्येकं सम्बन्धात् । सप्तम्यर्थश्चायम् । तथा च प्रथमं विवृतमादौ मध्येऽन्ते वेति । अन्यत्राप्येवं योज्यम् । यदा च सर्वतो यमकं तदा पादाभ्यासादयो विकल्पा जायन्ते ॥

एते सप्त विकल्पा मौलाः परस्परसङ्करभाजोऽनेकधा प्रसरन्तीति दर्शयन्नाह—

अत्यन्तबहवस्तेषां भेदाः सम्भेदयोनयः ।
सुकरा दुष्कराश्चैव दृश्यन्ते तत्र केचन ॥३॥

तेषां सप्तानां [93a] विकल्पानां सम्भेदः सङ्करो मिश्रत्वमुच्चावचप्रकारः योनिः प्रभवो येषां ते सम्भेदयोनयः । भेदाः प्रकाराः अत्यन्तबहवो भूयांसो भवन्ति । एकत्र श्लोके क्वचिदादियमकं क्वचिन्मध्ययमकं क्वचिदन्तयमकं क्वचिन्मध्यान्तयमकं क्वचिन्मध्यादियमकं क्वचिदाद्यन्तयमकं क्वचित् सर्वत्र इत्येवमेतेऽनेकधा प्रसरन्ति । ते चैते सुखेन क्रियन्ते प्रयुज्यन्त इति सुकराः, तद्विपरीताश्च दुष्करा इति द्विधा पुनः संगृह्यन्ते । तत्र ते सुकरेषु दुष्करेषु च केचन केचिद् भेदा न सर्वेऽतिप्रसङ्गाद् दृश्यन्ते उदाह्रियन्ते ॥

मानेन मानेन सखि प्रणयोऽभूत् प्रिये जने ।
खण्डिता कण्ठमाश्लिष्य तमेव कुरु सत्रपम् ॥४॥

सखि ! प्रिये जने विषयेऽनेन सङ्गमसुखविरोधिना मानेन प्रातिकूल्येन सह प्रणयपरिचयो मा भूत् । तव मानो न कार्य इति यावत् । यदि न मानः कर्तव्यः किमिदानीं क्रियताम् ? येन खण्डिता वञ्चितासि तस्य कण्ठमाश्लिष्य तमेव प्रियं कृतव्यलीकं सत्रपं सलज्जं कुरु विनयवर्त्मना तमेव विलक्षं विधेहि । किं मानेनेति ? शब्दार्थप्रधानमेतद् यमकव्याख्यानं क्रियते, भावार्थचर्चायामतिविस्तरप्रसङ्गात् । इदं प्रथमपादादियमकम् ॥

मेघनादेन हंसानां मदनो मदनोदिना ।
नुन्नमानं मनः स्त्रीणां सह रत्या विगाहते ॥५॥

मदनः कामः रत्या कलत्रेण सह स्त्रीणां मनो विगाहते प्रविशति । किंविशिष्टम् ? हंसानां मदं नुदतां मेघानां नादेन नुन्नो निरस्तो मानोऽस्येति नुन्नमानं मानसं वा अवेहि । तस्मिन्नवकाशमसौ लभते । इदं द्वितीयपादादियमकम् ॥

राजन्वत्यः प्रजा जाता भवन्तं प्राप्य साम्प्रतम् ।
चतुरं चतुरम्भोधिरसनोर्वीकरग्रहे ॥६॥

चत्वारः पूर्वादयोऽम्भोधयः परिक्षे[पा]योगादिसाधर्म्येण रसना मेखला यस्याः तस्या उर्व्या भुवः करो हस्तौ बलिश्चेति श्लिष्टम् । तस्य ग्रहे उपादाने चतुरं भ[वन्तं] प्राप्य प्रजा जना राजन्वत्यः सौराज्ययोगान् जाता अभूवन साम्प्रतमद्येति तृतीयपादादियमकम् ॥

अरण्यं कैश्चिदाक्रान्तमन्यैः सद्म दिवौकसाम् ।
पदातिरथनागाश्वरहितैरहितैस्तव ॥७॥

तवाहितैः शत्रुभिः कैश्चित्पलायमानैररण्यमाक्रान्तम् । उत्सृष्टगृहै[र्वनं] प्रविष्ट[मित्यर्थः] । [93b] अन्यैस्त्वत्कृपाणभ्रमोज्झितप्राणैर्दिवौकसां सद्म स्वर्गमाक्रान्तमारूढम् । किंभूतैः ? पदातिभिः रथैर्नागैरश्वैश्च रहितैस्त्यक्तैः । [अत्रारण्यगमनं स्वर्गगमनं वा भुवि निःस]हायत्वान् । तेन वा [भवत्त]स्तेषामाच्छादनात् । इदं चतुर्थपादादियमकम् ॥

मधुरं मधुरम्भोजवदने वद नेत्रयोः ।
विभ्रमं भ्रमरभ्रान्त्या विडम्बयति किं न्विदम् ॥८॥

अम्भोजमिव वदनमस्या इत्यम्भोजवदना [तस्याः सम्बुद्धिः] । तव नेत्रयोर्विभ्रमं चञ्चलत्वं मधुरं रम्यं भ्रमरा[णां भ्रान्त्या चा]पलेन विडम्बयति अनुकरोति मधुर्वसन्तः किं न्विदं वद ब्रूहि इति कश्चिच्चाटुकारः प्रियामुपलालयति । प्रथमद्वितीयपादादियमकम् ॥

वारणो वा रणोद्दामो हयो वा स्मर ! दुर्धरः ।
न यतो नयतोऽन्तं नस्तदहो विक्रमस्तव ॥९॥

[हे स्मर !] यतो यस्मा[त् नः अस्मान्] अन्तं नाशं नयतः प्रापयतस्तव रणे उद्दामः क्षमो वारणो वा हस्ती वा, हयोऽश्वो वा दुर्धरःसांग्रामिको नास्ति ।



तत्तस्मादहो विचित्रीयते विक्रमस्तव यद् विना रणोपकरण[नाम्भद्भिधाः] आसादिताः त्वयेति प्रथमतृतीयपादादियमकम् ॥

राजितैराजितैस्तैक्ष्ण्येन जीयते त्वादृशैर्नृपैः ।
नीयते च पुनस्तृप्तिं वसुधा वसुधारया ॥१०॥

त्वादृशैः शक्तिसम्पन्नैर्नृपैराजौ रणे तैक्ष्ण्येन शौर्येण राजितैर्दीप्तैर्वसुधा पृथिवी जीयते । पुनस्तदनु वसुनो धनस्य धारया सन्तानेन दीयमानया करणेन हेतुना वा तृप्तिमभिलापपर्यन्तं नीयते च । न केवलं जीयत एव वसुधेत्यत्राप्युक्तम् । प्रथमचतुर्थपादादियमकमिदम् ॥

करोति सहकारस्य कलिकोत्कलिकोत्तरम् ।
मन्मनो मन्मनोऽप्येष मत्तकोकिलनिस्वनः ॥११॥

सहकारस्य कलिका मञ्जरी उत्कलिका उत्कण्ठा उत्तरा प्रबला यस्य [तथा उत्कलि]कोत्तरं [तद्]बहुलं मम मनः करोति । पर्युत्सुकयतीति यावत् । मत्तस्य कोकिलस्य निस्वनः शब्दोऽप्येषो[ऽत्यन्त]मधुरः मन्मनः उत्कलिकोत्तरं करोतीति प्रकृतम् । अत्र द्वितीयतृतीयपादादियमकम ॥

कथं त्वदुपलम्भाशाविहताविह तादृशी ।
अवस्था नालमारोढुमङ्गनामङ्गनाशिनी ॥१२॥

तवोपलम्भे समागमे आशा मनोरथः तस्य विहतौ विघाते इह अस्यां सत्यां तादृशी अभिलापचिन्तनानुस्मृतिगुणकीर्तनोद्वेगविलापोन्माद[मूर्च्छा]व्याधिजडताक्रमेण प्रवृद्धावस्था अङ्गं नाशयतीत्यङ्गनाशिनी दशमी । तादृशीमित्यपि पठ्यते । तत्राङ्गनां तादृशीं त्व[द]नुरागपरवशामिति व्याख्येयम् । [अङ्गनाम्] आरोढुमासादयितुं कथं नालं न समर्था ? आरोहत्येव । नात्र सन्देहः । तदनुकम्प्यतामङ्ग ! वराकी । किं स्त्रीवधपातकदोहदेनेति [94a] द्वितीयचतुर्थपादादियमकम् ॥

निगृह्य नेत्रे कर्षन्ति बालपल्लवशोभिना ।
तरुणा तरुणान् कृष्टानलिनो नलिनोन्मुखाः ॥१३॥

तरुणा वृक्षेण वालैः पल्लवैः शोभमानेन नेत्रे निगृह्य कृष्टान् विक्षिप्तमनसः तरुणान यूनः अलिनो भ्रमरा नलिनेषून्मुखाः प्रवृत्ताः। नेत्रे चक्षुषी निगृह्य दर्शनसुभगतया गृहीत्वा कर्षयन्ति अभिमुखीकुर्वन्ति। उभयदर्शनवशव्याकुलास्तरुणा इति यावत्। अत्र तृतीयचतुर्थपादादियमकम्॥

विशदा विशदामत्तसारसे सारसे जले।
कुरुते कुरुतेनेयं हंसी मामन्तकामिषम्॥१४॥

सरस इदं [सारसं तत्र] सारसे जले, किंभूते? विशतो विगाहमाना आमत्ताः सारसाः पक्षिणो यस्मिन् [तत्र] विशदामत्तसारसे व्यवस्थिता विशदा शुक्ला हंसीयं विरहिजनोद्वेजनीयत्वात् मधुरेणापि कुत्सितेनाविपह्येन रुतेन शब्देन हेतुना करणेन [वा] अन्तकस्य मृत्योरामिषं ग्रासं मां कुरुते, मां हन्तीति यावत्। प्रथमद्वितीयतृतीयपादादियमकं विकल्पितमिदम्॥

विषमं विषमन्वेति मदनं मदनन्दनः।
सहेन्दुकलयापोढमलया मलयानिलः॥१५॥

मलयानिलो ममानन्दन पीडाहेतुः अपोढम् अपगतं मलम् अत इति अपोढमलया विशदया इन्दोः कलया सह मदनं कामं नाम विषमं विषम् आशुनाशकत्वात्। अन्वेति अनुसरति उपनयती[?]त्यर्थः। अन्वेत्यनुकरोतीति वा व्याख्येयम्, मलयानिलश्चन्द्रकला च तादृगत्यन्ततापकरत्वात् मदनायत्तौ इत्यर्थः। प्रथमद्वितीयचतुर्थपादादियमकमिदम्॥

मानिनी मा निनीषुस्ते निषङ्गत्वमनङ्ग मे।
हारिणी हारिणी शर्म तनुतां तनुतां यतः॥१६॥

अनङ्ग! तव निषङ्गत्वं तूणीरत्वं शरनिकरपूरयोगेन मा मां निनीषुर्नेतुम् इच्छन्ती मानिनी काचिद् विवक्षिता स्त्री हारिणी मुक्तालतालंकृता, अनेना[द्वा]यं रूपमुक्तम्। स्वभावरूपगुणयोगाच्च मनोहरा मे मम तनुतां कृशत्वं प्राणसन्देहं यतः गच्छतः शर्म समागमसुखं जीवितं तनुतां करोतु। प्रसीद, आज्ञापयैनाम्। देव! त्वमेवास्याः प्रभवसीति प्रथमतृतीयचतुर्थपादादियमकं विकल्पितम्॥



जयता त्वन्मुखेनास्मानकथं न कथं जितम्।
कमलं कमलङ्कुर्वदलिमदलि मत्प्रिये॥१७॥

मम प्रिये मत्प्रिये! तव मुखेनास्मानेवं मुखरान् जयता वशीकुर्वता अकथं न विद्यते कथास्येत्यवचनम्, विकासयोगेन दलानि प्रशस्तानि पत्राण्यस्मिन् इति दलि। प्रवुद्धमिति यावत्, अतश्च मकरन्दलोलुपमधुप[94b]योगात्, अलयोऽस्मिन् विद्यन्ते इति अलिमत्। एवं च गुणयोगात् कमुदकमाश्रयमलङ्कुर्वत् भूषयन् कमलं पद्मपर्यायमपि कथमवचनं [सत्] न जितं जितमेवेति कमलेन मुखमुपमितम्। अत्र द्वितीयतृतीयचतुर्थपादादियमकमाविष्कृतम्॥

रमणी रमणीया मे पाटला पाटलांशुका।
वारुणीवारुणीभूतसौरभा सौरभास्पदम्॥१८॥

रमणी स्त्री काचित् अभिमता रमणीया मनोज्ञा मे मम। किंभूता? पाटलपुष्पवदापाटलमरुणमंशुकं यस्याः सा। तथा सौरभस्य सुगन्धितायाः कृत्रिमस्य सहजस्य चास्पदं भूमिः। कथमिव तादृशी दृश्यते? अरुणीभूता सौरी सूर्यसम्बन्धिनी भा दीप्तिर्यस्याः सा तथाभूता वारुणी पश्चिमा दिगिव रमणीयेति प्रकृतम्। पादचतुष्टयादियमकमुक्तम्॥

इति पादादियमकमव्यपेतं विकल्पितम्।
व्यपेतस्यापि वर्ण्यन्ते विकल्पास्तस्य केचन॥१९॥

आदियमकमव्यपेतं विकल्प्योपसंहरति– इत्युक्तेन प्रकारेण पादानामेकशः द्विशः त्रिशः चतुर्णां च, आदौ आदिर्वा यमकमव्यपेतमव्यवहितं विकल्पितमनेकधा विभक्तम्। तस्य यमकस्य व्यपेतस्य व्यवहितस्यापि, न केवलमव्यपेतस्य विकल्पाः प्रभेदाः केचित् कतिपये, न सर्वे, वर्ण्यन्त उदाह्रियन्त इति॥

मधुरेणदृशां मानमधुरेण सुगन्धिना।
सहकारोद्गमेनैव शब्दशेषं करिष्यति॥२०॥

एणदृशां स्त्रीणां नानाप्रियजनवैमुख्यं शब्द उपमानेत्यादिवाचकः शेषोऽवशिष्टः, अर्थस्य विगमात् यस्य तं शेषमसन्तं करिष्यति मधुर्वसन्तः। केन? मधुरेण

गनोज्ञेन सुगन्धिना सुरभिणा सहकारस्योद्गमेनाङ्कुरेणैव । किं बहुना ? स हि तादृशो मानविरुद्धरागमुदनयन मानस्य शैथीकरणे करणत्वं प्रतिपद्यते । प्रथमद्वितीयपादादिवर्तिव्यपेतयमकम् ॥

करोऽतिताम्रो रामाणां तन्त्रीताडनविभ्रमम् ।
करोति सेर्ष्यं कान्ते वा श्रवणोत्पलताडनम् ॥२१॥

रामाणामतिताम्रः करः पाणिः तन्त्रीणां वीणागुणानां ताडनं वादनमेव विभ्रमं लीलां करोति विधत्ते, कान्ते पत्यौ विषये श्रवणोत्पलेनावतंसकुवलयेन ताडनं प्रहारं वा सेर्ष्यमीर्ष्यया सह वर्तमानं सासूयं करोति इति प्रकृतम्, तादृशमेव हि कर्म तस्य योग्यम् । प्रथमतृतीयपादादिविषयं यमकमिदम् ॥

सकलापोल्लसनया कलापिन्यानुनृत्यते ।
मेघाली नर्तिता वातैः सकलापो विमुञ्चति ॥२२॥

वातैर्नर्तिता मन्दमन्दमान्दोलिता [95a] मेघानामाली माला सकलाः सर्वाः न काश्चिदेव । अपो जलानि विमुञ्चति वर्षति, कलापस्य बर्हभारस्योल्लसनं विस्तारः । तेन सह वर्तते सकलापोल्लसनया कलापिन्या मयूराङ्गनया प्रमुदितया अनुनृत्यते वृष्ट्यनन्तरं नत्यते । प्रथमचतुर्थपादादिगोचरं व्यपेतयमकमेतत् ॥

स्वयमेव गलन्मानकलि कामिनि ते मनः ।
कलिकामद्य नीपस्य दृष्ट्वा कां नु स्पृशेद् दशाम् ॥२३॥

हे कामिनि ! ते तव मनश्चित्तं स्वयमात्मनैव तादृश[द्रावक]वस्तुनो दर्शनम् अन्तरेण गलति वर्तमानो मान एव कलिर्वर्तते अर्थान्तरम् । अद्य प्रावृषि नीपस्य तरोः कलिकां साक्षादिवोत्कलिकां दृष्ट्वा कां कीदृशीं दशामवस्थां स्पृशेद् गच्छेद् इति न विद्मः । सुतरां रागवक्तव्यतां यास्यतीति भावः । नु वितर्के । द्वितीयतृतीयपादादिव्यपेतयमकम् ॥

आरुह्याक्रीडशैलस्य चन्द्रकान्तस्थलीमिमाम् ।
नृत्यत्येष चलच्चारुचन्द्रकान्तः शिखावलः ॥२४॥



एष शिखावलो मयूरः चन्द्रकस्य बर्हस्यान्तोऽग्रभागः लसन्नाकम्पमानश्चारुः शोभनः चन्द्रकान्तोऽस्येति लसच्चारुचन्द्रकान्तः आक्रीडशैलस्य क्रीडापर्वतस्य सम्बन्धिर्नामिमां सन्निहितचन्द्रकान्तस्य मणेस्तद्रूपां वा स्थलीं भूमिमारुह्य नृत्यति । द्वितीयचतुर्थपादादिव्यपेतयमकम् ॥

उद्धृता राजकादूर्वी ध्रियतेऽद्य भुजेन ते ।
वराहेणोद्धृता यासौ वराहेरुपरिस्थिता ॥२५॥

वराहेण क्रोडवपुषा विष्णुना उद्धृता जलधेर्वरस्योत्तमस्याहेः शेषस्योपरिस्थिता च या असौ सर्वा उर्वी पृथिवी राजकाद् राजसमूहाद् उद्धृता विजित्य गृहीता, अद्य सम्प्रति ते भुजेन बाहुना सर्वाभिसारिणा ध्रियते यथान्यायं परिपाल्यते । तृतीयचतुर्थपादादिव्यपेतयमकम् ॥

करेण ते रणेष्वन्तकरेण द्विषतां हताः ।
करेणवः क्षरद्रक्ता भान्ति सान्ध्यघना इव ॥२६॥

ते तव करेण भुजेन [रणेषु] द्विषतां शत्रूणामन्तं नाशं करोत्यन्तकरेण हता [जनित]क्षताः करेणवो द्विषतां हस्तिनः क्षरद्रक्तं रुधिरमेषामिति क्षरद्रक्ताः तथा सन्तः सन्ध्यानुरक्ता घनाः सान्ध्यघना इव सरागधरापयोधरा इव भान्ति । प्रथमद्वितीयतृतीयपादादिव्यपेतयमकम् ॥

परागतरुराजीव वातैर्ध्वस्ता भटैश्चमूः ।
परागतमिव क्वापि परागततमम्बरम् ॥२७॥

परा शत्रुभूता चमूः सेना भटैः शूरैर्ध्वस्ता भग्ना । कथमिव ? अगे पर्वते [स्थितानां] तरूणां राजिः संघातो वातैरिव । अत्र च व्य[ति]करे [क्वापि] कचित् स्थानेऽनिर्दिष्टे परागैः पांशुभिः समरसंक्षोभप्रभवैस्ततं व्याप्तमम्बरमाकाशमिदं परागतं विद्रुतं लीनमिवाभूत् । एवमतितुमुलं [95b] रणमभवत् । प्रथमतृतीयचतुर्थपादादिव्यपेतयमकम् ॥

पातु वो भगवान् विष्णुः सदानवघनद्युतिः ।
स दानवकुलध्वंसी सदानवरदन्तिहा ॥२८॥

स त्रैलोक्यविख्यातः विष्णुर्भगवानिति पूजावचनम्। वो युष्मान पातु अपायाद् रक्षतु सदा नित्यम्। नवस्य नूतनस्य जलगर्भस्य घनस्य मेघस्येव द्युतिर्दीप्तिः अस्येति नवघनद्युतिः। श्याम इति यावत्। दानवानामसुराणां कुलं ध्वंसयति इति दानवकुलध्वंसी। सह दानेन मदेन वर्तते सदानो मत्तः। वरश्चासौ दन्ती च सदानश्चासौ वरदन्ती च कुवलयापीडादिः तं हतवान् सदानवरदन्तिहा। द्वितीय-तृतीयचतुर्थपादादिव्यपेतयमकम्॥

कमलेः समकेशान्ते कमलेर्ष्याकरं मुखम्।
कमलेख्यं करोषि त्वं कमलेवोन्मदिष्णुषु ॥२९॥

ते तव कं शिरः। समाः केशा अस्येति समकेशम्। कस्य? अलेर्भ्रमरस्य अलिन इत्यर्थः। भृङ्गस्येव श्यामशिरोरुहं तव शोभतेतराम्। मुखं च ते कमलेन पद्मेन सहेर्ष्याकरम्। तत्साम्यात् कमलमिव मुखं विराजत इत्यर्थः। एवं वराङ्गी त्वं कमला लक्ष्मीरिवोन्मदिष्णुषु ये केचित् कामोन्मादशीलास्तेषु मध्ये कं नाम पुरुषम् अलेख्य-मगणनीयमुन्मदिष्णुतया करोषि? यस्तज्जां शोभामीदृशीं पश्यति तं सर्वमेवोन्मा-दयसि न किञ्चिन्मुञ्चसीत्यर्थः। पादचतुष्टयादिव्यपेतयमकमेकजातीयम्॥

मुदा रमणमन्वीतमुदारमणिभूषणाः।
मदभ्रमदृशः कर्तुमदभ्रजघनाः क्षमाः ॥३०॥

अदभ्रजघनाः स्त्रियो मदेन यौवनमधुपानादिसम्भूतेन। भ्रमन्त्यो दृशो नेत्राण्यासामिति मदभ्रमदृशः। उदारा महार्हा मणयः पद्मरागेन्द्रनीलादयः रत्नमेखलादिस्वभावा भूषणमलङ्कारो यासामिति उदारमणिभूषणाः सत्यः। मुदा प्रीत्या अन्वितं युक्तं रमणं वल्लभं कर्तुं क्षमाः शक्नुवन्ति। रमणमतितरां मोदयन्तीति यावत्। पादचतुष्टये पादादिव्यपेतयमकमेकजातीयम्॥

उदितैरन्यपुष्टानामारुतैर्मे हृतं मनः।
उदितैरपि ते दूति! मारुतैरपि दक्षिणैः ॥३१॥

हे दूति! अन्यपुष्टानां कोकिलानां सम्बन्धिभिरारुतैः शब्दैरुदितैः सम्पन्नैः मे मम मनो हृतं गृहीतम्। न केवलमेभिः। ते तवोदितैरालापैः पेशलैर्दक्षिणैर्मारुतैरपि



पवनैश्च हृतमिति प्रकृतम्। प्रथमतृतीययोर्द्वितीयचतुर्थयोश्च पादयोरादितो व्यपेत-यमकम्॥

सुराजितह्रियो यूनां तनुमध्यासते स्त्रियः।
तनुमध्या क्षरत्स्वेदसुराजितमुखेन्दवः ॥३२॥

स्त्रियो यूनां तनुमङ्गमध्यासते अधिशेरते पुरुषायितयोगेन। किंभूताः? सुरया मदिरया जिता उत्सा[96a]रिता ह्रीस्त्रपा अस्यामिति सुराजितह्रियोऽत्यन्तमत्ताः। तनु क्षामं मध्यमुदरमासामिति तनुमध्याः, क्षरता स्वेदेन श्रमजलेन मुक्ताजालकेनैव सुष्ठु राजितमलंकृतं मुखमिन्दुकान्त्यादिना आसामिति क्षरत्स्वेदसुराजितमुखेन्दवः। द्वितीय-तृतीययोः प्रथमचतुर्थयोश्च पादयोरादितो व्यतेतयमकम्॥

इति व्यपेतयमकप्रभेदोऽप्ययेष दर्शितः।
अव्यपेतव्यपेतात्मा विकल्पोऽप्यस्ति तद्यथा ॥३३॥

एवं विकल्प्य निगमयति– इत्युक्तेन विधिना व्यपेतस्य यमकस्य प्रभेदोऽपि विकल्पश्चैव प्रकृतो दर्शित उदाहृतः। न केवलमव्यपेतमयमकविकल्प इति अपिशब्दे-नाचष्टे। अव्यपेतव्यपेतश्चात्मा स्वभावो व्यामिश्रो यस्य विकल्पस्य, प्रकरणाद् यमक-सम्बन्धिनः, सोऽप्यस्ति, न केवलमुक्तः शुद्धः। अस्येति पाठे अस्य यमकस्य सम्बन्धी विद्यत इति गम्यते। कीदृशोऽसौ? तद्यथेत्युदाहरति॥

सालं सालम्बकलिकासालं सालं न वीक्षितुम्।
नालीनालीनवकुलानाली नालीकिनीरपि ॥३४॥

सा आली सखी काचिद् विवक्षिता विरहातुरा वीक्षितुं न अलं [न] शक्नोति, किम्? आलम्बनमालम्बः सह तेन वर्तते सालम्बा आलम्बमानाः समन्ततोऽवरूढा इत्यर्थः। सालम्बाः कलिका यासां सालानां शाखानां ताः सालम्बकलिकासाला यस्य सालस्य तरुविशेषस्य सर्जस्य तमीक्षितुं विरहज्वरसम्भूतामनोरोचकत्वा[न्ना]लम्। सालम्बाः कलिका एव परिक्षेपसाधर्म्येण सालः प्राकारो यस्येत्यपि व्याख्यायते। न केवलमेवम्। आलीनाः श्लिष्टा वकुलाः केसरतरवः पुष्पसमृद्धियोगाद् यैरित्यालीन-वकुलान् अलीन् भ्रमरानपि पूर्ववद्वीक्षितुं नालमिति प्रकृतम्। नालमस्यास्तीति

नालीकं पद्मम् । अन्येषां दृश्यत इति दीर्घत्वम् । तद्विद्यते आसामिति नालीकिन्यः पद्मिन्योऽपि वीक्षितुं नालमिति प्रकृतम् । दुष्करं वराकी जीविष्यतीति काचिद् विरहिणीं सखीमुद्दिश्य कश्चिदेवं वक्तीति प्रथमद्वितीययोस्तृतीयचतुर्थयोश्च पादयोरादितोऽव्यपेतव्यपेतं यमकम् ॥

कालं कालमनालक्ष्यतारतारकमीक्षितुम् ।
तारतारम्यरसितं कालं कालमहाघनम् ॥३५॥

कालं समयं काला महान्तो घना अस्मिन्निति कालमहाघनम् । विपुलनील-जलदम् । तारस्य भावस्तारता उच्चैस्तरत्वम् । तया गाम्भीर्ययोगेन रम्यं कान्तं रसितं गर्जितं मेघसम्बन्धि यस्मिन्निति [96b] तारतारम्यरसितं गम्भीरघनगर्जितगर्भम् । अनालक्ष्यास्तिरोहिताः, मेघपिहितत्वात् । तारा उज्ज्वलास्तारका नक्षत्राणि अस्मिन्निति अनालक्ष्यतारतारकं कालं विरहिणि जने कृतान्त[सदृश]मतिदुःसहत्वाद् वीक्षितुं का नाम स्त्री संयुक्ताऽपि प्रागेव वियुक्ता । अलं शक्नोति ? नैव काचित् । इति प्रावृष उत्कण्ठाकारित्वमुद्भावितम् । प्रथमचतुर्थयोर्द्वितीयतृतीययोरादितोऽव्यपेतव्यपेतयमकं नैकजातीयम् ॥

याम यामत्रयाधीनायामया मरणं निशा ।
यामयाम धियास्वात्यायया मया मथितैव सा ॥३६॥

यामानां त्रयं त्रयोः प्रहराः । तत्राधीन आयत्त आयामो दैर्घ्यं यस्यास्तया निशा रात्र्या वर्धायमाणया हेतुभूतया मरणमनुयामो गच्छामो वयं भवदर्थे । तन्नेदमस्मान् दुनोति । किं त्विदमतिकष्टम्– यामङ्गनामहं गतवानस्मि सेदानीमसूनामार्तिं पीडामायातीत्यस्वात्यायया प्राणार्तिदुःखनिर्वेशा[1] । मया अधिया तत्परित्यागात् दुर्बुद्धिनेदृशेन मया सा मथितैव हतैव । नात्र सन्देहः । न हि सा मद्विरहिता जीवति वराकी । स्वविरहदुःखनिमित्तत्वात् तन्मरणस्य मया मथितैवत्युक्तम् । एवं विपद्यमानेन मया सह सापि वराकी मथिताऽनया निशेति वा योज्यम् । एवं वियुक्तः कश्चित् कामी प्रियामनुशोचति । पादचतुष्टयादियमकं व्यपेतमव्यपेत[मेक]रूपम् ॥

1 निर्वेशस्तु पुमान् भोगे वेतने मूर्च्छनेऽपि च इति मेदिनी ॥



पादादियमकविकल्पमुपसंहरति –

इत्यादिपादयमकविकल्पस्येदृशी गतिः ।
एवमेव विकल्प्यानि यमकानीतराण्यपि ॥३७॥

इत्युक्तेन प्रकारेण आदिश्चासौ पादश्च, अवयवे समुदायोपचारात् । तत्र यमकं पादादियमकमित्यर्थः । तस्य विकल्पः प्रभेदः । तस्याव्यपेतस्य व्यपेतस्य च गतिः स्वरूपमीदृश्येवंविधा दर्शितेति शेषः । आदिपादयमकवत् मध्यान्तपादयमकमनुगन्तव्यमित्यतिदिशति– एवमादिपादयमकविकल्पन्यायेनैव इतराणि मध्यान्तवर्तीन्यपि, न केवलं पूर्वाणि । यमकानि सुकराणि प्रभेदानि, स्वयमनुगन्तव्यानि, दिशस्तादृशो दर्शितत्वात् ।

तानि चैवं विकल्पनीयानीति—

प्रियां सखे ! सखेदां तामनुनीय कथञ्चन ।
आनय त्वरितं कुर्मः कर्म भूयो न तादृशाम् ॥

जितेन्द्रियतयासाद्य [97a] सदायति यतिश्रियम् ।
लोकद्वयेऽपि लोकोऽयं त्वयि शासति नन्दति ॥

गत्वा देशान्तरं वित्तं नाहमर्जितुमीश्वरः ।
प्रिये विना विनाशं त्वामसवो यान्ति मे ध्रुवम् ॥

त्यज मानधने मानं घनगर्जितडम्बरः ।
किं करिष्यति कालोऽयं प्रियावृत्तिवृत्तिश्रियः ॥

[वरं तथा तथागतो ददातु] येन दुर्जयाः ।
जीयन्ते विषया एते विविधामयहेतवः ॥

शूरास्ते नयनिष्णाता व्यसनप्रभवं भवम् ।
ये जयन्ति महात्मानः प्रजारक्षणदीक्षिताः ॥

सत्यपावित[राज्य]स्य राजन् सततमित्यसौ !
द्विषां भयङ्करकरस्तव कल्पद्रुमायते ॥

पद्भिन्नम्य वः पातु पादः पद्दोपविद्रिपः ।
जगद्विजयविख्यातं बलं येनाजितं जितम् ॥

एवं द्विचतुष्पादमध्यान्तयमकं विकल्पनीयम् ॥

तान्यपि किं न विकल्प्यन्ते इति चेदाह—

न प्रपञ्चभयाद् भेदाः कार्त्स्न्येनाख्यातुमीप्सिताः ।
दुष्कराभिमता एव दर्श्यन्ते तत्र केचन ॥३८॥

भेदा यमकविकल्पाः सुकराः कार्त्स्न्येन साकल्येन [न] लक्षिताः [यतः] पाद-मध्यान्तभाविनोऽपि आख्यातुं दर्शयितुं [न] ईप्सिता नेष्टा अस्माभिः । कुतः ? प्रपञ्चेति ग्रन्थविस्तरभयाद् हेतोः । मा भूदतिविस्तर इति संक्षिप्तकाव्यलक्षणप्रणयन-प्रतिज्ञानात् । तस्मात् केचिदेव भेदाः प्रकाराः दर्शिताः । इदानीं तु तत्र यमकेषु दुष्करत्वेन दुष्करा इत्येवाभिमता इष्टा दुष्करा एव न सुकरा अपि भेदा मध्ययमका-दिविकल्पाः केचन कियन्तो, न सर्वे प्रपञ्चभयात् निदर्श्यन्ते ॥

स्थिरायते यतेन्द्रियो न हीयते यतेर्भवान् ।
अमायते यतेऽप्यभूत् सुखाय तेऽयते क्षयम् ॥३९॥

स्थिरा अनपायिन्यः, तत्कारणानुष्ठानाविच्छेदात् । आयतिरुभयलोकाभ्युदय-रूपा अस्येति स्थिरायते इत्यामन्त्रणमेतत् कस्यचित् । अन्यकार्यान्निरुद्धानि संवृतानि इन्द्रियाणि बुद्धीन्द्रियाणि चक्षुरादीनि कर्मेन्द्रियाणि पादादीनि वा येनेति यतेन्द्रियो भवान् यतेर्मुनेर्न हीयते नावकृष्यते यतेन्द्रियत्वादेव । न केवलमेतत् । न विद्यते माया परवञ्चना यस्य अमायस्तस्य भावोऽमायता [निःशाठ्यं] परोपकारिता च, तव इयते एतावते महते क्षयं नाशम् अयते अगच्छते स्थिराय सुखाय कामायेति चित्तानुग्रहाय नित्यसुखार्थमभूत् । सर्वत्र सम्पन्नो भवान् । न क्वचिदपि विपन्न इत्यर्थः । [97b] पादचतुष्टयमध्ययमकमेकरूपमव्यपेतात्मकमत एवेदृशं दुष्करम् ।

सभासु राजन्नसुराहतैर्मुखै-
र्महीसुराणां वसुराजितैः स्तुताः ।
न भासुरा यान्ति सुरान्न ते गुणाः
प्रजासु रागात्मसु राशितां गताः ॥४०॥



हे राजन्, सभासु परिषत्सु महीसुराणां ब्राह्मणानां मुखैः किम्भूतैः ? सुरया हतैरिति, न तथा असुराहतास्तैरमद्यदूषितैः पवित्रैः । वसुना धनेन यथाकामं प्रतिपादितेन राजितैः प्रीतियोगात् विकसितैः कर्तृभूतैः स्तुता वर्णितास्ते तव त्यागसत्त्वशौर्यादयो भासुराः, दोषासङ्करादुज्ज्वलाः परिशुद्धाः प्रजासु इह लोकेषु रागोऽनुरक्तिर्नृपविषय आत्मा स्वभावस्तत्प्रधानत्वाद् यासामिति रागात्मसु मन्त्रानुरक्तासु विषये राशितां प्रचयतामभिव्याप्तियोगेन गता मर्त्यलोकं सकलं व्याप्य कीर्तिद्वारेण सुरान् देवान् न न यान्ति किं तु यान्त्येव । स्वर्गेऽपि प्रसिद्धास्ते इत्यर्थः । चतुष्पादमध्ययमकमेकरूपं व्यपेतमिति ॥

तव प्रिया सच्चरिताप्रमत्त या
विभूषणं धार्यमिहांशुमत्तया ।
रतोत्सवामोदविशेषमत्तया
न मे फलं किञ्चन कान्तिमत्तया ॥४१॥

हे सच्चरिताप्रमत्त इति सरोषं विरुद्धलक्षणमामन्त्रणम् । दुर्वृत्तप्रमत्तेति गम्यते । सहस्राक्षोऽन्ध इति यथा । असच्चरिते विप्रिये वा अप्रमत्ता अवहिता असच्चरिताप्रमत्त व्यलीकशील इति संबोध्यते । या तव प्रिया वल्लभा तया रतमेवोत्सवस्तत्र स एव वा आमोदविशेषः प्रीत्यतिशयः तेन मत्तया गर्वितया । अंशवोऽस्मिन् सन्तीत्यंशुमद् भासुरं [वि]भूषणं मेखलादिकं धार्यमङ्गे निवेश्यम् । तस्याः प्रसाधनं सफलं किमस्माकं तेन विफलेन भारमात्रेण ! कान्तिमत्तया विभूष[णोत्थया] मे मम न किञ्चित् फलं प्रयोजनमस्ति । एवमप्यहं तव द्वेष्येव । तव परवशस्य । इहेति वाचोयुक्तौ । इह वा प्रस्तावे, काचिदङ्गना प्रियं प्रस्तावे कचित् प्रसाधने नियुञ्जानं एवमीर्ष्यति । पादचतुष्टयान्तयमकमेकरूपव्यपेतमिति ॥

भवादृशा नाथ ! न जानते नते
रसं विरुद्धे खलु सन्नतेनते ।
य एव दीनाः शिरसा नतेन ते
चरन्त्यलं दैन्यरसेन तेन ते ॥४२॥

हे नाथ स्वामिन ! भवादृशास्त्वद्विधा महात्मानः नतेः परप्रणामस्य रसं स्वादं कीदृशोऽसाविति न जानते न विदन्ति । न नमन्तीति यावत् । किं कारणम् ? खलु यस्मात् सन्नोऽवसन्नो दुर्गतस्तस्य भावः सन्नता । इनस्य भाव इनता । सन्नतेनते दौर्गत्यैश्वर्ये नाम विरुद्धे परस्परव्याहते । [98a] यदि सन्नः कथमिनः ? अथेनः कथं सन्नः ? तादृशश्चे[नो] नातिरसज्ञः [सन्नतायाः] इति भावः । त्वं चेनः तस्माद् भवादृशा नते रसं न जानत इति निगमनीयम् । के तर्हि नतिरसज्ञा इत्याह—य इत्यादि । य एव केचिद् दीना दुर्गतास्त एव ते तवेनस्य [सविध इति शेषः] नतेन सप्रणिपातेन शिरसा पूर्वोक्तेन दैन्येन कार्पण्येन तद्विधास्वाद्यत्वाद् रसेन लक्षिताः सन्तोऽल म[त्य]र्थं चरन्ति प्रवर्तन्ते । ऐश्वर्यं न क्वचिन्नमति । दारिद्र्यमेव सर्वत्र प्रणिपतति इति पिण्डार्थः । चतुष्पादान्तयमकमेकरूपमव्यपेतात्मकमिति ॥

लीलास्मितेन शुचिना मृदुनोदितेन
व्यालोकितेन लघुना गुरुणा गतेन ।
व्याजृम्भितेन जघनेन च दर्शितेन
सा हन्ति तेन गलितं मम जीवितेन ॥४३॥

लीलास्मितेन विलासहसितेन शुचिना विशदेन मृदुना कोमलेनोदितेनालापेन लघुना लोलेन च व्यलोकितेन वीक्षितेन गुरुणा मन्थरेण गतेन गमनेन व्याजृम्भितेन विस्तीर्णेन जघनेन नितम्बेन च दर्शितेन सर्वर्णितेन मन्मथशस्त्रप्रकरायमाणेन सा काचिदङ्गना हन्ति । प्रदत्तेन घातेन मर्माविधहेतुना गलितं विगतं मम जीवितेन । नान्यदिह किञ्चित् कारणमिति कश्चित् कामातुरो विरौति । चतुष्पादमध्यान्तयमकमेकरूपं व्यपेतम् ॥

श्रीमानमानमरवर्त्मसमानमान-
मात्मानमानतजगत्प्रथमानमानम् ।
भूमानमानयति यः स्थितिमानमान-
नामानमानम तमप्रतिमानमानम् ॥४४॥

श्रीमान् नित्यं लक्ष्म्या युक्तः । न क्वचिदेकत्र[स्थः] सर्वमयत्वादितरमान् विभुरिति यावत् । स्थितिमान् सदा स्थित्यनुगतः नित्य [इत्यर्थः] । एवंभूतो य आत्मानं



स्वभावं भूमानं बहुतां विश्वरूपत्वात् । आनयति प्रापयति । किंभूतम् ? अमरवर्त्मना [आकाशेन समानं तुल्यं मानं प्रमाणं यस्येत्यमरवर्त्मसमानमानम आकाशवद्प्रमाणम् । आनते भक्तिमति जगति जनेषु प्र[थ]मानो विजृम्भमाणो मानः पूजा यस्येत्यानतजगत्प्रथमानमानं जगत्पूज्यम् । आनते जगति [प्रथमानः] प्रादुर्भवन् मानोऽनुग्रहो य[स्य] इति [वा] योज्यम् । तमेवंविधं विष्णुमानमत हे जनाः[1] [इति शेषः] । पुनः किंविशिष्टम् ? अमानान्यपरिमितानि नामानि यस्ये[त्य]माननामानं सर्वमयत्वादनन्ताभिधानम् । अप्रतिमानोऽनुपमः मानोऽभ्युन्नतिरस्येत्यप्रतिमानमानम् । [98b] क्वचिदानमतेति पाठः । तत्र बलिबन्धने भुवं मितवन्तं भूमानम् आनानां प्राणिनां [मतं] शरणतया इष्टमात्मानं परपुरुषं विष्णुम् । तमित्यर्थाद् य इत्युपात्तत्वात् । आनमत हे जना इति व्याख्येयम् । शेषं समानम् । चतुष्पादमध्यान्तयमकमेकरूपमव्यपेतव्यपेतात्मकम् ॥

सारयन्तमुरसा रमयन्ती
सारभूतमुरुसारधरा तम् ।
सारसानुकृतसारसकाञ्ची
सा रसायनमसारमवैति ॥४५॥

सा काचिदभिमता स्त्री सारभूतमुत्कृष्टमुरुसारं सुवर्णं भूषणीकृतं धारयतीति मुरुसारधरा । उरुसारधरेति पाठे- उरुसारं स्त्रीजनोचितं गुणोत्कर्षं धारयतीति व्याख्येयम् । सहारसेन रणितेन वर्तन्त इति सारसा पक्षिणः[2] । सारसै रसद्भिरनुकृता तुल्या तत्समानशब्दत्वात् सारसकाञ्ची मेखला यस्या इति सारसानुकृतसारसकाञ्ची तमिष्टं कञ्चित् । पाठान्तरे- सारभूतं नागरकवृत्तसम्पन्नम् । सारयन्तं रसादुपरमयन्तम् । उरसा पयोधरभारेण परिरम्भेण रमयन्ती रन्तुं प्रयुञ्जाना आत्मना सुखयन्ती वा, रसायनमजरत्वादिसुखयोगमपि असारमल्पमेवेति मन्यते । सुरतसुखमेव भृशं बहु मन्यते । तथाविधो हि तदाभिमानो [जा]यते । चतुष्पादादिमध्ययमकमेकरूपं व्यवहितम् ॥

---

१. विष्णु मानमं जे जनमित्यादर्शे ।
२. संज्ञिनेत्यादर्शे ।

v.l. sārabhūtam urusāradharā tam
statt sārabhūta-muru-sāradharā tam

नयानयालोचनयानयानया–
नयानयान्धान् विनयानयायते ।
न यानयासीर्जिनयानया नया–
नयानयास्तं जनयानयाश्रितान् ॥४६॥

अनया न विद्यतेऽयो विगमो यस्या इति । अनयाऽनया स्थिरा आयतिरभ्युदयो यस्येत्यनयायते ! आनयने प्राप्तौ[1] । अन्धान[वलोकना]शक्तान् । विनय नयाभिज्ञान् नयानयसमर्थान् विधेहि । कथं ? नयस्य त्रिवर्गोपायस्यानयस्य तद्विपर्ययस्य चालोचन[ा] विवेचना । तया नयानयालोचनया । अनया अपरोक्षया हेतुभूतया करणेन वा । अपि च यानयानहितोपायान् न अयासीः न प्राप्तवानसि तान्नयान् । आनयनमानयः प्राप्तिस्तमाश्रितान् प्राप्तियुक्तान् प्राप्तान् जनय कुरु । आनयेति यावत् । कथम् ? जिनस्य तथागतस्य यानं यान्ति प्राप्नुवन्ति स्मरन्त्यनेन हितमिति आगमः । तं याति यथावद् वेत्तीति जिनयानयास्त्वम् । अतश्च प्रज्ञाबलादेव हितप्राप्तेर्न कचिद् यानं यात्रापरिक्लेशं याति गच्छत्याचरतीति अयानयास्त्वं कचि[99a]दगच्छन् व्यवहित एव सर्वनयनिरन्तरं तथागतसमयम[भ्य]सन् सर्वान्नयान् प्राप्नुहीत्यर्थः । प्रथमतृतीययोः पादयोराद्यन्तयमकमेकरूपमव्यपेतव्यपेतं, द्वितीयचतुर्थयोरादिमध्ययमकमेकरूपमव्यपेतव्यपेतात्मकमिति ॥

रवेण भौमो ध्वजवर्तिवीरवे–
रवेजि संयत्यतुलास्त्रगौरवे ।
रवेरिवोग्रस्य पुरो हरेरवे–
रवेत तुल्यं रिपुमस्य भैरवे ॥४७॥

भूमेरपत्यं भौमो नरकासुरः अवेजि विद्रुतः । केन ? रवेण नादेन । कस्य ? ध्वजे वर्तमानस्य वीरस्य विक्रान्तस्य वेः पक्षिणः । गरुत्मत इति यावत् । कुत्र ? अतुलमसमम् अस्त्राणां गौरवं भारो यत्रेत्यतुलास्त्रगौरवे संयति युद्धे । अत एव भैरवे भीमे यस्य ध्वजचिह्नस्येदृशो विक्रमस्तस्यैतस्य तु रोचिष्णो रवेः सूर्यस्येवोग्रस्य

1. इतः परं —कश्चन वाक्यभागो भ्रष्ट इवाभाति ।



तेजस्विनः पुरोऽग्रतो रिपुं भौममन्यं वा अवेर्मेपस्यतुल्यमवेत जानीतेति चतुष्पादाद्यन्तयोरेकरूपं व्यपेतयमकमव्यपेतं च ॥

मयामयालम्ब्यकलामयामया–
मयामयातव्यविरामया मया ।
मयामयार्तिं निशयामयामया–
मयामयामूं करुणामयामया ॥४८॥

अमूं तामिष्टां काञ्चिद् रूपसम्पत्त्यादियोगात् अय इष्टफलं दैवमस्यास्तीति अयाम् । अर्श आदित्वादच् । गुणवतीम्, किंभूताम् ? मयामयार्तिं डुमिञ् प्रक्षेपणे येन मयः प्रक्षेपः परित्यागो विरह इति यावत् । मय एवामयो विकारस्तस्य स एव वा आर्तिः व्यथा यस्या इति मयामयार्तिं विरहव्याधिपीडिताम् । अतश्च मयामयालम्ब्यकलामयामयाः अविकारो दक्षस्तस्यापकृतस्तेनालम्ब्यो गृहीत इति व्यथाकरत्वात् सरोपमधिक्षिप्तः कलामयश्चन्द्र एव पीडाकरत्वादामयो रोगो यस्य इति मयामयालम्ब्यकलामयामया । केन ? तेन निशा रात्र्या हेतुना अयातव्यो विरामोऽन्तो यमित्ययातव्यविरामयाऽनवसानया विरहवशात् । अतश्च[न]मानं मा भिदादिषितोऽङिति[1] भिदादिदर्शनादङ् [?] विद्यते येषामित्यमा अपरिमिता यामाः प्रहरा [अ]स्या इत्यमयामया । ततश्चातिदुःखहेतुत्वादधिक्षिप्यते अमयेति, निश्रीकया मा श्रीर्न विद्यतेऽस्या इति कृत्वा अमया [अमं] तद्विरहविकारं यातीत्यमया विरहदुःखपीडितेन सह अमय संगमय[2] [99b] हे करुणामय ! सानुक्रोशमये मित्रेति कश्चित् सुहृदामन्त्र्यते । चतुष्पादाद्यन्तयमकमेकरूपमव्यपेतव्यपेतमिति ॥

मतांधुनानारमतामकामता–
मतापलब्धाग्रिमतानुलोमता ।
मतावयत्युत्तमताविलोमता–
मताम्यतस्ते समता न वामता ॥४९॥

ते तव अताम्यतो दुश्चरिताभावात् प्रज्ञाकौशलाद् वार्थसिद्धिं [आप्नुवतः] सम्बन्धिन्यां मतौ बुद्धौ विषये समता रागद्वेषादिवैषम्याभावादेकान्तोचिता

1. चान्द्रव्याकरणे १. ३. ८६
2. आगमसंगय इत्यादर्शे

दक्षिणतैव प्रवर्तते। यदाह- न वामतेति, न दुष्टता काचित्। किंविशिष्टा ? उत्तमताया प्रधान[त्व]स्य विलोमतां प्रातिकूल्यमधमताम् अयती अगच्छन्ती, किंतु अतापेनाकृच्छ्रेण लब्धा प्राप्ता अग्रिमताया अनुलोमता आनुगुण्यं ययेत्यतापलब्धाग्रिमतानुलोमता अ[क्लेशेन सर्वराजपुरोवर्तित्वं ?त]वेति यावत्। आरमतां तपस्विनामकामतामलुब्धतां:मतां प्रशस्तां धुनाना जयन्ती तदुपमितेति यावत्। समता प्रवर्तत इति निगमनीयम्। चतुष्पादादिमध्यान्तयमकं व्यपेतमेकरूपमिति ॥

कालकालगलकालकालमुखकालकाल-
कालकालपनकालकालघनकालकाल।
कालकालसितकालका ललनिकालकाल-
कालकालगतु कालकालकलिकालकाल ॥५०॥

कालकालो महाकालः शङ्करः तस्य गलः कण्ठः कलिरेव कालः। कालमुखो गोलाङ्गलः। कालकालगलश्च कालश्च कालमुखश्च तेषां कालकं कृष्णत्वम्। तदालाति गृह्णातीति मूलविभुजादिदर्शनात् कः। कालकालगलकालकालमुखकालकालः। कालं कायन्ति शब्दायन्ते इति कालका मयूराः तेषामिदं कालकं, कालकं च तदालपनं कं रुतं चेति कालकालपनकम्। अलीनां समूह आलः। आलवत् कालाः कृष्णा घना मेघा यस्मिन् काले स आलकालघनकालः। स चासौ कालकालपनकालकालघनकालकालश्चेति विशेषणसमासः। तद्वन् कालः कृष्ण इति विष्णोरामन्त्रणमिदम्। कमुदकमालवन्तीति [? आलान्तीति] कालाः। पूर्ववत् कः। काल एव कालकाः स्वार्थे कः। कालकैर्मेघैः। तदुपजीविभिः परिवारभूतैरालसति भातीति कालकालसि समुद्रे, क्विवन्तस्य सप्तम्यन्तस्य रूपम्। तत्र तका[? उत्का] विष्णुविरहात् कृच्छ्रजीवितात् लकालोका[?] ललनिका स्त्रीः लक्ष्मीरिति यावत्। किंविशिष्टा ? अलकानामालिः[1]

[सन्दष्टयमकलक्षणं उक्तार्गतमपि विशिष्योच्यते—]

सन्दष्टयमकस्थानमन्तादी पादयोर्द्वयोः।
उक्तान्तर्गतमप्येतत् स्वातन्त्र्येणात्र कीर्त्यते ॥५१॥

* * * *

१ इतः परं षट्पञ्चाशत्तमश्लोकस्यान्तिमभागपर्यन्तं टीका लिपिकरप्रमादाद् भ्रष्टा।



[तदुदाहरति—]

उपोढरागाप्यबला मदेन सा
मदेनसा मन्युरसेन योजिता।
न योजितात्मानमनङ्गतापिता-
ङ्गतापि तापाय ममास नेयते ॥५२॥

* * * *

[समुद्गयमकलक्षणमाह—]

अर्धाभ्यासः समुद्गः स्यादस्य भेदास्त्रयो मताः।
पादाभ्यासोऽप्यनेकात्मा व्यज्यते स निदर्शनैः ॥५३॥

* * * *

[व्यवहितं समुद्गमुदाहरति—]

ना स्थेयःसत्त्वया वर्ज्यः परमायतमानया।
नास्थेयः स त्वयावर्ज्यः परमायतमानया ॥५४॥

* * * *

[अव्यवहितं समुद्गमुदाहरति—]

नरा जिता माननया समेत्य
न राजिता माननयासमेत्य।
विनाशिता वै भवतापनेन
विनाशिता वैभवतापनेन ॥५५॥

* * * *

[व्यवहिताव्यवहितं समुद्गमुदाहरति—]

कलापिनां चारुतयोपयन्ति
वृन्दानि लापोढघनागमानाम् ।
वृन्दानिलापोढघनागमानां
कलापिनां चारुतयोऽपयन्ति ॥५६॥

* * * *

[ 99b 10 ] यमिति । वृन्दानिलापोढघनागमानां हंसानामिति यावत् । आरुतयो निनदा अपयन्ति विरमन्ति चेति समुद्गस्य त्रयो भेदा निदर्शिताः ॥

पादाभ्यास[100a]मधिकृत्याह—

न मन्दयावर्जितमानसात्मया
नमन्दयावर्जितमानसात्मया ।
उरस्युपास्तीर्णपयोधरद्वयं
मया समालिङ्ग्यत जीवितेश्वरः ॥५७॥

दयया अनुग्रहेण वर्जितं विरहितं मानसं चित्तं यस्य तादृश आत्मा आवर्जितः स्वीकृतश्च मानो गर्वः तेन सात्मा स्वभावीभूतोऽभ्यासाद् यस्याः तयैवंभूतया मया मन्दया जडया नमन् प्रणिपतन् जीवितेश्वरः प्रियः न समालिङ्ग्यत न परिष्वक्त इत्यनुशोचति काचित् । कथम् ? उपास्तीर्णं निवेशितं भरन्यस्तपयोधरद्वयं यस्मिन् समालिङ्गन इति क्रियाविशेषणम् । कुत्रेत्यपेक्षायामुरसीति योज्यम्, असमस्तत्वादिति ॥

सभासुराणामबला विभूषिता
गुणैस्तवारोहि मृणालनिर्मलैः ।
स भासुराणामबला विभूषिता
विहारयन्निर्विश सम्पदः पुराम् ॥५८॥



तत्र गुणैर्मृणालवन्निर्मलैः परिशुद्धैः सुराणां सभा देवपर्षदारोहि कीर्तिद्वारेण प्राप्ता । किंभूता ? [अबला] बलनाम्नोऽसुरस्य शक्रनिरस्तस्य तत्रासम्भवात्, न विद्यते बलोऽस्यामिति कृत्वा । वसत्यस्यामित्युषिता गत्यर्थानाप्यादाधारे(?) च इत्याधारे क्तः । विभोः शक्रस्य उषिता वासाधारः विभूषिता शक्राध्यासिता । धर्मार्थकाममयैर्गुणैर्व्याप्त-भुवनः स त्वमिदानीं पुरां वरभवनयुजां नगराणां भासुराणां विभूतिभिर्भ्राजिष्णूनां सम्पदोऽभ्युदयान् सुखानि निर्विश अनुभव । अबलाः स्त्रियः विभूषिताः विहारयन् भ्रमयन् [रमय]न्निति । कृतकृत्यस्य कामोपभोगो दर्शित इति ॥

कलं कमुक्तं तनुमध्यनामिका
स्तनद्वयो च त्वदृते न हन्त्यतः ।
न याति भूतं गणने भवन्मुखे
कलङ्कमुक्तं तनुमद्धनामिका ॥५९॥

कलं मधुरम् । उक्तं वचनम् । स्तनद्वयी पयोधरयुगलं च तनोः शरीरस्य सम्बन्धिनो मध्यस्य नामिका आवर्तिका स्त्रीणामित्यर्थात् । कं नाम नरं न हन्ति ? किं तु सर्वमेव हन्ति । अभिलाषादिकामावस्थाः क्रमेण दशमीं नयन्तीति कृत्वा हन्तीत्युच्यते । त्वदृते त्वामन्तरेण । त्वमेव केवलमनेन [न] हन्यसे जितेन्द्रियत्वात् । तनुमद्धनामिकेत्यत्र तनुत्वमाने हिशब्दो यस्मादर्थे । यत एवम्, अतः कारणात् भवान् मुखमादिः गुणैरग्रनीतत्वात्[1], यस्मिन् गणने सत्पुरुषसंख्यायां तस्मिन् भवन्मुखे गणने क्रियमाणे कलङ्कमुक्तं निर्दोषं तनुमत्, भूतं[2] सकलनिष्कल-परिमाणव्यतिरिक्तं भूतं पुरुषं व्याप्यभूतम् । अनामिका कनिष्ठानन्तराङ्गुलिर्न याति न गच्छति । त्वां प्रथमं कनिष्ठिकायां गुणवत्त्वया गणयित्वा [स्थितस्य] त्वमिव निष्कलङ्को द्वितीयायामनामिकायां गणयितव्यो [100b] नास्तीत्यर्थः ॥

यशश्च ते दिक्षु रजश्च सैनिका
वितन्वतेऽजोपम ! दंशिताः युधा ।
वितन्वतेजोऽपमदं शितायुधा
द्विषां च कुर्वन्ति कुलं तरस्विनः ॥६०॥

1 एतान् सुखादिगुणान् प्रणीत्वाद इत्यादर्शे । 2 नूत्यामित्यादर्शे ।

अजोपम विष्णुतुल्य ! ते तव सैनिकाः सेनाचरा नराः शितमायुधमेषामिति शितायुधाः तीक्ष्णहेतयः। दंशिता वर्मिताः। तरस्विनः शूराः सन्तः यशश्च कीर्तिं च ते रजश्च पार्थिवं दिक्षु वितन्वते विस्तारयन्ति। युधा रणेन तुमुलेन। द्विषां च कुलं [वि]तनु प्रहारशतजर्जरत्वाद् विगतशरीरम्। न विद्यते तेजोऽस्येत्यतेजः निष्प्रभावम्। विगतो मदोऽस्मादित्यपमदं वीतगर्वं कुर्वन्तीति ॥

विभर्ति भूमेर्वलयं भुजेन ते
भुजङ्गमोऽमा स्मरतो मदश्चितम्।
शृणूक्तमेकं स्वमवेत्य भूधरं
भुजङ्गमो मा स्म रतो मदं चितम् ॥६१॥

ते तव भुजेन अमा सह भूमेर्वलयं महीमण्डलं बिभर्ति धारयति भुजङ्गमः शेषो नागराजः। नक एव ते भुजः। [अतः] स्वमात्मीयं भुजं बाहुं भुवं पृथिवीं धारयति वहतीति भूधरमवेत्य ज्ञात्वा मम भुजो स्वयं धारयतीति मदमहङ्कारं चितमुपचितमुदीर्णं, [रतः] अभिनिविष्टः सन् मा स्म गमस्त्वं मा गच्छतु भवान्। इतीदमेकं प्रधानमुक्तं वचनम्। अञ्चितं हितं शृणु गृहाण। मत् मत्तः सकाशात् स्मरतः जानतः। प्राप्तज्ञानः एवमुदास्ते भवान् यदि न विरुद्धं [व्यवहरति], तदा सुवर्णं शोभते विनयालङ्कृतगुणत्वादितीदमेकं मद्वचनं सर्वगुणभूषणं ग्राह्यमिति ॥

स्मरानलो मानविवर्धितो यः
स निर्वृतिं ते किमपाकरोति।
समन्ततस्तामरसेक्षणे न
समं ततस्तामरसे क्षणेन ॥६२॥

हे तामरसेक्षणे पद्माक्षि ! न विद्यते रसः कामादरो ऽयस्या इत्यरसेऽरसिके ! प्रियसङ्गमसुखवैमुख्यादेवमामन्त्रिता सरोषम्। स्मरः काम एव अनलः तापकारित्वात्। स्मरानलो यो मानेन प्रियसङ्गमविरोधेन गर्वेण वर्धितो दीपितः, सोऽयं क्षणेनैकेन समं सह नाधिकेन कालेन ततो विस्तृतः क्षणमात्रेण विजृम्भितः ते तव निर्वृतिं सुखतां प्रति विशिष्टायासं प्रयोगसम्भवं समन्ततः सर्वथा किं नापाकरोति न हन्ति ? अपाकरोत्येव। तस्मात् संगम्यतां प्रियम्। किमनेन दग्धमानेनेति ॥



प्रभावतो नामन वामवस्य
प्रभावतोऽनाम नवासवस्य।
प्रभावतो नाम न वा सवस्य
विच्छित्तिरासीत् त्वयि पिष्टपस्य ॥६३॥

प्रभा अस्यास्तीति प्रभावतो दीप्तिमतः गुणोत्कर्षात्। वासवस्य शक्रस्य। नामयतीति हे नामन जेतः ! प्रभावतः प्रभावात् शक्तिविशेषप्रभावेण शक्रतुल्येति यावत्। नमनं नामः स न विद्यतेऽस्येति हे अनाम ! परप्रणिपातानभिज्ञ ! सर्वातिरेकात। यत एवं [101a] गुणयुक्तो भवान्, अतः कारणात् त्वयि पिष्टपस्य जगतः प्रभौ स्वामिनि सति सवस्य यागस्य नवः प्रत्यग्र आसवः सोमो विलक्षणः पानविशेषः अस्मिन्निति नवासवस्य सोमयागस्येति यावत्। विच्छित्तिर्विघातः। नाम सर्वथा वाचोयुक्तौ वा। न वा नैवासीदभूत्। सर्वदा धर्मक्रिया प्रवर्तत इति कश्चिन्नरपतिः स्तूयते ॥

परं पराया बलवा रणानां
धूलीः स्थलीर्व्योम विधाय रुन्धन्।
परंपराया बलवारणानाम्
परं पराया बलवारणानाम् ॥६४॥

परमुत्कृष्टम्। गुणयोगात् परं शक्र परायाः त्वं युद्धरसेनातिगतवानसि। किंभूतम् ? बलं सामर्थ्यं वारयतीति बलवाः। वारयतेः क्विबन्तस्य रूपम्। कस्य ? रणानां परसमराणां परयुद्धाभिभावीति (?) कुर्वन्। बलवारणानां सेनागजानां बलं प्राणं वाति गच्छतीति बलवः। आतोऽप्रादेः कः। सप्राणः आरणः शब्दो येषामिति बलवारणानां गम्भीरोदीर्णगर्जितानां सम्बन्धिन्याः परम्परायाः परिपाट्या घटायाः सत्त्वादियोगात् प्रकृष्टायाः सकाशात् धूलीः स्थलीः पांशुप्रकरान् तत्प्रेरणाय विधाय कृत्वा पराया इति परम्पराया इति बाह्यधूली स्थलीविकारेति। लुग्लोपलक्षणा पञ्चमी। व्योमाकाशं रुन्धन्नावृण्वन् पराया इति प्रकृतम् ॥[1]

१. अत्र श्लोके भोटपाठक्रमो वादिजङ्घालसमर्थितः स्वीकृतः।

न श्रद्दधे वाचमलज्ज ! मिथ्या-
भवद्विधानामसमाहितानाम् ।
भवद्विधानामसमाहितानां
भवद्विधानामसमाहितानाम् ॥६५॥

हे अलज्ज ! भवद्विधानां युष्मादृशानाम् । असमाहितानां विक्षिप्तचेतसां भवे संसारे द्वौ प्रकारौ अहङ्कारममकारौ रागद्वेषौ वा येषामिति भवद्विधानाम् । अत एव यथा आत्मा न वञ्चनीय[ः] तथा परोऽपीति समप्रवृत्त्यभावादसमाहितानाम् । असमाश्च तेऽहिताश्चेति विग्रहः । अत एव न विद्यते हितं श्रेयो धर्मो येषामिति अहितानां वाचं मिथ्या भवत् वितथं जायमानं विधानमनुष्ठानमन्यथा विधायान्यथा-करणाद् यस्यामिति मिथ्याभवद्विधानाम् । अत एवासमस्यातुलस्य महतः अहेः सर्पस्येव तानो गतिः कौटिल्यादियोगात् यस्यामित्यसमाहितानां गिरो न श्रद्दधे न [101b] प्रत्येमीति केनचित् कश्चित् सरोपमधिक्षिप्यत इति ॥

सन्नाहितोमानमराजसेन
सन्नाहितोमानमराजसेन ।
सन्ना हितोमानमराजसेन
सन्नाहितो मानम राजसे न ॥६६॥

अहितानामुमाभिख्या अहितोमा । सन्ना नि[र]स्ता अहितोमा यत इति हे सन्नाहितोम निरस्तशत्रुशोभ ! आनमतीत्यानमः कर्तर्यच् । राज्ञः सेना राजसेना । आनमा आनता राजसेना यस्मिन्निति हे आनमराजसेन ! न नमतीत्यनमः हे अनम ! रजसो विकारो राजसो दुष्टः । न राजसोऽराजसः सात्त्विकः । हे अराजस ! इन स्वामिन् ! हिता उमा गौरी यस्य स हितोमः । न विद्यते मा श्रीरस्येत्यमः । न अमोऽनमः सश्रीकः । राजा चन्द्रः । स [ललाटभूषा] यस्येति अनमराजा, हितोमश्चासौ अनमराजा च हितोमानमराजा शङ्करः । तेन सेनः सनाथः तद्युक्तोऽहितमानमराज-सेनः । [तस्य सम्बुद्धिः] । सन्नाहितो दंशितः मानमाहितः आगतः प्राप्तः सन्ना सत्पुरुषः स न भवन् त्वं मा न राजसे, एवं चानेकगुणयुक्तस्त्वमतितरां राजस इत्यर्थः । अत्र हेतुफलभावो यथायथं योजनीयः । यतः सन्नाहितः, तस्मादानमराज-



सेनः सन्नाहितोमश्च, यतश्च मानमाहितः, तस्मादनमः । यतश्च हितोमानमराजसेनः, तस्मादसन्ना अराजसश्च । यतश्चैतदेवं अतो राजसे वा नेति ॥

सकृद् द्विस्त्रिश्च योऽभ्यासः पादस्यैवं प्रदर्शितः ।
श्लोकद्वयं तु युक्तार्थं श्लोकाभ्यासः स्मृतो यथा ॥६७॥

सकृदेकवारं द्विः वारद्वयं त्रिः वारत्रयं च पादस्य सम्बन्धी योऽभ्यासः स एवम् उक्तेन प्रकारेण दर्शितः समुदाहृतः । श्लोकयोर्द्वयं द्वौ श्लोकौ युक्तोऽर्थोऽभिधेयं येनेति युक्तार्थमपृथगर्थयुक्तम्, इत्यनूद्य श्लोकाभ्यासः स्मृतो विज्ञायते इति विधीयते यथेत्युदाहरति ॥

विनायकेन भवता वृत्तोपचितवाहुना ।
स्वमित्रोद्धारिणाभीता पृथ्वीयमतुलाश्रिता ॥६८॥

भवता त्वया, विनयति जगत् सनातने मार्गे निवेशयतीति [तेन] विनायकेन विनेत्रा । वृत्तो वर्तुल उपचितः पीनो वाहु[102a]रस्येति वृत्तोपचितवाहुना । सुष्ठु अमित्राण्युद्धरतीति स्वमित्रोद्धारिणा इयं पृथ्वी भूमिरभीता स्वपरचक्रोपद्रवाभावात् निर्भया, अतुला विपक्षैस्तुलयितुमशक्यत्वाद् अपरोपमा, आश्रिता अधिष्ठिता वर्तत इति कश्चिद् राजा स्तूयत इत्यनेनार्थेन तावदेकः श्लोकः ॥

तत्र तावदीदृशोऽभ्युदयः, त्वद्विपक्षस्य का गतिरित्ययमेव श्लोकोऽर्थान्तरेणा-भ्यस्यते–

विनायकेन भवता वृत्तोपचितवाहुना ।
स्वमित्रोद्धारिणाभीता पृथ्वी यमतुलाश्रिता ॥६९॥

विगतो नायकोऽस्मादिति विनायकेन नेतृशून्येन त्वयि रुष्टे परित्रायकस्या-भावात् । भवता सता । चितायाः समीप उपचितम् । वृत्त उपरतो निर्जीवः [स्वपक्ष]समुदायोपरमात् उपचितो बाहुरस्येति वृत्तोपचितवाहुना । अत एव सुहृत-परित्यागात् स्वानि मित्राणि उज्जहातीति स्वमित्रोद्धा, [उत्पूर्वकस्य ओहाक् त्यागे इत्यस्य] क्विबन्तस्य तृतीयैकवचनान्तस्य रूपम् । अरिणा त्वया विपक्षेण । अभीता अभिमुखमागता । पृथ्वी महती यमस्य तुलां उपमालक्षणाम् । आश्रिता प्राप्ता ।

त्वदरातेः पुनरीदृशी गतिः । अनेनार्थान्तरेण स एव श्लोक अभ्यस्त इति श्लोकाभ्यासोऽयमीदृशः ॥

एकाकारं चतुष्पादं तन्महायमकाह्वयम् ।
तत्रापि दृश्यतेऽभ्यासः सा परा यमकक्रिया ॥७०॥

एकः समान आकारः स्वरूपं येषामित्येकाकाराः, सर्वतो यमकयोगात् चत्वारः पादा यस्य यत्रेति वा । एकाकारचतुष्पादं यत्, तदीदृशं महच्च यत् तद् यमकं च, सर्वयमकप्रधानत्वात्, महायमकमित्याह्वयः संज्ञा अस्येति महायमकाह्वयं वेदितव्यम् । एकाकारचतुष्पादत्वं प्रत्येकं सर्वतो यमकयोगाद् विनाभ्यासादपि सम्भवतीत्याह—तस्यापीत्यादि । तस्यापि महायमकस्यापि न केवलं समूहादेरभ्यासः त्रिपादावृत्तिर्दृश्यते । अत एवेयमीदृशी परा सर्वयमकक्रियाप्रधानत्वात् । यमकस्य क्रिया प्रयोगः । अत एवेदं [102b] त्रिपादाभ्यासाद् भिद्यते । तत्र प्रत्येकं पादेषु सर्वतो यमकाभावात् केवलं पादयमकमात्रं त्रिरभ्यस्यते ॥

तदुदाहरन्नाह—

समानयासमानया समानया स मानया ।
समानयासमान या समानयासमानया ॥७१॥

यासः प्रयासः खेदः । मानश्च प्रियविषयं प्रातिकूल्यम् । यासमानौ तुल्यौ, यदा समाना, तदायासोऽपीति समकालत्वात् । यथा चायासस्तापयति तथा मानोऽपि प्रियसङ्गमसुखविरहादिति । यस्याः तया समानयासमानया । सह मानेनार्हणेन गुणयोगाद् वर्तत इति समानया मान्यया अनया कयाचिदिष्ट्या । स त्वम् । असम गुणोत्कर्षादनुपम ! [मा] मां समानय संगमयेति कश्चित् सुहृदमभ्यर्थयति कश्चित् कामी । पुनः सा विशिष्यते– या प्रणयिनी सह मया श्रिया वर्तत इति समा कान्तिमती । अनयस्याकार्यस्यासौ निषेधः तस्य मानं प्रमाणमनुभवं यातीति अनयासमानया । अकार्यपरिहारज्ञतया अनयासमानयेति निगमनीयम् ॥

यदुक्तम्–

अत्यन्तबहवस्तेषां भेदाः संभेदयोनयः [३.३],



तत्र दिङ्मात्रं सुकररूपं दर्शयन्नाह—

धराधराकारधरा धराभुजां
भुजा महीं पातुमहीनविक्रमाः ।
क्रमात् सहन्ते सहसा हतारयो
रयोद्धुरा मानधुरावलम्बिनः ॥७२॥

धरां धारयतीति धराधरः शेषो भुजगराजः, तस्याकारं सादृश्यं धारयन्तीति धराधराकारधराः । धराभुजां राज्ञां भुजा बाहवः । अहीनः पर्याप्तो विक्रमः शौर्यम् एषामित्यहीनविक्रमाः । सहसा त्वरितमकालक्षेपेण हता अरयोऽमीभिरिति हतारयः । रयेण वेगेन रंहसा उद्धुरा दुर्धराः । मान एव धूः कृत्यम् । मानधुरामवलम्बत इति मानधुरावलम्बिनः । महीं पृथिवीं पातुं रक्षितुं सहन्ते कल्पन्ते तादृशगुणयोगात् । क्रमान शास्त्रविहितेन क्रमेण न्यायेनेति यावत् । इह संदष्टयमकमादिमध्ययमकव्यपेतं मध्ययमकं व्यपेतमिति संभिन्नमुदाहृतम ॥

आवृत्तिः प्रातिलोम्येन पादार्धश्लोकगोचरा ।
यमकं प्रतिलोमत्वात् प्रतिलोममिति स्मृतम् ॥७३॥

[103a] आवृत्तिरभ्यासः । कथं ? प्रातिलोम्येन प्रतीपतया लक्षिता, नानुलोम्येन, किंविषया ? पादश्चार्धश्च प्रकरणात् श्लोकस्य, श्लोकश्च [तेषां] समुदायः गोचरो विषयो यस्या इति पादार्धश्लोकगोचरा । पादगोचरा, अर्धविषया, श्लोकाश्रया चेति त्रिविधमनूद्य प्रतिलोमं नाम यमकं स्मृतमिति विधीयते । कुतः ? प्रतिलोमत्वात् तस्या इति गम्यते । प्रतिलोमेति कृत्वा । यत् त्वनुलोम्ना स पादाभ्यासादिरिति भावः ॥

तदुदाहरन्नाह—

यामताश कृतायासा सा याता कृशता मया ।
रमणारकता तेऽस्तु स्तुतेताकरणामर ॥७४॥

कृशस्य भावः कृशता । कृतो जनित आयासः श्रमो ययेति कृतायासा । या कृशता दौर्बल्यम् । सा याता प्राप्ता मया अमता प्रतिकूलतां [गता] आशा, अर्थात्

सुरतमनोरथो यस्येति हे अमताश मत्सङ्गमासहिष्णो! हे रमण! अकरणेनाकृतिमत्त्वेन अमर! अकरणामर सत्यदेव! यद्वा अकरणे अविहिते प्रमत्त! अमर देव! तव स्तुतम्। तदितः प्राप्तः हे स्तुनेत वर्णनेन प्राप्त! ते तव अरकता गमनमेवास्तु। किमागमनेन, इयर्ति गच्छतीत्यरको [गन्ता] ततो भावप्रत्ययस्तल् विधीयते। समयमतिक्रम्यागतः कश्चित् प्रियः कयाचित्तु सरोपमित्थमधिक्षिप्यते। इदं पादप्रतिलोमयमकम्। प्रथमस्य तृतीयस्य च पादस्य [क्रमशः] प्रातिलोम्येन पाठे श्लोकनिष्पत्तिः॥

नादिनोऽमदनाधीः स्वा न मे काचन कामिता।
तामिका न च कामेन स्वाधीना दमनोदिना॥७५॥

नादो नाम तत्त्वविशेषः शैवसमयप्रसिद्धः स विद्यतेऽस्येति नादिनो मे मम स्वा स्वकीया धीः। न विद्यते मदनः कामोऽस्यामिति अमदना ततश्च स्वाधीना सदृशवर्तिनी भवतु। एवं किमतः? ततश्च मे मम न काचन न काचित् कामिता विषयाभिलाषः। कामेन दमं नुदतीति तेन दमनोदिना प्रशमप्रत्यनीकेन हेतुना ते तदभावादेव तामिका न भवितुमर्हति। कामनिमित्तः सन्तापो नास्तीत्यर्थः। इदमर्धप्रतिलोमयमकम्। अत्रार्धान्तरमारभ्य प्रातिलोम्येन पाठे श्लोकनिष्पत्तिरिति॥

यानमानयमाराविकशोनानजनासना।
यामुदारशताधीनामायामायमनादि सा॥७६॥

मानमवलेपं यातीति मानयः दृप्तः त्रैलोक्यं विजग्राह। मानयश्चासौ मारश्चेति मानयमारः। तमवितुं रक्षितुं साधनभावेन तत्सामर्थ्यानुग्रहात्, शीलं यस्या इति मानयमारावी। स चासौ कशा प्रतोदश्चेति मानयमाराविकशा या काचिद् भवेत् तस्या ऊना हीना असमाना या न भवति किं तु समानैव तद्वत् कामसाधनत्वात्। यदाह– आनेत्यादि। अन ········सत्यानाः कर्तयेत् समर्था इन्द्रियजयादियोगात्। जनाः, तेषामसनं क्षेपोऽतितरां यत्रेति अनाजनासना। मुनीनामपि रागजननी अत एवोदाराणां महतां शते बहुत्वोपलक्षणम्। अधीना यस्मात् सेवनात् यामायाम जितवानस्मि। सा अनादि नदिता भणिता। नान्या। किम्? आयम् आगमनम्। आगच्छति, आहुतेति यावत्। कश्चिदितिवृत्तमात्मनः कश्चित् कथयति। आनुलोम्येन तावदयं श्लोकः॥



प्रातिलोम्येनायमेवावर्तते—

सा दिनामयमायामा नाधीता शरदामुया।
नासनाजनना शोकविरामाय न मानया॥७७॥

सा काचिदभिमता स्त्री दिनमेवामयो विकारोऽत्यन्तरूक्षत्वात् दिनामयम् अधीता अधीगता प्राप्ता न न भवति किं तु अधीतैवात्यन्तसौकुमार्यात्। अत एवायः आगतः अनुभाव्यः आमः पीडा ययेति आयामा। केन? अमुया प्रत्यक्षवर्तिन्या शरदा अतिदीप्रदिवाकरया हेतुना, अत एव च न जननमजननम्। आसनस्यावस्थानस्याजननमकरणं यया इति आसनाजनना सुखासिकामलभमाना शोकस्य त्वद्विरहसम्भवस्य विरामाय विनोदाय शोकाभिभवार्थं मानमहङ्कारं शोकमभिभवामि इत्येवं रूपं यातीति मानया भवति। त्वद्वियोगसम्भवं शोकमभिभवितुं न शक्नोति इत्यर्थः। श्लोकप्रतिलोमयमकम्॥

॥ इति यमकचक्रम् ॥

वर्णानामेकरूपत्वं यद्येकान्तरमर्धयोः।
गोमूत्रिकेति तत् प्राहुर्दुष्करं तद्विदो यथा॥७८॥

अर्धयोः श्लोकसम्बन्धिनोरभिव्यक्त्यर्थः उपर्यधोभावेन लिखितयोः सम्बन्धिनां वर्णानां निरन्तराणामेकरूपत्वं सारूप्यं तेषामेव वर्णानां समुत्थानात्। एकैकमक्षरमन्तरं व्यवधानमस्मिन्नित्येकान्तरम् एकैकवर्णव्यवधानं यदि भवति निरन्तरपाठवदर्धयोरौत्तराधर्येण एकैकवर्णान्तरपाठे स एव श्लोको यदि [104a] निष्पद्यत इत्यर्थः। तदीदृशं दुष्करं गोमूत्रिकेति अभिधानेन प्राहुः व्यवहरन्ति तद्विदो गोमूत्रिकाबन्धवादिनः। यथेत्युदाहरति॥

मदनो मदिराक्षीणामपाङ्गास्त्रो जयेदयम्।
मदेनो यदि तत् क्षीणमनङ्गायाञ्जलिं ददे॥७९॥

मदिराक्षीणां स्त्रीणाम्। अपाङ्गं कटाक्ष एवास्त्रमायुधं रागसाधनत्वाद् यस्येति अपाङ्गास्त्रः देवदत्तस्य गुरुकुलमिति यथा। मदनः कामः। अयं लोकविख्यातः।

जयेद् जगद्वशीकुर्यात्। न कचित्प्रतिहतशक्तिर्य[दि] [यस्मात् इष्टविषयप्रापणात्। मम एनः पापम् अर्थात् तत्प्राप्तिविघ्नभूतम्। क्षीणम् अस्तंगतम् ततः पूर्णमनोरथत्वात् अहमनङ्गाय तस्मै कृपाद्यपपत्तये । तादर्थ्ये क्रियासम्बन्धे वा चतुर्थी। अञ्जलिं प्रणामकरसम्पुटं दधेः रचयामि तमाराधयामीति कश्चित् कामी [काचित्] कामिनी वा ब्रवीति ॥

आहुरर्धभ्रमं नाम श्लोकार्धभ्रमणं यदि ।
तदिष्टं सर्वतोभद्रं भ्रमणं यदि सर्वतः ॥८०॥

औत्तराधर्येण चतुर्षु पादेष्वभिव्यक्त्यर्थं लिखितेषु प्रथममक्षरमारभ्य औत्तराधर्येण द्विराद्यन्ततः क्रमेण पाठे अर्धं निष्पद्यते, पुनस्तथैव परिशिष्टस्य पाठे अपरार्धनिष्पत्तिरिति श्लोकस्य द्वाभ्यां भ्रमणं श्लोकार्धभ्रमणं यदि भवेत् तादृशमर्धभ्रमं नाम दुष्करमाहुरामनन्ति तद्विदः।

सर्वतोऽनुलोमप्रतिलोमतः पूर्ववदौत्तराधर्येण च यदि भ्रमणं श्लोकस्य भवेत् तादृशं सर्वतोभद्रं नाम दुष्करमिष्टं तज्ज्ञैरिति ॥

तदुभयमुदाहरति—

मनोभव तवानीकं नोदयाय न मानिनी ।
भयादमेयामा मा वा वयमेनोमया नत ॥८१॥

हे मनोभव,! अत एव सर्वेषां चित्ताधिष्ठानतया हे नत ! प्रत्यासन्न ! देवान्तरवद् यो[न] परोक्षः, मानिनी काचिदिष्टा तव अनीकं सेना जगद्विजयप्रयुक्तत्वात्। [अन्या] सेना कुतश्चित् सभयापि। इयं त्वकुतोभया काचित् सेना इत्याह— भयादित्यादि। [सा] अमः पीडा। अमेयोऽप्रमाणोऽमो यस्या इति अमेयामा [भवतु] मा वा [भूत्। कुतः ?] भयात् [त्वदुत्थात्] कारणान्तरात् मा वा न भवति। सेयमीदृशी तवोदयाय जगद्वि[जय]लक्षणाय न न भवति, किं तु भवत्येव। केचन वयमत्र एनोमयाः पापस्वभावाः। अनुदयभाजस्तिष्ठामः, तत्प्रसादाप्रतिलम्भात्, प्रत्युत निर्दयभावनात्। तदियं प्रसीदतु तव सेनेति, अर्धभ्रमम् ॥



सामायामा माया मासा
मारानायायाना रामा ।
यानावारारावानाया
मायारामा मारायामा ॥८२॥

[104b] सा काचिदिष्टा रामा स्त्री मासा चन्द्रेण अमा सह माराय नाशार्थम् अस्माकमुपस्थितेति शेषः। कीदृशीति सा विशेष्यते। या रामा अमस्य पीडाया आयामो दीर्घता यस्य इत्यमायामा पीडावती मा न भवति। अदुःखनिमित्तं तप्यत इत्यर्थः। तदेव कुतः ? मारस्य कामस्य आनायो जालं जगद्बन्धनं किमपि तत्। अयानमगमनमपतनं यस्या इति मारानायायाना। यतोऽस्याः सुमन्दो रागः, तस्माद् असमद् दुःखेन [न] तप्यत इत्यर्थः। सा कीदृशीति पुनर्विशिष्यते [यानं पादयुगम् आवृणोतीति यानावारः, तस्य आरावः शब्दो वर्तते यत्र सा] यानावारारावा, अत एव आनं प्राणमायातीति आनाया बलीयसी माया परव्यामोहो फलोपायश्च आरामः क्रीडाभूमिरस्या इति मायारामा या ईदृशी सा माराय अस्माकमिति [योज]नीयम्। इदं सर्वतोभद्रम् ॥

स्वरस्थानवर्णप्रतिनियमलक्षणं दुष्करं दर्शयन्नाह—

यः स्वरस्थानवर्णानां नियमो दुष्करेष्वसौ ।
इष्टश्चतुःप्रभृत्येषु दर्श्यते सुकरः परः ॥८३।

स्वरः अकारादिः। स्थानं च यद्भवो वर्णः कण्ठादिः। वर्णश्च व्यञ्जनं ककारादिः [तेषां] स्वरस्थानवर्णानां नियमः व्यवस्था इयत्ता, योऽसौ नियमो दुष्करेषु वर्णेषु मध्ये इष्टस्तज्ज्ञैः सोऽपि दुष्कर इत्यर्थः। एष च नियमः चतुर्भ्यः प्रत्येकस्वरस्थानवर्णेभ्यः प्रभृति आरभ्य चतुर्षूपादाय [क्रमशो न्यूनतया] एकं स्वरं स्थानं वर्णं वा यावद् दर्श्यते उदाह्रियते। तादृशस्य दुष्करत्वात्। न पञ्चप्रभृति, तस्य सुकरत्वात्। यदाह परः,– पञ्चप्रभृतिनियमः स्वरस्थानवर्णकृतः सुकरमुखेन क्रियते। तस्मान्नासौ निर्दिश्यते दुष्कर इति ॥

आम्नायानामाहान्त्या वाग्
गीतीर्गीतीः प्रीतीर्भीतीः ।
भोगो रोगो मोदो मोहो
धे ये चेच्छे देशे क्षेमे ॥८४॥

आम्नायानां वेदानाम्, अन्ते भवा अन्त्या वागुपनिषदिति यावत्। सा गीतीर्गानानि विलासिनां सुखाभिमता ईतीरुपद्रवान मृगाणामिव दुःखानुबन्धित्वाद् आहोपादिशदिति। प्रीतीश्च संसारे प्राकृतजनसुलभाः चित्तोद्धर्षात्। भीतीः त्रासाद् भयानुबन्धित्वाच्चाह। भोगश्च रूपादिविषयानुभवः। रोगो व्याधिर्विविधदुःखात्मकः [105a] संसाराक्षेपकत्वात्। [तत्र] च वधबन्धनादिव्यसनहेतुत्वात्। तत्रैवं रोगभूते विषयभोगे मोदः सुखितोऽहं सर्वथेति हर्षो मोहोऽज्ञानम्, दुःखसुखविपर्यासप्रवृत्तत्वादित्यप्याह सा। यत एवं सर्वमुपद्रुतं संसारचक्रम्, तस्माद् देशे स्थाने क्षेमे सर्वोपद्रवरहिते शान्ते मोक्ष इति यावत्। धानं धा भिदादिदर्शनादाह [?] धारणे चित्तस्य इच्छा च छन्दश्च इच्छे[1] धे ये धातव्ये कार्ये। श्रेयोऽर्थिभिर्मोक्ष एव शरण्यतया चित्तेन धारयितव्यः। तत्रैव च छन्दोऽभिधातव्यः न संसार इत्यप्याह सा वागिति। आकारस्य ईकारस्य ओकारस्य एकारस्यैव च प्रयोगात् चतुःस्वरोऽयं श्लोक इति॥

क्षितिविजितिस्थितिविहिति-
व्रतरतयः परगतयः।
उरु रुरुधुर्गुरु दुधुवु-
र्युधि कुरवः स्वमरिकुलम् ॥८५॥

क्षितेः पृथिव्या विजितिर्विजययोगः, स्थितेश्च तद्व्यवस्थाया यथावत् परिपालनरूपायाः क्षेमस्य च विहितिर्विधानं सम्पादनम्। एतदुभयमवश्यकर्तव्यतया व्रतं नियमः, तत्र रतिस्तत्परता येषामिति क्षितिविजिति[स्थिति]विहितिव्रतरतयः। कुरव इति वक्ष्यति। एतच्च प्रज्ञामन्तरेण न भवतीत्याह– परा शोभापरा गुणदोषविवेकसमर्था गतिः प्रज्ञा येषामिति परगतयः। एवं च शक्तिसम्पन्नरिपुविजयचतुरा इत्याचष्टे, कुरवो राजानो यथोक्तगुणा युधि समरे स्वमात्मीयम् अरीणां कुलम्। उरु भृशं क्रियाविशेषणम्। रुरुधुरावृतवन्तः…………वशमानयन्। दुधुवुश्च अभिभवादकम्पयन्। गुरु बलवत्। इदमपि क्रियाविशेषणम्। गुरु वा अरिकुलं शक्तियोगात्। अयमिकाराकारोकारमात्रप्रयोगात् त्रिस्वरः श्लोक इति॥

श्रीदीप्ती ह्रीकीर्ती धीनीती गीःप्रीती।
एधेते द्वे द्वे ते ये नेमे देवेशे ॥८६॥

ये द्वे देवानामीशे देवेशे सुरपतावपि न स्त इमे ते द्वे द्वे च वस्तुनी एधेते वृद्धिं गच्छतः। के ते इति विशेषेण दर्शयति– श्रीश्च विभूतिः दीप्तिश्च तद्भाविनी द्युतिराज्ञा वा श्रीदीप्ती। ह्रीश्च त्रपा [आकार]संकोचलक्षणा ततः कीर्तिश्च यशः सर्वत्र गुणख्यातिरूपा ह्रीकीर्ती। धीश्च प्रज्ञा हेयोपादेयविवेकस्वभावा तदनुसारिणी च नीतिः सम्यक्प्रयोगरूपा त्रिवर्गानुबन्धिनी धीनीती, गीश्च वाक् मधुरा लोक-[105b]संग्राहिका प्रीतिश्च तदनुवृत्ता गीःप्रीती, इतीमे द्वे द्वे सम्बन्धिन्यौ एधेते। नान्ये ये केचित्। इतीकारस्यैकारस्य च प्रयुक्तेर्द्विस्वरोऽयं श्लोकः॥

सामायामा माया मासा
मारानायायाना रामा।
यानावारारावानाया
मायारामामारायामा ॥८७

सर्वतोभद्रं पूर्वोक्तमेकस्वरोदाहरणमपि कल्पते इति पुनरुदाहृतम्। एकस्वरोदाहरणमात्रमिह विवक्षितम्। तच्च पूर्वसिद्धमेव सम्भवतीति किमपूर्वेणोद्दशेनाहोपुरुषिकामात्रेणेति भावः। पूर्वव्याख्यात एवार्थोऽनुसर्तव्यः। एवं स्वरनियमश्चतुर्विधो दर्शितः।

स्थाननियमं दर्शयन्नाह—

नयनानन्दजनने नक्षत्रगणशालिनि।
अघने गगने दृष्टिरङ्गने! दीयतां सकृत् ॥८८॥

[1] अत्रेच्छाया द्वैविध्यं स्वीकृत्य द्विवचनमिति टीकाकर्तुरभिप्रायः प्रतिभाति।

नक्षत्राणां गणैः शालिनि सम्बन्धिते विराजमाने वा नक्षत्रगणशालिनि, न विद्यन्ते [घना अ]स्मिन्नित्यघने मेघमलविकले अत एव नयनानामानन्दं प्रीतिं जनयतीति नयनानन्दजनने गगनेऽन्तरीक्षे दृष्टिर्दीयतां प्रयुज्यताम्। सकृत् एकवारमपि। तावतैव मदनपरवशायास्तस्याः प्राप्तः। नाधिकं प्रार्थ्यते, सकृद् वा दर्शनेन गगनमनुगृह्यताम्। अन्यथा विफला अस्य शोभेति कश्चिच्चाटुकारः कामी कान्तामुपलालयति। अङ्गनेति प्रियामन्त्रणम्। कण्ठ्यतालव्यदन्त्यमूर्धन्यमात्रप्रयोगात् चतुस्थानोऽयं श्लोक इति ॥

अलिनीलालकलतं कं न हन्ति घनस्तनि।
आननं नलिनच्छायनयनं शशिकान्ति ते ॥८९॥

अलकः केशविन्यासविशेष एव चञ्चलत्वादिना लता। अलिवन्नीला अलकलता यस्मिन्निति अलिनीलालकलतम्। नलिनस्येव च्छाया शोभा अनयोरिति नलिनच्छाये सरोजतुल्ये नयने अस्मिन्निति नलिनच्छायनयनं शशिन इव कान्तिरस्येति तदीदृशमिति मनोहरं ते तवाननं कं न हन्ति कं नाम कामिनं दशमीं दशां न नयति? सर्वमेव रागिणं हन्तीत्यर्थः। घनस्तनीति प्रियामन्त्रणम्। कण्ठ्यतालव्यदन्त्यमात्रप्रयोगात् त्रिस्थानोऽयं श्लोक इति ॥

अनङ्गलङ्घनालग्ननानातङ्का सदङ्गना।
सदानघ सदानन्द नताङ्गासङ्गसङ्गत ॥९०॥

हे सदानघ! सर्वदा निष्पाप! अत एव विप्रतीसाराभावात् सन् विद्यमानः शोभनो वा आनन्दः प्रमोदोऽस्येति सदानन्द! नताङ्गानां स्त्रीणां सङ्गः संभोगलक्षणः, तेन सङ्गतः अन्यस्त्रीसंभोगप्रसक्तः। हे नताङ्गासङ्गसंगत! सती चासावङ्गना [106a] चेति सदङ्गना तवेत्यर्थात्। अनङ्गेन कामेन लङ्घनमभिभवः ततो लग्नः सक्तः उत्पन्नः नानानेकप्रकारः आतङ्कः पीडा यस्या इति अनङ्गलङ्घनालग्ननानातङ्का वर्तते। अनङ्गेन वा लङ्घनं तत आलग्नो नानातङ्को यस्याः सेयमनुकम्प्यतामिति कश्चित् कामिनं विषयान्तरप्रसक्तं निजवधूनिमित्तं सानुनयं काचिदेवमाह। कश्चिद् वा। कण्ठ्यदन्त्यमात्रप्रयुक्तो द्विस्थानोऽयं श्लोक इति ॥



अगागाङ्गाङ्गकाकाकगाहकाघककाकहा।
अहाहाङ्कखगाङ्कागकङ्कागखगकाकक ॥९१॥

अकति कुटिलं गच्छतीत्यकम्। कर्तर्यच्। अक कुटिलायां गताविति धातुः। आ समन्तात् कायति शब्दायते इति आकम्। आतः प्रादिभ्य इति कः। अकं च तदाकं चेति अकाकम्। गङ्गाया इदं गाङ्गम्। गाङ्गं च तत् कमुदकं च गाङ्गकम्। गाङ्गकं च तत् अकाकं चेति गाङ्गकाकाकम्। तत्र तस्य वा गाहकः प्रवेष्टा हे गाङ्गकाकाकगाहक! अत एव अघान्येवाघकानि कुत्सितत्वात् तानि मलिनत्वादिना काकाः तान् हन्तीति अघककाकहा कृतगङ्गास्नानत्वात् निष्पापस्त्वम्। ततश्च गां स्वर्गम् अगाः प्राप्तवानसि न सन्देहः। एवंविधस्य स्वर्गगमनमवश्यम्भावीति भविष्यत्यपि भूतमुपचर्य अगास्त्वमिति भूतप्रयोगः कृतः, यथा अजितेऽपि बले जयकारणसाकल्यात् जितव्यपदेशः जितमिदं मया बलम्। कियदेतदिति प्रतिपत्तव्यम्। एवं पुण्यमयस्य तव शोकोऽपि न संभवति इत्यामन्त्रणद्वारेण सूचयति हाहेत्येवंरूपः प्रलापः शोकसंभवः। हाहा तमङ्गति······यातीति हाहाङ्गः। अगि गत्यर्थो धातुः। न हाहाङ्गोऽहाहाङ्गः। हेऽहाहाङ्ग विशोक! एवं गुणयोगात् आ स्वर्गं प्रसिद्धस्त्वमिति संबोधनमुखेनाभिधत्ते। खग आदित्यः। सोऽङ्कश्चिह्नं तत्र गतेरस्येति खगाङ्कः स चासावगः पर्वतश्चेति खगाङ्कागः सुमेरुरिति यावत्, स च स्वर्ग एव, देवानां [तत्र] अवस्थानात्। तं कङ्कति कीर्तिद्वारेण गच्छति इति व्याप्यादण्[1]। हे खगाङ्कागकङ्क! एवं कल्याणाशयत्वात् दुर्जनसंसर्गोऽपि [106b] तव नास्तीति कथयति अगन्ति कुटिलं गच्छन्ति अदान्तत्वादिति अगानि। कर्तर्यच्। अगानि च तानि खानि इन्द्रियाणि च इत्यगखानि तानि गच्छन्ति इति अगखगाः अदान्तेन्द्रियाः खला इति यावत्। त एव कुत्सितत्वादगखगकाः। तेषु अककः अलोलः अलुब्धः निरपेक्षः, तत्संसर्गद्वेषात्। हे अगखगकाकाक इति कश्चित् पुरुषः स्तुतः। कण्ठ्यमात्रप्रयोगादेकस्थानोऽयं श्लोकः ॥ ९१ ॥

एवं स्थाननियमश्चतुर्धा दर्शितः। संप्रति वर्णनियमं दर्शयन्नाह—

रे रे रोरुरुरूरोरुगागोगोऽगाङ्गगोऽगगुः।
किं केकाकाकुकः काको मामा गामा ममामम ॥९२॥

रे रे इत्यनादरे भर्त्सने वा। त्रासा[दिपर]वशतया भृशमभीक्ष्णं वा रौतीति रोरुः। रौतेर्यङन्तात् क्विपि रूपम्, रोरुश्चासौ रुरुश्च मृगविशेषः रोरुरुः। तस्य

1. चान्द्रव्याकरणे १. २. १.

ऊरुः क्रोडदेशः, तस्य रुग् विदारणमेवागः पापं तद् गच्छतीति रोरुरूगागोगः। पर्वतदेशवर्तनात् तरुमूलगतगोपनघातुकेन केनचित् गोपेन दुरितमिदमाचरितमिति सविशेषं दर्शयति– अगस्य पर्वतस्याङ्गमेकदेशः। तद्गतः तत्रावस्थानात् अगाङ्गगः। अगेषु तरुषु व्यवस्थिता गावोऽस्य इत्यगगुः। त्वमेवं प्रत्यक्षपापः। मा मा सावेगे वारणे आम्रेडितप्रयोगः। मागाः मा आगच्छ। [मम मादृशस्य पुण्यात्मनः सविध इति शेषः।] नेदृशः पापीजनोऽस्मदन्तिकमागन्तुमर्हति। अममो निष्परिग्रहः। मा अमम परिग्रहक्लेशोपहत इति तस्यामन्त्रणम्। अनेन मृगवधपातकनिमित्तं सूचितम्, परिग्रहोपहतानामेवेदृशदुश्चरितसम्भवात्। निष्परिग्रहाणां तु निष्पापत्वात्। यदि नाम एवं तथापि किं न युष्मत्समीपमुपगच्छेयमित्याशङ्क्य तदसम्भवं प्रतिवस्तुना दर्शयति। केका मयूरध्वनिर्मधुरः। तस्य सैव वा काकुः भङ्गः। तत्रैव सहजतया प्रतिनियमात्। तया कायति शब्दायत इति केकाकाकुकः। काको वायसः किं सम्भवति? नैव। तद्वत् त्वद्विधपापजनसंसर्गोऽस्मद्विधानां श्रेयोऽर्थिनां न सम्भवतीति कश्चिन्मुनिः कृतमृगवधपातकं गोपालकमरण्यचरमात्मसमीपसर्पन्तमित्थमभिधत्ते। [107a] रेफगकारककारमकारमात्रप्रयोगात् चतुर्वर्णोऽयं श्लोक इति॥

देवानां नन्दनो देवो नोदनो वेदनिन्दिनः।
दिवं दुदाव नादेन दाने दानवनन्दिनः॥९३॥

देवानां नन्दनः प्रीतिकरः तद्योगक्षेमाचरणपरत्वात्। वेदनिन्दिनः धर्माधिक्षेपकस्य लोकस्य नोदनो निषेद्धा [त्रयी]प्रवर्तनात्। देवो विष्णुः। तस्यैव तादृशत्वात्, वक्ष्यमाणविशेषयोगाच्च। दानवानसुरान् नन्दयति वर्धयति तद्योगक्षेमाचरणादिति दानवनन्दिनोऽसुरेश्वरस्य हिरण्यकशिपोः, अन्यस्य वा कैटभादेः दानेऽवखण्डने विदारणे नादेन दर्पोन्मुक्तेन सिंहनादेन [स्तम्भ]भङ्गसम्भवेन वा नादेन शब्देन तुमुलेन हेतुना दिवं स्वर्गलोकं दुदाव। किमिदमित्युपजातशङ्कमकरोदित्यर्थः। दकारवकारनकारमात्रात्मत्वात् त्रिवर्णोऽयं श्लोकः॥

सूरिः सुरासुरासारिसारः सारसिसारसाः।
ससार सरसीः सीरी ससूरूः स सुरारसो॥९४॥



स प्रसिद्धः सीरी बलभद्रः सूरिः सर्वविद्याकोविदः सुराश्चासुराश्च तानासर्तुं व्याप्तुमप्रतिहतत्वात् शीलमस्येति सुरासुरासारी। [तादृशः] सारः सामर्थ्यमस्येति सुरासुरासारिसारः। नयसम्पन्नो विक्रमसम्पन्नश्चेत्युक्तं भवति। शोभनाभ्यामूरुभ्यां वर्तत इति ससूरूः। सौरूप्यमनेनोपलक्षितम्। सुरारसी मदिरास्वादी। तथा [च बलभद्रः] प्रसिद्धः। सरसीः क्रीडादीर्घिकाः ससार वारिविहारयोगेन निर्विवेश। किंविशिष्टाः? आरसिभिर्मुखरैः सारसैः पक्षिविशेषैः सह वर्तत इति सारसिसारसाः। अनेन विलासित्वमस्योद्भावितम्। रेफसकारमात्रस्वभावतया द्विवर्णोऽयं श्लोकः॥

नूनं नुन्नानि नानेन नाननेनाननानि नः।
नानेना ननु नानूनेनैनेनानानिनो निनीः॥९५॥

नूनं निश्चितमेतत्। किं तत्? नोऽस्माकमाननानि मुखानि न [न] नुन्नानि किं तु नुन्नान्यभिभूतान्येव। केन? अनेन पुरुषेण, येन सार्धं योद्धव्यम्। केन? अनेनाननेन मुखेन मार्तण्डमण्डलेनेव तेजस्विना मुखेन। आस्तां तावद् युद्धम्, मुखमप्यस्यावलोकयितुमस्मन्मुखानि न शक्नुवन्ति। कोऽप्ययमतिमानुषः पुरुषः। तादृशेन सह [यो] योद्धुमस्मान् नियुङ्क्तेऽसौ प्रभुरपरीक्षकोऽस्माकमिति कथयति। एतेन पूर्वोक्तेनानूनेनापि [107b] केना[प्य]तिबलीयसा योद्धुमित्यर्थात्। निनीः...... नियोक्तुमिच्छुः। अनान् प्राणिनः प्राणोऽनुजीविनोऽस्मान् नयतेः सन्नन्तात् क्विपि रूपम्। इनोऽस्माकं प्रभुः। ना पुरुषोऽयं नानेनाः एनः पापं न विद्यतेऽस्येत्यनेनाः न भवतीति किं तु सपाप एव। ननु वितर्के निश्चये वा, यदेनेनातिमानुषप्रभावेणास्मान् घातयितुमिच्छति। स्वयमप्यत्र योद्धुं प्राप्तः। इति केनचित् अतिबलीयसा योद्धुं नियुक्ताः प्रभुना अनुजीविनो वितर्कयन्ति। अयं नकारमात्रनिबन्धत्वादेकवर्णः श्लोकः॥

दुष्करमार्गमुपसंहरति—

इति दुष्करमार्गोऽपि किञ्चिदादर्शितक्रमः।

इत्युक्तेन 'विधिना दुष्करमार्गो दुष्करोऽपि ,काव्यप्रकारः। न केवलं सुकर इत्यपि शब्दः। किञ्चिद् ईषत् संक्षेपतः, तथा प्रतिज्ञानात्। क्रियाविशेषणमेतत्। आदर्शित उक्तः क्रमः स्वभावोऽस्येत्यादर्शितक्रमः प्रतिपादित इति दुष्करमार्गोऽपि

कश्चिदादर्शितः क्रम इत्यपि पाठः । तत्र दुष्करमार्ग विषयेऽपि क्रमः प्रकारः कश्चित् कोऽपि संक्षिप्तः आदर्शित इति योज्यम् ।

॥ इति चित्रचक्रम् ॥

प्रहेलिका अनुबध्नन्नाह—

प्रहेलिकाप्रकाराणां पुनरुद्दिश्यते गतिः ॥९६॥

पुनः अथ प्रहेलिकानां तद्रूपाणां वा प्रकाराणां विकल्पानां गतिः स्वरूपं लक्षणं लक्ष्यं च, उद्दिश्यते प्रतिपाद्यते ॥

क पुनस्तदुपयोग इति चेदाह—

क्रीडागोष्ठीविनोदेषु तज्ज्ञैराकीर्णमन्त्रणे ।
परव्यामोहने चापि सोपयोगाः प्रहेलिकाः ॥९७॥

गोष्ठीनामनेकविधत्वात् क्रीडारूपाः प्रीतिस्वभावा रसवत्यो या गोष्ठ्यः समवायाः काव्यालापरूपा विदग्धानां ता एव सुखेन कालप्रेरणारूपत्वाद् विनोदाः तेषु क्रीडागोष्ठीविनोदेषु । तज्ज्ञैः प्रहेलिकावेदिभिः सह आकीर्णे जनसंबाधे स्थाने कचिन्मन्त्रणे गुप्तभाषणे तद्विदामेव तत्र गूढार्थानां प्रहेलिकानां रहस्यभूतार्थप्रतिपत्तिः । इतरेषां तत्र सन्निहितानामपि किमिदमुच्यत इति तदनवगमात् आकीर्णेऽपि मन्त्रणं प्रहेलिकाभिः साध्यते । [सामर्थ्यं चेद्] ज्ञायतां किमस्माभिरुच्यत इति व्यामोहने तत्त्वानिश्चयादाकुलीकरणे, नर्मरूपे वापि विषये । चैवेत्यपि पाठः । सहोपयोगेन प्रयोजनेन वर्तत इति सोपयोगा उपकारिण्यः । ततस्ता अप्यलङ्कारवत् [108a] काव्यलक्षणे चिन्तनीयाः । ततश्च यदुक्तं भामहेन—

नानाधात्वर्थगम्भीरा यमकव्यपदेशिनी ।
प्रहेलिका सा ह्युदिता रामशर्माच्युतोत्तरे ॥

काव्यान्यपि यदीमानि व्याख्यागम्यानि शास्त्रवत् ।
उत्सवः सुधियामेव हन्त दुर्मेधसो हताः ॥

[काव्यालङ्कारे २. १९–२०]



इति तदपहस्तितम् । उपयोगवत्तया अवश्यवक्तव्यत्वात् प्रहेलिकानामलङ्कारवदिति ॥

लक्षणं तासां कुर्वन्नाह—

आहुः समागतां नाम गूढार्थां पदसन्धिना ।
वञ्चितान्यत्र रूढेन यत्र शब्देन वञ्चना ॥९८॥

पदयोः सुप्तिङन्तयोः सन्धिना पदघटनेन तादृशेन हेतुना गूढो दुर्बोधः [कृच्छ्रगम्यो]ऽर्थो विवक्षितमभिधेयं यस्या इति गूढार्थप्रहेलिकां समागतामाहुस्तद्विदः । गोपितार्थसमागतपदप्रधानत्वात् समागतेति तादृशी व्यवह्रियते यत्र प्रहेलिकायाम् अन्यत्र वा अर्थान्तरे ॥

रूढेन प्रसिद्धेनार्थान्तरप्रयुक्तेन शब्देन वाचकेन वञ्चना वञ्चनं वा । विवक्षिताद् अर्थादन्यत्र बुद्ध्युत्पादात् विप्रलम्भो जायते यत्र सा तत्परत्वाद् वञ्चिता नाम विज्ञायते ॥

व्युत्क्रान्तातिव्यवहितप्रयोगान्मोहकारिणी ।
सा स्यात् प्रमुषिता यस्यां दुर्बोधार्था पदावली ॥९९॥

अतिव्यवहितानामत्यन्तविप्रकृष्टानाम् । यथा मोहो जायते। पदानां प्रयोगोऽभिधानमतिव्यवहितो वा । अतिव्यवहितः प्रयोगतः स्यात् । अत्यन्तव्यवहितपदयोजनाहेतोर्मोहः । सोऽर्थानिश्चयं विपरीतार्थप्रतिपत्तिं [च] करोति जनयतीति मोहकारिणी या सा व्यवहितपदप्रधानत्वाद् व्युत्क्रान्ता नाम प्रहेलिका वेदितव्या ॥

यस्याः प्रहेलिकायाः सम्बन्धिनी पदानामावली समुदायः दुर्बोधः कृच्छ्रगम्यः अर्थोऽभिधेयं यस्या इति दुर्बोधार्था सा प्रहेलिका अपहृतार्थत्वात् प्रमुषिता नाम स्यात् ॥

समानरूपा गौणार्थारोपितैर्ग्रथिता पदैः ।
परुषा लक्षणास्तित्वमात्रव्युत्पादितश्रुतिः ॥१००॥

या गौणार्था मुख्यादभिधेयादन्यस्मिन्नभिधेये आरोपितैरव्याप्तैः पदैः शब्दैः ग्रथिता विरचिता सा तादृशार्थान्तरप्रतिपादनपरत्वात् समानरूपा नाम स्मर्यते ॥

लक्षणस्य शब्दानुशासनस्यास्तित्वं सद्भावमात्रं प्रयोगप्रभृतिव्यवच्छेदात्। तेन व्युत्पादिताः संस्कृताः श्रुतयः पदानि अप्रहताः यस्यां सा प्रयोगप्रतीती रसविरहात् परुषा नाम स्यात् ॥

संख्याता नाम संख्यानं यत्र व्यामोहकारणम्।
अन्यथा भासते यत्र वाक्यार्थः सा प्रकल्पिता ॥१०१॥

यत्र प्रहेलिकायां संख्यानमेकत्वादिकम्। व्यामोहस्यार्थतत्त्वाप्रतिपत्तेः [108b] कारणं साक्षादनुक्तस्य विवक्षितस्यार्थस्य संख्यामुखेन समुन्नयनात्, संख्याता नाम सा भवेत् ॥

यत्र प्रहेलिकायां वाच्यस्य पदसमुदायस्यार्थोऽभिधेयमन्यथा अवस्थितः, अन्यथा तद्विपर्ययेणावभासते प्रतिभाति सा प्रहेलिका प्रकल्पिता नाम, अन्यथार्थकल्पनपरत्वादिति ॥

सा नामान्तरिता यस्या नाम्नि नानार्थकल्पना।
निभृता निभृतान्यार्था तुल्यधर्मस्पृशा गिरा ॥१०२॥

यस्याः प्रहेलिकायाः सम्बन्धिनो नानार्थस्यानेकस्याभिधेयस्य कल्पना उद्भावनं भवति। कुत्र? नाम्नि कचित् संज्ञायां विषये [सा] प्रहेलिका नाम्ना व्यवहितार्थत्वात् नामान्तरिता नाम स्यात् ॥

या दर्शितान्यार्था। [निभृतो निगूढः] निभृतो व्यवस्थितो वान्यार्थोऽभिधेयं यस्यामिति निभृतान्यार्था अभिधेयान्तरात्। कथम्? तुल्यं समानमुभयत्र वृत्तेः, धर्ममर्थरूपं तन्निमित्तीकृत्य प्रवृत्तेः, स्पृशतीति तुल्यधर्मस्पृक्। तुल्यो वा विवक्षितेनार्थेन सदृशो धर्मो गुणोऽस्येति तुल्यधर्मोणमर्थं स्पृशतीति तुल्यधर्मस्पृक्। तया तुल्यधर्मस्पृशा गिरा शब्देन हेतुना तादृशी गीः प्रयुज्यते या विवक्षितसदृशमर्थान्तरमभिदधाना। तत्रैव विवक्षितेऽर्थे निष्ठा अस्येति। यद्वा तुल्यधर्मस्पृशा गिरा कारणेन निभृतः अप्रकटोऽन्यो गृहीतार्थापेक्षया अर्थोऽभिधेयं यस्यामिति योज्यम्। सा तादृशी प्रहेलिका निभृता आख्यायते ॥

समानशब्दोपन्यस्तशब्दपर्यायसाधिता।
संमूढा नाम या साक्षान्निर्दिष्टार्थापि मूढये ॥१०३॥



उपन्यस्तेन तदर्थानुसारेण कल्पितेन शब्दस्य विवक्षितत्वावाचकत्वेन प्रसिद्धस्य तदर्थप्रकाशनात् पर्यायेण शब्दान्तरेण साधिता उपन्यस्तशब्दपर्यायसाधिता। उपन्यस्तपर्यायार्थप्रसाधितेत्यपि पाठः। तत्र उपन्यस्तार्थानुगमकल्पितस्य तदर्थप्रकाशनात् पर्यायस्य शब्दान्तरस्यार्थे प्रसाधिता उपन्यस्तपर्यायार्थप्रसाधिता इति व्याख्येयम्। सा तादृशी समानशब्दा नाम प्रहेलिका।

साक्षात् वाचकव्यापारेण अर्थो निर्दिष्टः प्रतिपादितोऽस्याम् इति निर्दिष्टार्थापि। अतिशये अपिशब्दः। मूढये तत्त्वार्थाप्रतिपत्तये स्यात्। साध्यसंमोहकरत्वात् संमूढा नाम प्रहेलिका ज्ञेया ॥[1]

योगमालात्मकं नाम यस्याः सा पारिहारिकी।
एकच्छन्नाश्रितं व्यज्य यस्यामाश्रयगोपनम् ॥१०४॥

योगानां सम्बन्धानां माला बाहुल्यं सा आत्मा तन्निमित्तत्वाद् यस्य तद् योगमालात्मकं नाम संज्ञानं प्रसिद्धं यस्याः [109a] सम्बन्धि तत्समयत्वात् सा प्रहेलिका प्रसिद्धनामपरिहारयोगात् पारिहारिकी नाम स्यात्।

यस्या[माश्रित]माधेयं व्यज्य प्रकाश्य साक्षादभिधानात् आश्रयस्य आधारस्य गोपनं निगूहनं तद्वाचकस्य प्रयोगात् सा भवेदेकच्छन्ना नाम प्रहेलिका, एकस्याश्रितस्यैव छन्नत्वात् ॥

सा भवेदुभयच्छन्ना यस्यामुभयगोपनम्।
संकीर्णा नाम सा यस्यां नानालक्षणसंकरः ॥१०५॥

यस्यामुभयस्याश्रितस्य [आश्रयस्य] च गोपनमावरणम्, उभयच्छन्ना नाम सा प्रहेलिका स्यात्।

यस्यां नानालक्षणस्य समागतादिरूपस्यानेकस्य संकरः संभेदः स्यात्, सा सङ्कीर्णा नाम प्रहेलिका भवेत् ॥

एताः षोडश निर्दिष्टाः पूर्वाचार्यैः प्रहेलिकाः।
दुष्टप्रहेलिकाश्चान्यास्तैरधीताश्चतुर्दश ॥१०६॥

---

१. अत्र श्लोकव्याख्यायां द्वेधा गूढये इति पाठ उदाहरणविरोधात् त्यक्तः।

एता यथोक्तलक्षणाः षोडश प्रहेलिका निर्दिष्टा उक्ताः पूर्वैराचार्यै रामशर्मादिभिः। तल्लक्षणाविरोधात् दुष्टाः हेयाश्च ताः प्रहेलिकाश्चेति दुष्टप्रहेलिकाः। न केवलमदुष्टाः। अत एव समागतादिविलक्षणत्वाद् अन्याश्चतुर्दश तैः पूर्वाचार्यैरधीता निर्दिष्टा इति ॥

ताः किमिह नोच्यन्त इति चेदाह—

दोषानपरिसंख्येयान् मन्यमाना वयं पुनः ।
साध्वीरेवाभिधास्यामस्ता दुष्टा यास्त्वलक्षणाः ॥१०७॥

वयं पुनः। विशेषविवक्षायां पुनः शब्दः। दोषाः प्रहेलिकासम्भविनः हेयाः प्रहेलिका[श्च] अपरिसंख्येयाः। न लक्षणतो न लक्ष्यतश्च गुणवदादरेणाप्रतिपाद्यान् मन्यमानाः पश्यन्तः साध्वीरेव प्रहेलिका अभिधास्यामः।

नन्वेवमपार्थादयोऽपि दोषा अपरिसंख्येयाः स्युः, विशेषहेत्वभावात्? नैतदेवम्। अपार्थादयो हि दोषाः क्वचिद् गुणा अपि। यद्वक्ष्यति—

तन्मत्तोन्मत्तबालानामुक्तेरन्यत्र दुष्यति।

[३. १२८]

इत्यादि। ततस्ते चिन्तनीयाः। प्रहेलिकादोषास्तु न क्वचिद् गुणा अपि, यतोऽपार्थादिवन्निरूपणीयाः स्युः। अतश्च अपार्थादयो वक्तव्या यतः सर्वकाव्यसम्भविनस्ते दोषाः। प्रहेलिकादोषास्तु प्रादेशिका इत्याशयवता उक्तम्- दोषानित्यादि। यद्वा, प्रहेलिकादोषा अपरापरदोषसम्भवेन चतुर्दशेति इयत्तया अपरिसंख्येयाः। ततश्चातिप्रसङ्गान्नोच्यन्ते इत्यभिप्रायेणोक्तम्- दोषानित्यादि। अपार्थादयस्तु सर्वकाव्यदोषाः परिसंख्या[ताः]। तथैव न तद्वचनेऽतिप्रसङ्ग इति चाकूतम्। अत एवाभिधास्यति-

दोषा दशैव

[३. १२६]

इति। कथं तर्हि दुष्टप्रहेलिका ज्ञायन्ते यथा [109b] वर्ज्येरन्। न हि दुष्टतया अज्ञातानां परिहारः संभवतीत्याशङ्क्य तत्प्रत्युपायमाह- याः प्रहेलिकाः। तुशब्दः



अर्थान्तरविवक्षायाम्। यथोक्तलक्षणविरहात् न विद्यते लक्षणमासामित्यलक्षणाः, ताः स्वयमेव दुष्टा ज्ञायन्ते। प्रतिनियतलक्षणव्युत्पत्तेः, अतल्लक्षणानां तदाभासताप्रतिपत्तेः। किं तासां प्रपञ्चप्रयासेनेति ?

न मयागोरसाभिज्ञं चेतः कस्मात् प्रकुप्यसि ।
अस्थानरुदितैरेतैरलमालोहितेक्षणे ॥१०८॥

हे मम चेतः, आगसोऽपराधस्य व्यलीकस्य रसं स्वादमाचरणरूपम् अभिजानातीत्यागोरसाभिज्ञं कृतदोषं न भवति। ततो निरागसे मह्यं कस्मात् कारणात् प्रकुप्यसि ? न किञ्चित् कारणम्। ततश्चायमकारणः कोपो न कार्य इति वारयति। व्यलीकलक्षणकोपस्थानाभावादस्थाने अकाण्डे रुदितैरश्रुपातै कोपमयैः एतैरिति प्रत्यक्षनिर्देशः। अलं वारणे। मा रोदीरित्यर्थः। आलोहितेक्षणे इति प्रियामन्त्रणम्। मे आगोरसाभिज्ञमित्यनयोः पादयोः मयागोरसाभिज्ञमिति अयादेशेन सन्धिना विवक्षितार्थस्य गूढार्थत्वात् समागतेयमुदाहृतेति ॥

कुब्जामासेवमानस्य यथा ते वर्धते रतिः ।
नैवं निर्विशतो नारीरमरस्त्रीविडम्बिनीः ॥१०९॥

कुब्जां स्त्रियमासेवमानस्य निर्विशतः ते तव रतिः प्रमोदो वर्द्धते। यथा एवं तथा अमरस्त्रीविडम्बिर्नादिव्याङ्गनासमाना नारीर्निर्विशतः सेवमानस्य रतिर्न वर्धते। तत्रैव तवाधिकारादित्यर्थः। अत्र कुब्जा [इत्यनेन] कन्याकुब्जा विवक्षिता यथा सत्यभामा भामेति। तद्गतिस्तद्गतौ वा। पुरुषः कुब्जाशब्देन भग्नपृष्ठदेशायां योषिति रूढेन तत्र प्रतीतिजननात् वञ्च्यत इति वञ्चितेयं निदर्शिता ॥

दण्डे चुम्बति पद्मिन्या हंसः कर्कशकण्टके ।
मुखं वल्गुरवं कुर्वस्तुण्डेनाङ्गानि घट्टयन् ॥११०॥

अत्र पद्मिन्या मुखं कमलरूपं तुण्डेन चञ्च्वा चुम्बति हंसः, वल्गु मनोहरं यथा भवति तथा रवं रुतं कुर्वन् कर्कशः कण्टकोऽस्मिन्निति कर्कशकण्टके पद्मिन्या दण्डे नाले अङ्गानि अवयवान् घट्टयन् कण्डूयमान इत्ययमत्रार्थो विवक्षितः। तत्र च दण्डे चुम्बतीत्यादिव्यवहितपदप्रयोगान्मोहो जायत इति व्युत्क्रान्ता इयमुदाहृता ॥

खातयः कनि काले ते स्फातयः स्फीतवल्गवः ।
चन्द्रे साक्षाद्भवन्त्यत्र वायवो मम चारिणः ॥१११॥

हे कनि कन्ये ! ते तव काले पादे चन्द्रे मनोज्ञे चन्द्रे वा हे कमनीये प्रिया-[110a]मन्त्रणमेतत् । खातयः किङ्किणिकाः नूपुरादिरूपा स्फातयः स्फीताः पर्याप्त-शोभाः स्फीतवल्गवः मधुरघनारसाः साक्षाद्भवन्ति । प्रत्यक्षतामुपयान्ति । तन्निनद-ग्रहणादाकर्णान्तचक्षुषा वा गृह्यन्त इत्यर्थः । अत्रेदृशमनोज्ञवस्तुसाक्षात्करणे मम वायवः प्राणाः । रागाभिभवात् चारिणोऽनवस्थायिनः । यान्तीत्यर्थः । एवं दुर्बोधार्थपद-प्रयोगात् प्रमुषितेयं लक्षितेति ॥

अत्रोद्याने मया दृष्टा वल्लरी पञ्चपल्लवा ।
पल्लवे पल्लवे चाद्री यस्याः कुसुममञ्जरी ॥११२॥

वल्लरीति स्त्रीत्वसाधर्म्येण काचिद् योषिद् विवक्षिता । पल्लवशब्देन च तत्साम्यादङ्गुलयः कुसुममञ्जरीति च तत्सादृश्यात् नखाः । शेषं सुगमम् । एवं गौणार्थप्रयुक्तैर्वल्लरीत्यादि शब्दैः साधितेयं समानरूपा निरूपितेति ॥

सुराः सुरालये स्वैरं भ्रमन्ति दशनार्चिषा ।
मज्जन्त इव मत्तास्ते सौरे सरसि संप्रति ॥११३॥

सुरां कुर्वन्तीति तत्करोति तदाचष्ट इति णिजन्तात् सुरयतीति कर्तर्यचि विहिते सुराः शौण्डिकाः । मत्तास्ते केचित् विवक्षिताः । सुराया आलये मदिरामन्दिरे सम्प्रति स्वैरं यथेष्टं भ्रमन्ति । दशनार्चिषा दन्तप्रभया परितः स्फुरन्त्या लक्षिताः । सुराया इदं सौरे मद्यसरसि ह्रदे मज्जन्त इव लक्ष्यमाणाः । सुरा इत्यस्य शौण्डिकेषु सुरासम्बन्धिनि च सौर इत्यस्याप्रसिद्धेः । लक्षणस्य च तादृशस्य सम्भवात् परुषेयम् आविष्कृतेति ॥

नासिक्यमध्या परितश्चातुर्वर्ण्यविभूषिता ।
अस्ति काचित् पुरी यस्यामष्टवर्णाह्वया नृपाः ॥११४॥

नासिक्यो वर्णो ञकारोऽत्र विवक्षितः । मध्ये मध्यो वा यस्याः सा नासिक्य-मध्या । परित आद्यन्ततः । चतुर्भिर्वर्णैः विभूषिता अस्ति वर्तते पुरी काचित् ।



यस्यां पुर्यामष्टौ वर्णा आह्वयः संज्ञा येषामित्यष्टवर्णाह्वया नृपा राजानः सन्ति । अत्र काञ्ची पुरी पल्लवाश्च तस्यां नृपा इति परमार्थः । चतुरादिसंख्योपादानं तु तद्वि-वक्षितार्थव्यामोहकरमिति संख्यातेयमाख्यातेति ॥

गिरा स्खलन्त्या नम्रेण शिरसा दीनया दृशा ।
तिष्ठन्तमपि सोत्कम्पं वृद्धे ! मां नानुकम्पसे ॥११५॥

स्खलन्त्या दौर्गत्योपहतस्येश्वरेषु प्रतिभाक्षयगृहीतस्य व्याकुलवचनत्वाद्, रागादेशाच्चेति द्वैधम् । नम्रेण शिरसा दुर्विधस्य पराराधनपरत्वात् रागरसाच्चेति अपरं द्वैधम् । दीनया दृशा दरिद्रेण निरानन्दत्वात् [110b] अभिमतरागविषया-सिद्धेश्चेत्यपरं द्वैधम् । सोत्कम्पमत्यन्तं क्षीणत्वात् कामावेशाच्चेति इदमपि द्विधा । वृद्धा शब्दस्य जरतीवाचिनः संबोधने वृद्धे इति । [तथैव] वृद्धाशब्दस्य लक्ष्मीवचनस्य इत्यपरं द्वैधम् । एवं तिष्ठन्तमनुकम्पाभाजनमपि किं मां नानुकम्पसे ? अत्र कश्चिद् दरिद्रो लक्ष्मीं लभताम् इति विवक्षितो वाक्यार्थः । वृद्धां काञ्चित् योषितमाभाषते कश्चित् कामीति अन्यस्त्वर्थः प्रतिभाति । तदियं प्रकल्पिता निदर्शितेति ॥

आदौ राजेत्यधीराक्षि ! पार्थिवः कोऽपि गीयते ।
सनातनश्च नैवासौ राजा नैव सनातनः ॥११६॥

हे अधीराक्षि ! कोऽपि कश्चिदनिर्धारितरूपविशेषः पार्थिवः पृथिवीपतिः वृक्षश्च इति श्लिष्टम् । आदौ प्रथमतो राजेत्येवं गीयते कीर्त्यते । सनातनश्च गीयते । सनातनश्च शाश्वतः, विष्णुर्वा । न विद्यतेऽतनः शब्दोऽस्मिन्निति अतनः स पार्थिवः । आदौ राजेति यो गीयते, न अतनः किं तु तनः शब्दसहित एवेति त्रैविध्यम् । यद्वा न तन अतनः । न तथा नातनः । सह तेन वर्तत इति सनातनश्च कोऽपि पार्थिवो गीयते । स एवार्थः । व्युत्पत्तिमात्रेण भिद्यते । असौ पूर्वोक्तः । आदौ राजा सनातनश्च नैव राजा महीपतिराद्यः । नापि सनातनः शाश्वतो विष्णुर्वा भवति । राजातन इति वृक्षविशेषस्य नाम, यस्य क्षीरीति प्रसिद्धिः । तत्रेयं नानार्थकल्पनेति नामान्तरितेयमुदीरिता ॥

हृतद्रव्यं जनं त्यक्त्वा धनवन्तं व्रजन्ति काः ।
नानाभङ्गिशताकृष्टलोका वेश्या न दुर्धराः ॥११७॥

हृतं द्रव्यमस्मादिति हृतद्रव्यं निर्धनं नरं त्यक्त्वा धनवन्तं नरं का व्रजन्ति ? नाना अनेकप्रकाराणां भङ्गीनां शृङ्गारचेष्टालक्षणानां शतैः । बहुत्वोपलक्षणमे[तत्] । आकृष्टा वशीकृता लोकाः पुरुषा याभिरिति नानाभङ्गि[शता]कृष्टलोकाः दुर्धरा दुर्वारा अनाय[त्त]त्वात् । वेश्या गणिका एवंविधा भवेयुरिति उत्तरमाशङ्क्य निषेधति– एवंविधाः सत्योऽपि न वेश्याः किं तु श्रिय इत्यत्रोत्तरम् । अतो नानाभङ्गिशताकृष्ट-लोका इत्यादेः तुल्यधर्मस्पृशो गिरः श्रिय इत्यस्मिन्नर्थे निभृतत्वाद् व्यवस्थानात् तया वा श्रिय इत्यस्यार्थस्य निभृतत्वान्निगूढत्वात् निभृतेयमुदाहृता ॥

जितप्रकृष्टकेशाख्यो यस्तवाभूमिसाह्वयः ।
असौ मामुत्कमधिकं करोति कलभाषिणि ॥११८॥

कलभाषिणि ! जितस्तदुपमितः प्रकृष्टस्य [111a] केशस्याख्या संज्ञा यस्य स प्रकृष्टकेशाख्यः प्रवालः येनेति जितप्रकृष्टकेशाख्यः प्रवालोपम [इत्यर्थः] । न विद्यते भूमिरस्येति अभूमिः । तेन अर्थतः समानः आह्वयः संज्ञा यस्या असौ अभूमिसाह्वयः अधरः तव यः । असौ अयं मामुत्कमुन्मनसमधिकमत्यर्थं करोति । एवं कल्पित-प्रसिद्धशब्दपर्यायसाधितेयं समानशब्दा निदर्शितेति ॥

शयनीये परावृत्य शयितौ कामिनौ रुषा ।
तथैव शयितौ रागात् स्वैरं मुखमचुम्बताम् ॥११९॥

कामी च कामिनी च कामिनौ स्त्रीपुंसौ रुषा प्रणयकलहेन हेतुना परावृत्य पराङ्मुखीभू[य] शयनीये तल्पे शयितौ । तथैव परावृत्त्यैव मुखमन्योन्यस्य स्वैरं यथेष्टं रागादचुम्बताम् चुम्बितवन्तौ इति मोहो जायते । कथं नाम परावृत्य शयितौ स्वैरं मुखं चुम्बत इति ? यथा पूर्वं संमुखं शयितौ तथैव पुनः संविष्टौ रागपरवशतया स्वैरं मुखमचुम्बतामिति तु परमार्थः । इयमेव साक्षान्निर्दिष्टार्थापि संमोहकारिणीति संमूढा दर्शिता ॥

विजितात्मभवद्वेषिगुरुपादहतो जनः ।
हिमापहामित्रधरैर्व्याप्तं व्योमाभिनन्दति ॥१२०॥



विना पक्षिणा गरुडेन । सामर्थ्यात् तेन किल देवराजमभिभूय कदाचिद-मृतमाहृतम् । [जितम] विजितम् आत्मसात् कृतम् [अन्नमाहारो] यस्य स विजितान्नः अमृतभोजी । स चार्थादिन्द्रः । भवत्यस्मादिति भवः । विजितान्नो भवो जन्महेतुर्जनकः । यस्य यस्माद् वा भवो भवनं जन्म यस्य स विजितान्नभव अर्जुनः तं द्वेष्टी[ति] विजितान्नभवद्वेषी कर्णः । तस्य गुरुरादित्यः । तस्य पादैः किरणैः हतस्तप्तः । तादृशो जनो व्योम गगनमभिनन्दति । प्रीतिनिर्भरेणान्तःकरणेन गृह्णाति । किंविशिष्टम् ? हिममपहन्तीति हिमापहः अग्निः । तस्यामित्रम् उदकम् । तद् धार-यन्तीति हिमापहामित्रधरा मेघाः । तैर्व्याप्तम् । अत्र विजयसम्बन्धाद् विजितमित्य-मृतस्य भानं निवृत्तम् । तत्सम्बन्धाच्च विजितान्न इतीन्द्रस्य । तस्माद् जन्मयोगाद् विजितान्नभव इत्यर्जुनस्य । तद्वैरयोगाच्च विजितान्नभवद्वेषीति कर्णस्य । तज्जन्म-योगाच्च विजितान्नभवद्वेषिगुरुरित्या[दित्य]स्य । [111b] हिमोपघातयोगेन हिमापह इत्यग्नेः । तदमित्रतायोगाच्च हिमापहामित्रमित्युदकस्य । तद्धारणसम्बन्धाच्च हिमा-पहामित्रधरा इति मेघानाम् । एवं सम्बन्धपारिहारिकीयमुदाहृता ॥

न स्पृशत्यायुधं जातु न स्त्रीणां स्तनमण्डलम् ।
अमनुष्यस्य कस्यापि हस्तोऽयं न किलाफलः ॥१२१॥

अमनुष्यस्य कस्याप्यनिर्धारितरूपविशेषस्य हस्तः जातु कदाचिदपि आयुधं न स्पृशति गृह्णाति । न च स्त्रीणां स्तनमण्डलं पयोधरभारं स्पृशति । अयमेवं फलभूत-कर्मरहितो हस्तो नाफलः सफलः किल । नान्यादृशं साफल्यमस्यास्मभ्यं रोचत इति किलशब्देन सूचयति । अत्राश्रितो हस्तः अभिव्यक्तो वाचकप्रयोगात् । आश्रयस्तु गोपितः, गन्धर्वहस्त इति साक्षादनभिधानात् । गन्धर्वहस्त इति चाभिधानमेरण्डस्य । तदियमेकच्छन्ना दर्शितेति ॥

केन कः सह सम्भूय सर्वकार्येषु सन्निधिम् ।
लब्ध्वा भोजनकाले तु यदि दृष्टो निरस्यते ॥१२२॥

केन शिरसा सह सम्भूय संगत्य सर्वेषु कार्यादिषु स्नाना[धि]वासनादिषु सन्निधिमुपस्थानं लब्ध्वा प्राप्य भोजनकाले अन्नगतो यदि कथञ्चिद् दृष्टः स्यात्, तदा कः तादृशो नि[र]स्यते ? केशः । तस्य तादृशत्वात् । अत्र केन क इति सामान्यपद-

प्रयोगादाश्रयः शिरोलक्षणः आश्रितश्च केशः। तौ च्छन्नौ इत्युभयच्छन्नेयमुदाहृता। केनेश इति [पाठे] केन ककारेण ईशशब्दः सम्भूय, शेषं पूर्ववत्। केन ब्रह्मणा ईशः शङ्कर इति चार्थान्तरं वाच्यम। तन्महाप्रयोगादुभय[गो]पनं प्रागिवेति व्याख्येयम॥

सहया सगजा सेना सभटेयं न चेज्जिता।
अमातृकोऽयं मूढः स्यादक्षरज्ञस्तु नः सुतः॥१२३॥

सह हयैरश्वै सह गजैर्भटैश्च सह [112a] वर्तत इति सहया सगजा सभटेयं चेद् या न जिता नाक्रान्ता तदा नोऽस्माकं सुतः अमातृकः अजननीकः। अ[न]क्षरज्ञश्च मूढः स्यादिति [आपाततो]ऽयमर्थः। तत्त्वार्थस्तु हश्च यश्च ताभ्यां वर्णाभ्यां सह वर्तत इति। सह यो गश्च जश्च वर्णः, ताभ्यां सह सगजा। इश्च नश्च वर्णः। ताभ्यां युक्ता सेना, भकारटकाराभ्यां योगात् सभटा। एवंविधा च सिद्धा मातृका सा इयं चेन्न जिता सम्यगध्ययनयोगेन यदि न वशीकृता स्यात्, तदा अयं नः सुतः। न विद्यते मातृका वर्णसमाम्नायः। अनधीतत्वादस्येति अमातृकः अत एव शास्त्रापरिज्ञानात् मूढो मूर्खः हेयोपादेयज्ञानविकलः स्यान्। न क्षरति न नश्यतीत्यक्षरं वेदं जानातीत्यक्षरज्ञस्तु वेदमात्रपाठकस्तु स्यात्। न मातृकाध्ययनेनापि वेदपाठसम्भवात्। अक्षरज्ञश्चेत्यपि पाठः। तत्र मूर्खतया नश्वरपदार्थस्वभावापरिज्ञानादक्षरं सर्वं नित्यं जानीयादित्यक्षरज्ञश्च नित्यग्रहगुप्तश्च भवेत्॥

कतरोऽयं संकर इति दर्शयति—

सा नामान्तरितामिश्रवञ्चितारूपयोगिनी।
एवमेवेतरासामप्युन्नेयः संकरक्रमः॥१२४॥

सेयं प्रक्रान्ता प्रहेलिका तल्लक्षणयोगान्नामान्तरितया मिश्रेण संसृष्टेन वञ्चिताया रूपेण योगः सम्बन्धोऽस्यास्तीति नामान्तरितामिश्रवञ्चितारूपयोगिनी। मातृकेत्यस्मिन्नाम्नि सहयेत्यादिनानेकार्थकल्पनादमातृकाशब्देनाजननी, मूढेनानधीतसिद्धमातृकाप्रतीतिविप्रलम्भात्, अक्षरज्ञशब्देन च वर्णज्ञप्रसिद्धेन वेदवेदिन्यविनश्वरज्ञेवानिश्चयवञ्चनात्।

संकरशेषमतिदिशन् प्रस्तावमिमं निगमयति- एवमेव यथोक्तसंकरानुसारेण इतरासामपि [112b] नामान्तरितावञ्चिताव्यतिरिक्तानां च। न केवलमनयोः।



संकरस्य संसर्गस्य क्रमः प्रकार उन्नेयोऽभ्यूह्यः। स चैव मुन्नीयताम्—

सुराप्रयोगेप्रसृता विप्राः शूद्रान्नभोजिनः।
आम्नायाध्ययनं त्यक्त्वायुध्यन्तः पाप[माश्रिताः]॥
समागता [व्युत्क्रान्तयोः] संकरः।

विशालेऽत्र गिरौ दृष्टो गिरिनं सक्तनिर्झरः।
यश्चार्क[पिशितासा]ख्यो दोलायेत प्रतिक्षणम्॥
समानरूपासमानशब्दयोरयं संकरः।

लक्ष्मीधरपतेः कान्तं गता गङ्गाधराङ्गना।
चन्द्रा[धारे] परीतापः कुतोयं मे तवोदये॥
पारिहारिकीप्रकल्पितयोः संकरः।

॥ इति प्रहेलिकाचक्रम्॥

एवं शब्दालङ्कारस्वभावाः काव्यगुणा यथावत् प्रतिपादि[ताः]। दोषा अपि केचिदसाधारणवैदर्भमार्गसम्भविनः श्लेपादयः। संप्रति सर्वमार्गसाधारणानुपदर्शयन्नाह—

अपार्थं व्यर्थमेकार्थं ससंशयमपक्रमम्।
शब्दहीनं यतिभ्रष्टं भिन्नवृत्तं विसन्धिकम्॥१२५॥

देशकालकलालोकन्यायागमविरोधि च।
इति दोषा दशैवैते वर्ज्याः काव्येषु सूरिभिः॥१२६॥

अपगतोऽर्थः अभिधेयो वाक्यसम्वन्धि यत इत्यपार्थम्। विरुद्धः पूर्वापराहतः अर्थोऽभिधेयो यस्मिन्निति व्यर्थम्। एकः स एव प्रतिपादितोऽर्थोऽभिधेयः पुनर्यस्मिन प्रतिपाद्यते तदेकार्थम्। संशयोऽर्थविषयः, किमयमर्थोऽयं वेत्युभयार्थावलम्बी प्रत्ययः, तेन [स]ह वर्तते तज्जनकत्वादिति ससंशयम्। अपगतः क्रमो यथोद्देशं प्रत्याम्नायंत इत्यपक्रमम्। शब्देन शब्दविद्याप्रसिद्धेन पदेन हीनं रहितं तद्विपक्षयोगादिति शब्दहीनम्। यतेः छन्दःशास्त्रविहितात् विगमात् भ्रष्टमपगतमिति यतिभ्रष्टम्। भिन्नं

छन्दोविचितिविद्यारूढं वृत्तं पद्यं जातेरपि विरोधसम्भवात यस्मिन्निति भिन्नवृत्तम। विगतः सन्धिः शब्दशास्त्रप्रसिद्धो यणादेशादिर्यस्मिन्निति विसन्धिकम ॥

देशः पर्वतादिः। कालो दिवसादिः। कला नृत्यगीतादिविद्याः। लोकश्च सत्त्वलोको भाजनलोको वा चित्रप्रचारः। न्यायश्चान्वीक्षिकी। आगमश्च वेदादिः। देशाकालकलालोकन्यायागमाः। तैर्विरोधो बाधा विद्यतेऽस्मिन्निति देशकालकलालोकन्यायागमविरोधि च तत्तद्व्यवस्थातिक्रमात्। विरोधीत्येतद्देशादिभिः प्रत्येकं सम्बन्धनीयम्। चकार उक्तसमुच्चये। इत्येते अनन्तरोद्दिष्टा दशैव। अन्यूनानतिरिक्ता दोषा गुणविपक्षत्वाद् वर्ज्याः शास्त्रचक्षुषा दृष्ट्वा परिहर्तव्याः। सूरिभिः प्रतिपत्तृभिः। कुत्र? काव्येषु पूर्वोक्तरूपेषु। काव्यविशेषदोषाणामपि क्वचित् केषाञ्चित् प्रतिनियमात्। तत्सम्भवित्वात् काव्यदोषास्ते, यथा हेतुसम्भ[वि]नो[113a]ऽसिद्धादयो हेतुदोषाः। यथा चाराञ्जिकादयो धान्यसम्भविनो धान्यदोषा उच्यन्ते लोके। अत्रापार्थादयो यदा भावप्रधानाः, तदा अपार्थत्वादयो दूषणानीति भावसाधनेन दोषाः। दूषयन्ति वा काव्यव्यपदेशमात्रेण क्वचिद् वा अपवादविषये काव्यमेवेति तत्त्वात् अन्यत्रेति दोषाः। यद्वक्ष्यति—

तन्मत्तोन्मत्तबालानामुक्तेरन्यत्र दुष्यति।
[ ३. १२८ ]

इत्यादि। तद्योगात् काव्यं दुष्टमिति ज्ञेयम्। यदा तु धर्मप्रधानाः, तदा अपार्थादयो दुष्यन्ति हेया भवन्तीति दोषाः। तदाभासत्वाच्च काव्येषु दोषाः। यथा दृष्टान्ताभासा दृष्टान्तेषु, शब्दाभासाः शब्देष्विति सर्वथा काव्यदोषास्ते वर्जनीया स्मृतिमतेति ॥

अथ

प्रतिज्ञाहेतुदृष्टान्तहीनं दुष्टं च वर्ण्यते।
समासेन यथान्यायं तन्मात्रार्थप्रतीतये ॥
[ काव्यालङ्कारे ५. १ ]

इत्यादिना विस्तरेण प्रतिज्ञाहान्यादयो दोषाः काव्यलक्षणान्तरे दर्शिताः। ते किमिह नोच्यन्त इति चेदाह—

**प्रतिज्ञाहेतुदृष्टान्तहानिर्दोषो न वेत्यसौ।**
**विचारः कर्कशप्रायस्तेनालीढेन किं फलम् ॥१२७॥**



प्रतिज्ञा साध्यनिर्देशः, विधिरूपो निषेधलक्षणो वा। साध्यस्य सर्वस्य सदसत्त्वाभ्यां व्याप्तेः। स च प्रमाणान्तराव्याहतः। प्रमाणान्तरानिरस्तस्याहेतुगोचरत्वात्। यथोक्तम्—

सन्दिग्धे हेतुवचनाद् व्यस्तो हेतुरनाश्रयः।
[ प्रमाणवार्त्तिके ४. ६१ ]

इति। तथा

हेतुभिस्त्राणमुपेतं नैव यो हतः।
[ ]

इत्यादिः। अन्यत्र तद्विस्तरः। हेतुः, तस्या एवंरूपायाः प्रतिज्ञाया साधनभूतोऽर्थः त्रिरूपोऽन्यो वा। तस्यापि तल्लक्षणशास्त्रे विस्तरः। दृष्टान्तः साध्यसाधनयोः सम्बन्धप्रतिपत्तिविषयभूतोऽर्थः कश्चित। स च साधर्म्यदृष्टान्तो वैधर्म्यदृष्टान्तश्चेत्यादिना अन्यत्र निर्णीतः। तेषां त्रयाणां हानिर्यथा[क्रमं] प्रतिज्ञाहेतुदृष्टान्तहानिः। [द्वन्द्वात् परं श्रूयमाणस्य] प्रत्येकमभिसम्बन्धात् प्रतिज्ञाहानिः हेतुहानिः दृष्टान्तहानिश्चेति त्रिविधो भवति। तत्र प्रतिज्ञाहानिः- तयैव प्रतिज्ञया हेतुना सिद्धान्तेन सर्वागमैः प्रसिद्धधर्मतया प्रत्यक्षेण च बाधेत्यनेकधा। यथोक्तं भामहेन—

तदर्थहेतुसिद्धान्तसर्वागमविरोधिनी।
[113b] प्रसिद्धधर्मा प्रत्यक्षबाधिनी चेति दुष्यति ॥
[ काव्यालङ्कारे ५. १३ ]

इति। हेतुहानिरसिद्धत्वादिलक्षणः। यथोक्तम्—

हेतुस्त्रिलक्षणो ज्ञेयो हेत्वाभासो विपर्ययात्।
[काव्यालङ्कारे ५ २१]

इति। तस्यान्यत्र विस्तरः। दृष्टान्तहानिः साध्यधर्मविरहादिरूपात्। तदुक्तम्—

साध्यसाधनधर्माभ्यां सिद्धो दृष्टान्त उच्यते।
तद्विपर्ययतो वापि तदाभस्तदवृत्तितः ॥
[ काव्यालङ्कारे ५. २६ ]

इति । तद्विस्तरोऽप्यन्यत्रैव । सेयं त्रिविधा हानिः प्रत्येकमनेकशो नाना काव्येषु दोषः । वैगुण्यं वा दोषो वेति सदसत्पक्षविकल्पनम । विचारोऽयं [वि]गृह्य परीक्षा[या] इह कथञ्चित् प्रस्तुतत्वेऽपि [मुख्यतस्तस्याः] तर्कशास्त्र[गोचर]त्वात् कर्कशप्रायः कर्कशभागः अतिगम्भीरत्वादिहानधिकाराच्च, प्रायो भूयान् यस्मिन्निति कृत्वा । तेन वा प्रायो बहुलः । प्रायेण भूम्ना वा कर्कशः कर्कशप्रायः । राजदन्तादिषु दर्शनात् पूर्वनिपातः। कर्कशप्रायः कठिनभूयिष्ठः अरञ्जक इति यावत् । इह च कोमलप्रायः काव्यप्रतिनियतः गुणदोषविषयो विचारोऽधिकृतः । तस्मात् तेन कर्कशप्रायेण विचारेण आलीढेन अनुष्ठानमुखेनाहतेन किं फलम् ? काव्यप्रतिनियतगुणदोषनिर्णयरूपं प्रयोजनं किमस्ति ? नैवेत्याशय. । तथा चाह—

काव्यलक्षणे काव्यप्रतिनियता दोषा गुणाश्च विचार्यन्ते । न शास्त्रान्तरसाधारणा अपि, सर्वशास्त्रसमुच्चयप्रसङ्गात् । ततश्च अत्रैव सर्वगुणदोषव्युत्पत्तौ शास्त्रान्तराणि व्यर्थानि स्युः, तावन्मात्रफलत्वाद् विद्यास्थानानाम् । तत्रैतत्प्रतिनियतव्युत्पत्तेरन्यतः सिद्धेरिदमपि व्यर्थं स्यात्, सर्वत्र प्रतिनियमाभावात् । न चैवम्, गुणदोषव्युत्पत्तीनां प्रतिशास्त्रं नियमदर्शनात् । अथ काव्याङ्गत्वात् प्रतिज्ञाभेदादिकं विद्यान्तरमपि संक्षिप्तमिहाभिधानीयम् । तत् किं छन्दोविचित्यादिकं तत्र नाभिमतम् ? तस्यापि काव्याङ्गत्वेन निमित्तस्य समानत्वात् । न च यत्किञ्चिदिह दर्शितम् इत्येतावता शास्त्रान्तरे सम्यग्ज्ञानं सम्पद्यते, पुनस्तच्छास्त्रादेव यथावदवगमव्यपेक्षणात् ज्ञानानां [च] प्रतिशास्त्रं नियतत्वात् । ततस्तत एव तत्तज्ज्ञानमपेक्षणीयम् । यत् पुनः काव्यलक्षणस्यास्य प्रमाणलक्षणीकरणम् ; तदाहोपुरुपिकामात्रमिति सूक्तमिदं तेनालीढेन किं फलमिति ॥

[114a] एषां यथोद्देशं सनिर्देशं सापवादं [विवरणं] कर्तुं प्रक्रमते—

समुदायार्थशून्यं यत् तदपार्थमितीष्यते ।
तन्मत्तोन्मत्तबालानामुक्तेरन्यत्र दुष्यति ॥१२८॥

[1]समुदायस्य प्रकरणात् पदसम्बन्धिनो वाक्यस्य अर्थोऽभिधेयम् अङ्गाङ्गिभूतक्रियाकारकसम्बन्धविशेषलक्षणं सांव्यवहारिकम् । तेन शून्यं रहितम् । न पदार्थ-

[1] समुदायार्थं इत्यारभ्य श्लोकत्रितयटीकायां मातृकास्थक्रमः असंलग्न इति कृत्वा अर्थपर्यालोचनेन शोभनतरः क्रमः स्वीकृतः ॥



मात्रेण, तस्य क्वचिदप्यव्यभिचारात् । दशदाडिमानि षडपूपा इत्यादावपि पदार्थप्रत्ययोदयात् । यत् इत्यनूद्य तत् समुदायार्थशून्यम् अपार्थम् । इह दोषप्रस्तावे । अपार्थमिति वा अपार्थं नाम इष्यते स्मर्यत इति विधिः । तदपार्थं दुष्यति काव्यदोषो भवति इत्युत्सर्गः ! तस्यापवादमाह– मत्तेत्यादि । मत्ता मदिरामदादियोगात् । उन्मत्ता वायुक्षोभादिचित्तविक्षेपात् । बालाः हेयोपादेयज्ञानविकलाः अव्युत्पन्नाः तथा बालकल्पाः शक्तिविकला वृद्धा असंबद्धभाषिणः । तेषां तथाविधाया एवोक्तेरुचितत्वात् । सैव तेषां सूक्तिरिति । [अतः] तेषामुक्तेरन्यत्र सुभाषितविषये [तदिदमपार्थं] दुष्यति दुष्टं जायते ॥

तदुदाहरति–

समुद्रः पीयते देवैरहमस्मि जरातुरः ।
अमी गर्जन्ति जीमूता हरेरैरावणः प्रियः ॥१२९॥

न ह्यत्र समुद्रः पीयत इत्यादेः पदसमुदायस्य कश्चिदेकोऽर्थो गृह्यते यः काव्यार्थः स्यात् । अवयवार्था एवान[न्विताः] शलाकाकल्पाः प्रतिभान्ति । तदीदृशमपार्थं विज्ञेयम् ॥

उत्सर्ग[त]स्त्वसम्भवमिदमिति अपवादमुखेन निगमयन्नाह–

इदमस्वस्थचित्तानामभिधानमनिन्दितम् ।
इतरत्र कविः को वा प्रयुञ्जीतैवमादिकम् ॥१३०॥

इदमनन्तरोक्तमपार्थमभिधानं वचनम् अस्वस्थं चित्तमन्तः[करणं] येषामित्यस्वस्थचित्तानां मत्तोन्मत्तादीनां [अभिधानमनिन्दितं] स्यात् । अन्यत्र तु निन्दितम् । अथवा इतर[त्र] स्वस्थेषु विषये तत्कर्तृत्वकल्पनात् । एवमिदमनन्तरोक्तमपार्थमादिर्यस्य दशदाडिमादेस्तदेवमादिकमसम्बद्धं [वाक्यजातं] को नाम कविरकुशलोऽपि, प्रागेव निपुणः । प्रयुञ्जीत रचयेत् ? नैव [कश्चित् प्रयुङ्क्ते] । मूलहानेरतिस्थूलत्वाच्च नात्र भ्रान्तिः सम्भाव्य[त] इति भावः । वाक्यविकारत्वात् तु इदमपि कथञ्चित् काव्ये सम्भवेदिति सम्भवमात्रकल्पनया स्वस्थेष्वपि दर्शितमिति ॥

एकवाक्ये प्रबन्धे वा पूर्वापरपराहतम् ।
विरुद्धार्थतया व्यर्थमिति दोषेषु पठ्यते ॥१३१॥

एकं च तद् वाक्यं च इत्येकं वाक्यं पद्यात्मकं गद्य[मयं] वा [तत्र] प्रबन्धे वा सर्गबन्धादिके यत्र क्वचिदादौ मध्ये अन्ते वा पूर्वापराभ्यां पराहतं पूर्वापरविरुद्धं वचनं व्यर्थमिति व्यर्थं नाम पठ्यते ज्ञायते अत्र दोषेषु प्रकरणात् काव्यसम्बद्धेषु मध्ये । अयमपि काव्यदोष इति यावत् । कुतः ? विरुद्धः प्रतिषिद्धः अर्थोऽभिधेयम् यस्मिन् तस्य भावः । तया हेतुभूतया । न तु विगतार्थतया, अपार्थमित्येव तस्य संग्रहादिति ॥

जहि शत्रुकुलं कृत्स्नं जय विश्वम्भरामिमाम् ।
न हि ते कोऽपि विद्वेष्टा सर्वभूतानुकम्पिनः ॥१३२॥

शत्रूणां कुलं कृत्स्नं सर्वं जहि नाशय राजन् ! ततो निःसपत्नं विश्वम्भरां महीमिमां जय आत्मसात् कुरु । ते तव कोऽपि कश्चिद् विद्वेष्टा शत्रुर्न विद्यते । कुतः सर्वभूतानुकम्पिनः सर्वभूतहितैषित्वात् । अन्तर्भावितहेत्वर्थं विशेषणमिदम् । अत्र शत्रुः पूर्वं विहित एव पश्चात् तत्पर्यायेण निषिद्धः । पूर्वापराहतमीदृशं व्यर्थमेकवाक्यविषयमवगन्तव्यम् । प्रबन्धविषयं तु तत्र संभवेदिति ॥

अस्यापवादं दर्शयन्नाह—

अस्ति काचिदवस्था सा साभिषङ्गस्य चेतसः ।
यस्यां भवेदभिमता विरुद्धार्थापि भारती ॥१३३॥

यस्यामवस्थायां वक्तुः सम्बन्धिन्यां विषये । विरुद्धोऽर्थो यस्यामिति विरुद्धार्था पूर्वापराहताभिधेया अपि, न केवलमितरा । भारती वचनम् अभिमता अदुष्टा । तदा तथोचितत्वात् । चेतसः तादृशी कचित् समवस्था दशा अस्ति विद्यते । कस्य ? सहाभिषङ्गेण [आसक्त्या] कचिद् विषये स्त्र्यादौ वर्तते इति साभिषङ्गस्य अतिरक्तचेतसः सम्बन्धिनी कुतश्चित् मनोवस्थाविशेषाद् व्यर्थमप्यनिन्द्यमित्यर्थः ॥



तदुदाहरति—

परदाराभिलाषो मे कथमार्यस्य युज्यते ।
पिबामि तरलं तस्याः कदा नु दशनच्छदम् ॥१३४॥

परस्य दारेषु कलत्रे । अभिलाषः सङ्गमेच्छा । लोकशा[स्त्रविरुद्धो]ऽयं [115a] मे ममार्यस्य न्यायव्य[व]हारिणः सतः कथं नाम युज्यते संगच्छते ? नैवायं मम युज्यत इत्यर्थः । इत्थं कथञ्चित् प्रतिसंख्यानात् लब्धस्य विवेकस्य विपर्ययः पुनरभिषङ्गपरवशोऽनुपतितः । तस्याः परयोषितः कस्या[श्]चिदिष्टाया दशनच्छदमधरं तरलमुज्ज्वलं कदा नु पिबामि ? कतरत् तादृशं पुण्यदिनं भवेत् ! नु प्रार्थनायाम् । ईदृशं पूर्वापराहतमपि अत्यासक्त्याद्यवस्थानुगृहीतं न दुष्यति, तादृशस्यैव तदोचितत्वादिति ॥

अविशेषेण पूर्वोक्तं यदि भूयोऽपि कीर्त्यते ।
अर्थतः शब्दतो वापि तदेकार्थं मतं यथा ॥१३५॥

पूर्वोक्तं प्रथमं प्रयुक्तं शब्दार्थरूपं किञ्चित् भूयः पुनरपि यदि कथञ्चित् प्रमादात् कीर्त्यते प्रयुज्यते । कथम् ? अविशेषेण पूर्वोक्तमप्यर्थविशेषमनपेक्ष्य तावत्येवार्थे । यदि तु विशेषापेक्षा स्यात्, तदा नैकार्थमिति भावः । तदीदृशमेकार्थम् । अतः एकः पूर्वापरकालभाव्यर्थः अविशिष्टः अस्मिन्निति कृत्वा । कथम् ? अर्थतः अभिधेयेन पूर्वप्रतिपादितस्यैवार्थस्य अविशेषेण पुनः प्रतिपादनात् । शब्दतो वाचकेन वा हेतुना तावत्येव चार्थे पुनः शब्दप्रयोगात् । न पुनरर्थपौनरुक्त्यमनपेक्ष्य शब्दपौनरुक्त्यं स्वतन्त्रं दर्शयितुं शक्यम्, अर्थ[तो भिन्नस्य] एव शब्दस्य यमकादौ अपुनरुक्तेः । यत्र त्वर्थाभेदः तत्र तद्द्वारकं शब्दपौनरुक्त्यम् । अपीत्युभयथा दर्शितम् । यथेत्युदाहरति ॥

उत्कामुन्मनयन्त्येते बालां तदलकत्विषः ।
अम्भोधरास्तडित्वन्तो गम्भीराः स्तनयित्नवः ॥१३६॥

बालां स्त्रियं काञ्चित् । उत्काम् उत्कण्ठिताम् । उन्मनयन्ति उत्कण्ठयन्ति । उत्कण्ठतामात्रापेक्षायाम् इदमेकार्थम्, विशेषापेक्षा[राहित्ये]नेति द्रष्टव्यम् । एते प्रत्यक्ष-

वातनः। तस्या बालाया अलकानामिव त्विट् प्रभा येषामिति तदलकत्विपः। अम्भोधरास्तडित्वन्त इति अन्यतरेण मेघमात्रप्रतिपादनादेकार्थम । रूपविशेप-विवक्षायां तु अनेकार्थत्वं स्यात्। यथाह भारविः-

विभ्राणमानीलरुचं पिशङ्गी-
र्जटास्तडित्त्वन्तमिवाम्बुवाहम्।
[किरातार्जुनीये ३, १]

इति। गम्भीराः स्तनयित्नव इत्येकेनैव स्तननयोग्यस्य प्रतिपादनादुभयमेवार्थमविशेप-विवक्षायामिति ॥

अत्राप्यपवादं व्युत्पादयन्नाह—

**अनुकम्पाद्यतिशयो यदि कश्चिद् विवक्ष्यते।**
**न दोषः पुनरुक्तोऽपि प्रत्युतेयमलंकृतिः ॥१३७॥**

अनुकम्पा अनुक्रोश आदिर्यस्य विस्मयहर्षादेस्तस्य तद्रूपो वा अतिशयो विशेषः अनुकम्पाद्यतिशयः, [115b] नानुकम्पादिमात्रम्। कश्चिद् अन्यतमो यदि विवक्ष्यते प्रका[शयितुमि]ष्यते तदा पुनरुक्तोऽपि वाक्येऽर्थतः शब्दतोऽपि वा न दोषः। एकार्थलक्षणेऽभिहिते विकारो नास्ति। गुणोऽपि न तादृशः कश्चिदिति चेदाह- प्रत्युतेति। विशेषविवक्षायां निपातसमुदाय एको वा निपातः। यदाह- इयं पुनरुक्तिरलंकृतिः काव्यशोभाकरत्वाज्ज्ञायते तादृशि विषये इति ॥

तदुदाहरति—

हन्यते सा वरारोहा स्मरेणाकाण्डवैरिणा ।
हन्यते चारुसर्वाङ्गी हन्यते मञ्जुभाषिणी ॥१३८॥

सा काचिदिष्टा वरारोहा स्त्री मुख्या हन्यते पीड्यते। चारु सर्वमङ्गमस्या इति चारुसर्वाङ्गी। हन्यते मञ्जुभाषिणी मधुरालापिनी हन्यते स्मरेण कामेन अकाण्ड-वैरिणा निर्निमित्तशत्रुणेति। ईदृशं पुनरुक्तमपि काव्यभूषणमवस्थाविशेषयोगात्। आह च—



विस्मये च विषादे च कोपे दैन्ये च वारणे।
प्रसादे चैव हर्षे च पदमेकं द्विरुच्यते ॥

[Haribhadras] Āloka zu Aṣṭasāhasrikā-prajñāpāramitā 2 (s. Wogihara 1932-35, S. 155 20-21, Vaidya 1960, S. 341)

इति ॥

**निर्णयार्थं प्रयुक्तानि संशयं जनयन्ति चेत्।**
**वचांसि दोष एवासौ ससंशय इति स्मृतः ॥१३९॥**

वचांसि शब्दाः प्रयुक्तानि प्रकाशितानि। किमर्थम्? निर्णयार्थम्। निर्णयो निश्चयः, प्रकरणात काव्यार्थविषयः संशयविपर्यासविरोधी प्रत्ययः। अर्थः प्रजोजनम्, साध्यत्वाद् यस्मिन् प्रयोगे इति क्रियाविशेषणम्। तच्च स्वभावतो नपुंसकम् द्वितीयैक-वचनान्तं च स्मर्यते। न तु संशयार्थम्, तदानीं दोषात्। यद् वक्ष्यति- ईदृशं संशयाय [३. १४१] इत्यादि। संशयनिश्चयविपर्ययमर्थद्वयावगाहि ज्ञानं यदि जनयन्ति, असौ तादृशः संशय इति ससंशयो नाम दोष एव काव्ये। न गुणोऽपि तत्र विषये। अन्यत्र तु भवेत्। स्मृतो विज्ञायते ॥

**मनोरथप्रियालोकरसलोलेक्षणे सखि।**
**आराद्वृत्तिरसौ माता न क्षमा द्रष्टुमीदृशम् ॥१४०॥**

मनोरथस्य हृदयाभिलाषस्य प्रियो दयितः कश्चित्। तदेकालम्बनत्वात् तस्य आलोकनमालोकः। तत्र रसः। तेन लोले चपले ईक्षणे नेत्रे यस्या इति मनोरथप्रिया-लोकरसलोलेक्षणे सखीति सम्बोधनम्। यद् वा मनोरथप्रिय इष्टः। आलोकः प्रकाशो बाह्यः। तद्वद्रसलोलेक्षणत्वं न संवृत्तम्[?] आत्मानमन्तस्तिष्ठन्तं नेच्छसि। किं तु यथेष्टं बहिरालोके भ्रमितुं वाञ्छसीति अभिप्रायेण [116a] एवमामन्त्र्यते। अत एव अत्रापि संशयः, कतमोऽर्थोऽत्राभिप्रेत इत्यनिश्चयात्। यदि नामैवम्, ततः किमित्याह- आरादिति। ईदृशमेवंविधं तव स्वातन्त्र्यं मनोरथप्रियालोकरसलोलत्वम्। असौ तव माता आराद् वृत्तिरस्या इत्याराद्वृत्तिः। द्रष्टुं न क्षमा। अत्राप्याराच्छब्दस्य दूरान्तिकवृत्तित्वात्, असावित्यस्य च परोक्षापरोक्षयोर्वृत्तेः संशय्यते। किमसौ माता दूरवृत्तिरीदृशं द्रष्टुं न क्षमा न शक्नोति परोक्षत्वात्, किं वा असौ इयं माता आरा-द्वृत्तिरासन्नवर्तिनी ईदृशं द्रष्टुं न क्षमा न सहते। ईदृशं दृष्ट्वा सुतरां कुप्यतीति

[अ]निश्चयः कश्चित्। तदीदृशं [स] संशयं द्रष्टव्यमिति॥

अत्राप्यपवादमाह–

ईदृशं संशयायैव यदि जातु प्रयुज्यते।
स्यादलङ्कार एवासौ न दोषस्तत्र तद्यथा ॥१४१॥

ईदृशमेवंविधं ससंशयं वचनं यन्निश्चयार्थ[निगूहनेन] संशयायैव काव्यार्थ-सन्दे[होत्पादना]र्थमेव, तथेष्टत्वात्। जातु कदाचित्, न सर्वथा। तादृशे प्रस्तावे यदि प्रयुज्यते तदा असौ संशयः अदोषो जातः अलङ्कारो गुण एव स्यात् काव्यस्य। न दोषः स्यात्। तत्र तादृशि संशये विषये तस्यैव तत्र विधेयत्वात्। यथेत्युदाहरति॥

पश्याम्यनङ्गजातङ्कलङ्घितां तामनिन्दिताम्।
कालेनैव कठोरेण ग्रस्तां किं नस्त्वदाशया ॥१४२॥

तां काञ्चिदिष्टाम् अनिन्दितां स्त्रियम्। अनङ्गात् कामात् जातः अनङ्गजः स च सा वा आतङ्कः पीडा। अङ्गात् शरीरात् जातः बाह्यभूतसंभूतत्वात् अनङ्गजः स च सा वा आतङ्क सन्तापश्चेति द्वैधम्। मदनेन लङ्घितामभिभूतां सतीं कालेन मृत्युनैव कठोरेण अस्थानप्रहारित्वात्। कालेनैव कठोरेण ग्रीष्मेण कालावर्षिका-ग्रस्तां मृणालिकामिव कवलिताम्, पश्यामि अवैमि। नात्र सन्देहः इत्यपरं द्वैधम्। ततश्च त्वयि आशया अभिलाषेण नोऽस्माकं किं प्रयोजनम्? न किञ्चित्। यदि सा अस्ति तदर्थं त्वामभिलषामि किमिदानीं त्वयेति। किं नस्तदाशयेति पाठे— तत्र किमिदानीं नः अस्माकं तस्यामाशया प्रत्याशया? गता दूरमस्माकमसाविति व्याख्येयम्॥

तद् विवृणोति—

कामार्ता घर्मतप्ता वेत्यनिश्चयकरं वचः।
युवानमाकुलीकर्तुमिति दूत्याह नर्मणा ॥१४३॥

उक्तेन प्रकारेण कामेन आर्ता घर्मेण तप्ता क्षपिता वा [116b] इत्येवमनिश्चय-करं संशयजनकं वा वाक्यं दूती काचित् आह ब्रवीति। नर्मणा परिहासेन हेतुना इत्युक्तेन विधिना। किमसौ मद्वियोगात् कामार्ता घर्मतप्ता वा केवलमित्यनिश्चयलाभात्



युवानं कञ्चित् कामेन आकुलीकर्तुं विधुरयितुम्। ततश्च संशय एवात्राभिधेय-त्वादलङ्कारः॥

उद्देशानुगुणोऽर्थानामनुदेशो न चेत् कृतः।
अपक्रमाभिधानं तं दोषमाचक्षते बुधाः ॥१४४॥

अर्थानां यथोद्दिष्टानां केषाञ्चिदुद्देशः प्रथमोपक्षेपः तस्यानुगुणस्तत्र क्रमानुसा-रित्वात् अनुदेशः[1] प्रत्याम्नायश्चेत् न कृतः स्यात् प्रमादात्, तादृशं विशेषमन्तरेणेति भावः। अपक्रम इति अभिधानं संज्ञा यस्येत्यपक्रमाभिधानम्। अपक्रमं नाम दोषं तं यथोक्तमाचक्षते कथयन्ति कवयः। यथेत्युदाहरति॥

स्थितिनिर्माणसंहारहेतवो जगतामजाः।
शम्भुनारायणाम्भोजयोनयः पालयन्तु वः ॥१४५॥

जगतां लोकानां स्थितिः प्रबन्धानुवृत्तिः। निर्माणमुत्पादः। संहारो नाशस्तेषां हेतवः, तत्कर्तृत्वात् न जाता अकृतका इत्यजाः नित्याः। के ते? शम्भुश्च शङ्करः, नारायणश्च विष्णुः। अम्भोजयोनिश्च ब्रह्मा। शम्भुनारायणाम्भोजयोनयः। वो युष्मान् पालयन्तु रक्षन्तु। अत्र जगतां स्थितिहेतुर्नारायणः, निर्माणहेतुरम्भोजयोनिः संहारहेतुः शम्भुरित्यागमात् न यथोद्देशमनुदेशः कृत इत्यपक्रमनामायं काव्यदोष इति॥

अत्राप्यपवादमभिधत्ते—

यत्नः सम्बन्धविज्ञानहेतुः कोऽपि कृतो यदि।
क्रमलङ्घनमप्याहुर्न दोषं सूरयो यथा ॥१४६॥

यत्नेन प्रतियत्नेन यथावस्थानातिक्रमेणान्यथा सम्बन्धयोजनमनुदेशः तस्य विज्ञानमवगमः। तस्य हेतुः कारणं कोऽपि कश्चित् तादृशः येन तत्र सम्बन्धो विज्ञायते। न यथोद्देशम्। यदि कृतः स्याद् यत्नः। सम्बन्धनिर्ज्ञानहेतुरित्यपि पठ्यते। तत्र सम्बन्धस्यायथोद्देशमनुदेशस्य निर्ज्ञाने हेतुः कारणभूतो यदि यत्नः कोऽपि

1. अनुदिश्यत इत्यनुदेशः। पश्चादुच्चार्यत इत्यर्थः।
पाणिनीयकाशिकायाम् १. ३. १०

कृतः स्यादिति व्याख्येयम। तदा क्रमस्य यथोद्देशमनुद्देशस्य लङ्घनमतिक्रममपि न केवलमलङ्घनम। न दोषमाहुः स्मरन्ति सूरयः कवयः। यथेत्युदाहरति॥

बन्धुत्यागस्तनुत्यागो देशत्याग इति त्रिपु।
आद्यन्तावायतक्लेशौ मध्यमः क्षणिकज्वरः ॥१४७॥

बन्धूनां त्यागो विरहो बन्धुत्यागः। तनोः शरीरस्य त्यागो मरणम्। देशस्य आत्मीयस्य त्यागो देशत्याग इति त्रिपु एतेपु बन्धुत्यागादिपु दुःखेपु। आदिश्चान्तश्च इत्याद्यन्तौ [117a] बन्धुत्यागदेशत्यागौ आयतौ दीर्घौ च तौ क्लेशौ संबाधौ। आयतो क्लेशो दुःखमनयोरित्यायतक्लेशौ यावज्जीवमनुबन्धात्। मध्यमस्तनुत्यागः क्षणिकः क्षणमात्रभावी चासो ज्वरस्तापश्चेति क्षणिकज्वरः शरीराभावे नानुबन्धात्। अत्रायतक्लेशत्वं बन्धुत्यागदेशत्यागयोः। एवं न तनुत्यागस्य। क्षणिकज्वरत्वं च तनुत्यागस्यैव नेतरयोरिति यत्रसम्बन्धः। सम्बन्धनिर्ज्ञातहेतुरीदृशो द्रष्टव्यः। यदि पुनः त्रयाणामप्येकरूपत्वं तदा क्रमलङ्घनं दोप एव स्यात्, विशेपस्य तादृशस्याभावादिति॥

शब्दहीनमनालक्ष्यलक्ष्यलक्षणपद्धतिः।
पदप्रयोगोऽशिष्टेष्टः शिष्टेष्टस्तु न दुष्यति ॥१४८॥

पदस्य सुबन्तस्य तिङन्तस्य वा प्रयोगो व्यवहारः पदप्रयोगः, लक्ष्यते [यत्] तदिति लक्ष्यमुदाहरणम्। लक्षणं शब्दशासनम्, लक्ष्यते अनेन शब्दरूपमिति कृत्वा। तयोः ते एव वा पद्धतिः मार्गः, ततो व्यवहारप्रवृत्तेः। अनालक्ष्या अदृश्या, अभावात्। लक्ष्यलक्षणपद्धतिर्यस्मिन् स तादृश अशिष्टैरनाप्तैः स्वीकृतः। इत्यनूद्य शब्दहीनं तद्विज्ञेयमिति विधीयते। यः पुनरेवंभूतोऽपि पदप्रयोगः शिष्टैरिष्यते शास्त्रे काव्ये वा, क्वचित् प्रयुक्तत्वात्। स शिष्टैः शास्त्रकारैस्तत्प्रज्ञैर्वा इष्टस्तु आप्तप्रयुक्तः पुनः न दुष्यति, तेषां सर्वथेह प्रमाणत्वात्। अनन्तो हि शब्दराशिः। तत्र कश्चिच्छब्दः शब्दानुशासनाद् गृह्यते। कश्चिदाप्तप्रयोगात् तत्कल्पात्। शब्दानुशासनमपि आप्तोपदेश इति न कश्चिदनयोर्विशेषः अत एवोक्तम्— शिष्टेष्टस्तु न दुष्यतीति॥

तदुदाहरति—

अवते भवते बाहुर्महीमर्णवशक्करीम्।
महाराजन्नजिज्ञासौ नास्तीत्यासां गिरां रसः ॥१४९॥



अवतिरतङानः तङा प्रयुक्तः। बाहुभिरित्यपेक्षा भवत इति पष्ठीस्थाने चतुर्थी प्रयुक्ता। अर्णवशकरी मेखला रत्नयोगादिना यस्या इत्यर्णवशक्करी नद्दतः[1] इति कपा भवितव्यम्। महाराजन्नित्यत्रापि सख्यह्नोराज्ञां टच्[2] [117b] इति टचा भाव्यम्। तदिदं सर्वं शास्त्रशिष्टप्रयोगप्रतिकूलमिति शब्दहीनम्। नन्वनुप्रासादिः शब्दरसोऽत्र विद्यते काव्यगुणः। तन्नेदमेकान्तहेयमिति चेदाह— इत्येवं दुष्टानां शब्दानां न च रसोऽनुप्रासादिरपि जिज्ञासितावेव स्थितो ग्राह्यः। अश्रद्धाश्रयतया तस्या व्यपहतत्वात। शुद्धायां हि भूमौ न्यस्तः पुष्पप्रकरः शोभते। यः पुनरपूतायां भुवि निक्षिप्यते कुसुमनिकरः स निष्फल एव। तथा शुद्धायां शब्दपद्धतौ रसः अनुप्रासादिः शोभते नान्यथा। यत्र पुनरयं रसो दर्शितः, तद् रसप्रयोगेऽपि शब्दहीनत्वात हेयमिति ख्यापयितुम्। महाराजन् न जिज्ञासा नास्तीत्यासां गिरां रसः इत्यपि पाठः। तत्रासां गिरां रसो नास्तीति ईदृशी जिज्ञासा न विद्यते, हेयत्वादीदृशस्य रसस्येति व्याख्येयम्। शेपं समानमिति॥

क्वचिदशब्दहीनेऽपि शब्दहीनभ्रान्तिरिति व्युत्पादयन्नाह—

दक्षिणाद्रेरुपसरन् मारुतश्चूतपादपान्।
कुरुते ललिताधूतप्रवालाङ्कुरशोभिनः ॥१५०॥

दक्षिणाद्रेर्मलयपर्वतादुपसरन आगच्छन मारुतः चूतपादपान सहकारतरून ललितं सलीलमाधूतैराकम्पितैः प्रवालैरङ्कुरैः पल्लवोद्गमैः शोभन्ते इति ललिताधूतप्रवालाङ्कुरशोभिनः। स तत् कुरुते विधत्ते। अत्र किल दक्षिणाद्रेरुपसरणे भावात् पञ्चमी न युज्यते, अपायलक्षणत्वात् तस्याः। उपसरणापेक्षया त्वाधारेण व्याप्येन वा दक्षिणानिलेन भाव्यम्। ततश्च सप्तमी द्वितीया वा युज्यते। नैवं कृतम्। अतः शब्दहीनमेवंविधमिति कुधियो मन्यन्ते। न चैतदेवम्। उपसरणं हि तत आगमनमिति विश्लेपयोगाद् दक्षिणाद्रिमामृश्योपसर[त्ययमि]ति ल्यब्लोपलक्षणा पञ्चम्येव युज्यते॥

तदेतन्मनसि [118a] कृत्याह—

इत्यादिशास्त्रमाहात्म्यदर्शनालसचेतसाम्।
अपभाषणवद् भाति न च सौभाग्यमुज्झति ॥१५१॥

---

१ चान्द्रसूत्रम्— तुल० नद्दतश्च— पाणिनिः ५. ४. १५३

२ तदेव तुल० राजाहःसखिभ्यष्टच्- पाणिनिः ५. ४. ९१

इत्येवंविधं लक्ष्यम्। अपभाषणवत् शब्द[हीन]मिवाभाति प्रतिभासते। केषाम्? शास्त्रं शब्दलक्षणादिकम्। तस्य माहात्म्यं प्रभावः। एवंविधलक्ष्यसंग्राहकत्वम्। तस्य दर्शनमभ्यासः तत्रालसं मन्दं चेतो येषामिति [शास्त्रमाहात्म्यदर्शनालसचेत]साम् शास्त्रमाहात्म्यदर्शनेन नेदृशी भ्रान्तिरुपजायते, तस्याज्ञ[त्वा]पनोदित्वात्। यथोक्तम्—

शास्त्रं मोहनिवर्तनम्

[प्रमाणवार्त्तिके १. ७]

इति। न चेदृशं सौभाग्यं साधुतामुज्झति त्यजति। सुभगेनेवेदृशं सदृशः। यथोक्तं प्रागस्माभिरिति॥

श्लोकेषु नियतस्थानं पदच्छेदं यतिं विदुः।
तदपेतं यतिभ्रष्टं श्रवणोद्वेजनं यथा ॥१५२॥

श्लोकेषु पद्येषु विषये पदस्य सुप्तिङन्तस्य छेदो विरामः छन्दःशास्त्रप्रसिद्धः पदच्छेदः। नियतं तद्धि व्यवस्थानं चतुर्थवर्णादिलक्षणं यस्मिन्निति नियतस्थानम्। तन्नियतस्थानं पदच्छेदम्। अनुवादोऽयम्। यतिं विदुः स्मरन्ति तद्विद इति विधिः। तस्या यतेरपेतमपगतं तदपेतं यतिभ्रष्टम्। श्रवणं कर्णमुद्वेजयतीति श्रवणोद्वेजनम्। अतश्च हेयम्। श्रुतिसुभगं हि लक्षणानुगतं काव्यमुपादीयते। यथेति [यतिभ्रष्टम] उदा.रति॥

स्त्रीणां सङ्गी*तविधिमयमा*दित्यवंश्यो नरेन्द्रः
पश्यत्यक्लि*ष्टरसमिह शि*ष्टैरमेत्यादि दुष्टम्।
कार्याकार्या*ण्ययमविकला*न्यागमेनैव पश्यन्।
वश्यामुर्वी *वहति नृप इ*त्यस्ति चैवं प्रयोगः ॥१५३॥

शिष्टैरमा सह। संगीतविधिं प्रेक्षणकम्। अक्लिष्टा यथागमं प्रयुक्ता रसाः शृङ्गारवीरादयोऽस्मिन्निति अक्लिष्टरसं स्त्रीणां सम्बन्धिनम्, तत्प्रयुक्तत्वात्। अयं विवक्षितः कश्चिदादित्यवंश्यः सूर्यान्वयसम्भूतः। नरेन्द्रः पश्यतीह प्रस्तावे। इह वाचोयुक्तौ [वा]। अत्र मन्दाक्रान्तायां समुद्रर्तुलोकैः [४।६।७] यतिविधानम्।



तद्व्यतिक्रमात् इत्यादि ईदृशं दुष्टं हेयम्॥ अत्रापवादमाह—कार्येत्यादि। कार्याणि त्रिवर्गानुबन्धीनि कर्माणि स्वस्वकार्याणि। तद्विपरीतानि [अकार्याणि] आगमेनैव उत्पत्यादिना तत्प्रतिपादकेन पश्यन् यथार्हमनुतिष्ठन्। वश्यां विधेयामुर्वीमवति रक्षति नृप इति, एवंविधप्रयोगः शिष्टानामस्ति। न च नास्त्येव। तस्मादीदृशः साधुरेव॥

ननु नियतस्थानपदच्छेदो यतिरिति हेतुपदैकदेशच्छेदः। तत् कथं न यतिभ्रष्टमित्यत आह—

लुप्ते पदान्ते शिष्टस्य पदत्वं निश्चितं यथा।
तथा सन्धिविकारान्तं पदमेवेति वर्ण्यते ॥१५४॥

पदस्यान्ते यथासम्भवं विभक्त्यादिरूपे लुप्ते सति शिष्टस्य व्यवस्थितस्य भागस्य पदत्वं निश्चितम्। [118b] पठत्यादेः शब्दविद्यायाम्। तथा 'तद्वत्। सन्धिः संहिता। [तत्र] यणादेः विकारोऽन्यथात्वमन्तोऽवसानं यस्य तत्सम्बन्धि[वि]कारान्तमतद्गुणसंविज्ञानात् सन्धिविकारमपहृत्य शिष्टं प्रकृतिरूपं पदमेवेति वर्ण्यते स्मर्यते शिष्टैः। ततः कार्याकार्येत्यादौ चतुर्थादिना वर्णेन पदच्छेदो यतिर्न विरुध्यत इति ॥

ईदृशमपि यदि श्रवणानुद्वेजनं तदा ग्राह्यमन्यथा हेयमिति पुनर्विशेषं दर्शयन्नाह—

तथापि कटु कर्णानां कवयो न प्रयुञ्जते।
ध्वजिनी तस्य राज्ञः के*तूदस्तजलदेत्यदः ॥१५५॥

यद्यपि स[न्धिवि]कारान्तं पदं स्मृतम्, तथापि एवमपि कर्णानां कटु श्रवणोद्वेजनं न प्रयुञ्जते कवयो रसज्ञाः। तादृशं वर्जनीयमित्यर्थः। कतरत् तदित्युदाहरति—तस्य राज्ञः कस्यचित्। ध्वजिनी सेना केतुभिर्ध्वजैरुच्छ्रितैः उदस्ता उत्क्षिप्ता जलदा यथा इति केतूदस्तजलदा इत्यदः ईदृशं कर्णकटु वर्ज्यमत्र। यद्यपि तुशब्दे अकोऽकि दीर्घेण परेणापाकृते के इत्य[त्र] पदत्वं स्यात्, तथापि श्रवणोद्वेजनमीदृशमिति न प्रयोक्तव्यम्। अत्र च श्रुतिरेव कवीनां प्रमाणमिति॥

वर्णानां न्यूनताधिक्ये गुरुलघ्वयथास्थितिः ।
यत्र तद्भिन्नवृत्तं स्यादेष दोषः सुनिन्दितः ॥१५६॥

वर्णानां शास्त्रतः प्रतिनियतानां श्लोकभाविनां न्यूनता हीनत्वमाधिक्यमतिरेको वा । न्यूनताधिक्ये द्वे । गुरोः संयोगपरस्य दीर्घस्य लघोश्च ह्रस्वस्याक्षरस्यायथास्थितिः तद्विद्याऽव्यवस्थातिक्रमेण वृत्तेर्यत्र पद्ये स्यात् कविप्रमादात् तत् तादृशम । भिन्नं च तद्वृत्तं चेति भिन्नवृत्तम् । भिन्नं वा वृत्तं यस्मिन् काव्ये इति भेदविवक्षया भिन्नवृत्तम । एष भिन्नवृत्तलक्षणो दोषः सुनिन्दितः सुष्ठु गर्हितः कविभिः काव्यशरीरस्यैवंविधत्वे कुत एव तत्र विशेषवित्ता [कवेः] इति ॥

[119a] चतुष्टयमध्ये तद् यथाक्रममुदाहरति—

इन्दुपादाः*शिशिरा स्पृशन्तीत्यूनवर्णता ।
सहकारस्य किस*ल*यान्यार्द्राणीत्यधिकाक्षरम् ॥१५७॥

इन्दुपादाः शिशिराः स्पृशन्ति इत्यत्र प्रथमपाद ऊनवर्णता । ऊनो न्यूनो वर्णो यत्र तद्भाव ऊनवर्णतेति कृत्वा । अनुष्टुप्पादो ह्यष्टाक्षरः । अयं तु सप्ताक्षर इति वर्णहानिः । सहकारस्य किसलयान्यार्द्राणी[ति] अत्रापि पूर्वपादे अधिकमक्षर[म]स्मिन्निति अधिकाक्षरम् । अधिकाक्षरमिति भावप्रधानो निर्देशः । यद्वा अधिकाक्षरं पादं रूपं वृत्तमिति वा योज्यम , अनुष्टुप्पादस्याष्टाक्षरस्य नवाक्षरीकरणादिति ॥

*का*मेन बाणा निशिता विमुक्ता
मृगेक्षणाास्वित्ययथागुरुत्वम् ।
म*द*नबाणा निशिताः पतन्ति
वामेक्षणास्वित्ययथालघुत्वम् ॥१५८॥

अयथा शास्त्रविरुद्धो गुरुर्यस्मिन् तस्य भावः अयथागुरुत्वम । उपेन्द्रवज्रायां प्रथमलघुविधानात् तदपेक्षयेति द्रष्टव्यम् । उपजात्यपेक्षया त्वदोष इति । मदनेत्यादि । अयथालघुत्वमिति पूर्व[वच्च] व्युत्पत्तिः । उपेन्द्रवज्रायां द्वितीयमक्षरं गुरु विहितमिति । इदं तु लघ्विति तद्विद्याविरोधादयथालघुत्वमिति ॥



न संहितां विवक्षामीत्यसन्धानं पदेषु यत् ।
तद्विसन्धीति निर्दिष्टं न प्रगृह्यादिहेतुकम् ॥१५९॥

संहितां सन्धिमेकपदे भिन्नपदे वा प्राप्तामपि न विवक्षामि । असंहितैव मयात्र विवक्षितेति बुद्धया पदेषु यदसन्धानमसंहिता तत् तादृशं विगतः सन्धिरस्मादिति विसन्धीति निर्दिष्टमुक्तं काव्यदूषणम् । यत् पुनरसन्धानं प्रगृह्यमादिर्यस्य यलोपादेः स हेतुः कारणमस्येति प्रगृह्यादिहेतुकम्, न तद् विसन्धीति निर्दिष्टं तादृशमसन्धानं युक्तं शास्त्रीयत्वात । अनेन च यत् प्रगृह्यादिहेतुकमपि विसन्धानं भामहेन वर्जितम्, तन्निरस्तम् । यदाह—

कान्ते इन्दुशिरोरत्ने आदधाने उदंशुनी ।
पातां वः शम्भुशर्वाण्याविति प्राहुर्विसन्ध्यदः ॥
[ काव्यालङ्कारे ४. २८ ]

इति । लक्षणानुगतं;हीदृशं कथमप्रमाणयितुं शक्यते स्वस्थचेतसेति भावः ॥

तदुदाहरति—

मन्दानिलेन चरता*अङ्गनागण्डमण्डले ।
लुप्तमुद्भेदि घर्माम्भो नभस्यस्मन्मनस्यपि ॥१६०॥

आसु रात्रिष्विति प्राज्ञैरज्ञातन्यङ्गमीदृशम् ॥१६१॥

मन्दानिलेन नभसि । अस्माकं मनस्यपि चेतसि च [119a] मनोहरतया चरता अङ्गनागण्डमण्डले उद्भेदि उद्गतं घर्माम्भः स्वेदजलं लुप्तम् आसु रात्रिष्विति । अर्थसंगतिरियम् । उदाहरणं तु विसन्धेः– अनिलेन चरता अङ्गनागण्डमण्डले इत्येतत् । अत्र हि चरता अङ्गनेत्यत्र अकोऽकि दीर्घः [इत्यनेन प्राप्तोऽपि] सन्धिः न कृत इति विसन्ध्येतद् द्रष्टव्यम् । द्वयोरन्तादिविषयं तु असन्धानमिष्टम्, [महाजनप्र]सिद्धेरिति दर्शयति लुप्तमुद्भेदि घर्माम्भो नभस्यस्मन्मनस्यपि आसु रात्रिष्विति ।

१. एतस्मात् पूर्वं मानेर्ष्ये इह शीर्यते स्त्रीणां हिमर्तौ प्रिये इति श्लोकार्धं बहुत्र पठितमपि न रत्नश्रीसम्मतम् , न वा भोटपाठानुगतमिति परित्यक्तम् ॥

ईदृशमर्धान्तादिगोचरमसन्धानम् अज्ञातं न्यङ्गमस्मिन्निति अज्ञातन्यङ्गमविदितदोषम् अदुष्टं ज्ञातं प्राज्ञैः शिष्टैरिति यावत् ।

सरसिजमनुविद्धं शैवलेनापि रम्यं
मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं[1] तनोति ।
इयमधिकमनोज्ञा वल्कलेनापि तन्वी
किमिव हि मधुराणां मण्डनं नाकृतीनाम् ॥

[अभिज्ञानशाकुन्तले १. १७]

तस्मादीदृशमसन्धानं प्रयुज्यते शि[ष्टैरि]ष्टत्वात् । प्रथमद्वितीययोः तृतीयचतुर्थयोश्च पादयोस्तु अन्तादिविषयमन्यत्र चापि [पादाभ्यन्तरे] सन्धानमिष्टमिति प्रतिपत्तव्यम् ॥

देशोऽद्रिवनराष्ट्रादिः कालो रात्रिंदिवर्तवः ।
नृत्यगीतप्रभृतयः कलाः कामार्थसंश्रयाः ॥१६२॥

अद्रिः मलयपर्वतादिः । वनं कालिङ्गादि । राष्ट्रं दक्षिणापथादिकम् । आदिशब्देन नदीधन्वादिपरिग्रहः । स तादृशो देशो विज्ञायते । रात्रिर्दिवा च रात्रिंदिवम् । ऋतवश्च प्रावृडादयः षडिति रात्रिंदिवर्तवः कालविशेषत्वात् कालः सामान्येन विज्ञायते । नृत्यं ताण्डवं लास्यं च । नानारसभावाभिनयाङ्गहारादिरूपं गीतं ज्ञेयम् । तच्च

गान्धर्वं त्रिविधं विद्यात् स्वरतालपदात्मकम् ।

[नाट्यशास्त्रे २८. ११]

इति त्रिधा,

तस्य योनिर्भवेत् कण्ठो वीणा वंशस्तथैव च ॥

[तत्रैव २८. १०]

इति त्रियोनिकम् । विस्तरतया तच्छास्त्र एवाधिकृतम् । तादर्थ्यात् तत्प्रतिपादकं शास्त्रं नृत्तं गीतं प्रभृति प्रमुखं यासां वाद्यादिविद्यानां ता नृत्तगीतप्रभृतयः कलाविद्याः । कामो विशिष्टो विषयोपभोगः । अर्थश्च विचित्रोपकरणरूपः । संश्रयः अधिष्ठानम्,

१. अत्र शोभामिति मातृकापाठः । स तु न दण्डिस्वतपाठानुसारी । तुल० १. ४५



तद्भावभावित्वाद् यासां [कलानां]मिति कामार्थयोः संश्रयाः । साक्षात् पारम्पर्येण तु धर्मोऽप्यासामाश्रयः स्यात्, तन्मूलत्वादर्थकामयोः ॥

चराचराणां भूतानां प्रवृत्तिर्लोकसंज्ञिता ।
हेतुविद्यात्मको न्यायः सस्मृतिः श्रुतिरागमः ॥१६३॥

चराचराणां स्थावरजङ्गमानां भूतानां प्रवृत्तिः यथास्थिति लोक इति संज्ञिता समाख्या[ता] लोकसंज्ञिता [120a] लोके विज्ञायते । हेतुविद्या तर्कशास्त्रम् आत्मा यस्य स हेतुविद्यात्मको न्यायोऽत्र गृह्यते । श्रुतिः वेदः सह स्मृत्या मन्वादिप्रणीतया वर्तते इति सस्मृतिरागमो वेदितव्यः ॥

तेषु तेष्वयथारूढं यदि किञ्चित् प्रवर्तते ।
कवेः प्रमादाद् देशादिविरोधीत्येतदुच्यते ॥१६४॥

तेषु तेषु यथोक्तेषु देशादिष्वागमपर्यन्तेषु अयथारूढं तत्तद्विधिप्रतिषेधातिक्रमाद् वैपरी[त्येन] यदि किञ्चिदर्थरूपं प्रवर्तते प्रयोगेषु कवेः प्रयोक्तुः प्रमादाद् विस्मरणहेतोः यथारूढं यदि किञ्चिन्न वर्तेत इत्यपि पाठः । अर्थस्तु स एव । तदेवं तद्यथा आरूढं प्रवृत्तं देशविरोधीति उच्यते । आदिशब्देन कलादिपरिग्रहः । देशादिभिर्विरोधो बाधा अस्तीति कृत्वा, देशादयोऽन्यथा व्यवस्थिताः, अन्यथा च कल्प्यन्त इति तादृशी तैर्बाध्यते ॥

कर्पूरपादपामर्शसुरभिर्मलयानिलः ।
कलिङ्गवनसम्भूता मृगप्राया मतङ्गजाः ॥१६५॥

कर्पूरपादपानामामर्शे[न संस]र्गेण सुरभिः सुगन्धिर्मलयानिलः । [इद]मद्रिलक्षणदेशविरुद्धमुदाहृतम्, मलयपर्वते कर्पूरसम्भूतेरयथारूढत्वात् । कलिङ्गो नाम वनमरण्यं तत्र तस्माद् वा संभूता मतङ्गजा हस्तिनः मृगप्राया मृगलक्षणा हस्तिजातिः प्राया भूयसी ये[षु] तया वा प्रायाः समधिका मृगप्रायाः । एतद् वनरूपदेशव्याहृतम् । कलिङ्गवनजन्मनां हस्तिनां भद्रजाति प्रायत्वात् ॥

चोलाः कालागरुश्यामाः कावेरीतीरभूमयः ।
इति देशविरोधिन्या वाचः प्रस्थानमीदृशम् ॥१६६॥

कावेरी नाम नदी । तस्यास्तीरे तद्रूपा वा भूमयः । चोलाश्चोलजनपदरूपाः कालैः कृष्णैरगरुभिः श्यामा नीला । इद राष्ट्ररूपं देशविरुद्धम् । चोलराष्ट्रस्वभावानां कावेरीतीरभूमीनां कालागरुशून्यत्वात् ।

देशविरोधं निगमयति । देशोऽद्रिवनादि[ना] यथोक्तेन विरोधो बाधा यस्यामिति देशविरोधिन्या [वाचः] वाक्यस्य ईदृशमेवंविधं प्रस्थानं स्वरूपं वेदितव्यमिति ॥

कालविरोधमुदाहरन्नाह—

पद्मिनी नक्तमुन्निद्रा स्फुटत्यह्नि कुमुद्वती ।

[120b]नक्तं रात्रौ उन्निद्रा विकसिता पद्मिनी, रात्रिरूपकालविरुद्धमेतत् । पद्मिन्या नक्तं प्रबोधासम्भवात् । कुमुद्वती कुमुदिनी स्फुटति विकसति अह्नि दिने । एतद् दिवसरूपसमयविरुद्धम् , दिवा कुमुद्वतीविकासाभावात् ॥

मधुरुत्फुल्लनिचुलो निदाघो मेघदुर्दिनः ॥१६७॥

श्रव्यहंसगिरो वर्षाः शरदामत्तबर्हिणी ।
हेमन्तो निर्मलादित्यः शिशिरः श्लाघ्यचन्दनः ॥१६८॥

मधुर्वसन्त उत्फुल्लः कुसुमितो निचुलो वञ्जुलोऽस्मिन्निति उत्फुल्लनिचुलः । निदाघो ग्रीष्मः मेघैर्दुर्दिनो मलिनः । श्रव्या मधुरा हंसानां गिरः शब्दा यासु इति श्रव्यहंसगिरो वर्षाः प्रावृट् । आमत्ता बर्हिण्यो मयूर्यो यस्यामिति आमत्तबर्हिणी शरत् । निर्मल आदित्यो यस्मिन्निति निर्मलादित्यो हेमन्तः । शिशिरः श्लाघ्यं सेव्यं चन्दनम् अस्मिन्निति श्लाघ्यचन्दनः । सर्वमेतद् ऋतुषट्कलक्षणं कालविरुद्धं मध्वादिषु ऋतुषु उत्फुल्लनिचुलादीनामसम्भवात् ॥

कालविरोधमुपसंहरति—

इति कालविरोधस्य दर्शिता गतिरीदृशी ।
मार्गः कलाविरोधस्य मनागुद्दिश्यते यथा ॥१६९॥



कालेन रात्र्यादिना यथोक्तेन विरोधस्य व्याघातस्य भारतीविषयस्य ईदृशी गतिः प्रस्थानं दर्शिता । कलया नृत्यगीतादिविद्यया विरोधस्य वचनगोचरस्य मार्गः प्रस्थानं मनाक् किञ्चिद् उद्दिश्यते उदाह्रियते यथेति दर्शयति ॥

वीरशृङ्गारयोर्भावौ स्थायिनौ क्रोधविस्मयौ ।
पूर्णसप्तस्वरः सोऽयं भिन्नमार्गः प्रवर्तते ॥१७०॥

वीरश्च शृङ्गारश्च [तयोर्वीर]शृङ्गारयो रसयोः प्रभवौ भावौ मनोवस्थाविशेषलक्षणौ क्रोधश्च विस्मयश्च क्रोधविस्मयौ स्थायिनौ यावद्रसमवस्थानात् । न तु व्यभिचारिभाववदस्थायिनौ । पूर्णाः समग्राः सप्त ऋषभमध्यमगान्धारषड्जधैवतपञ्चमनिषादाख्याः स्वरा यस्मिन्निति पूर्णसप्तस्वराः । [ते सन्ति] यस्मिन्निति पूर्णसप्तस्वरः सोऽयं भिन्नमार्गो गान्धर्वप्रकारः कश्चिन् प्रवर्तते । एतत् कलाविरुद्धम् । क्रोधविस्मययोः स्थायिनोर्भावयोः शृङ्गारवीरयोरयोनित्वेन कलायां व्यवस्थानात् । रौद्राद्भुतयोरेव हि क्रोधविस्मयौ स्थायिनौ भावौ तत्र व्यवस्थाप्येते । वीरशृङ्गारयोस्तु उत्साहरती एव स्थायिनौ भावौ । अन्यतरस्वरहीनस्यैव च भिन्नमार्गतया व्यवस्थानादिति ॥

कलाविरोधमतिदिशन्नाह—

इत्थं कलाचतुःषष्टौ विरोधः साधु नीयताम् ।
तस्याः कलापरिच्छेदे रूपमाविर्भविष्यति ॥१७१॥

इत्थमनेन प्रकारेण कलानां कलारूपाणां चतुःषष्टौ द्विविधायामपि विरोधः तद्व्यवस्थातिक्रम[(121a)रूपो वि]षयः साधु सम्यक् नीयताम् अनुगम्यताम् । क पुनरियं कलाचतुःषष्टिः परिज्ञायते, यतस्तद्विरोधगतिरनाकुला स्यादित्याह– तस्या इत्यादि । तस्याः कलाचतुःषष्ट्या रूपम् स्वभावोऽर्थतः [शब्दतश्चा]विर्भविष्यति । यथावदवगम्यते । कलापरिच्छेदे चतुर्थकलापरिच्छेदोऽस्य दण्डिनोऽस्ति स त्विह न प्रवर्तते । यद् वा कलानां परिच्छेदेऽभ्यासे सति तस्याः कलाचतुःषष्टे रूपमाविर्भविष्यति । तस्मात् कलाभ्यासः करणीयः, यतस्तद्विरोधः सर्वो यथावदवगम्यते इति ॥

लोकविरोधमुदाहरन्नाह—

आधूतकेशरो हस्ती तीक्ष्णशृङ्गस्तुरङ्गमः ।
गुरुसारोऽयमेरण्डो निःसारः खदिरद्रुमः ॥१७२॥

सुगमम् । हस्त्यादेः तुरङ्गमादेरिव केशराद्यसम्भवादीदृशं लोकविरोधि वचनमिति उक्तरूपोऽयं विरोधः ॥

इति लौकिक एवायं विरोधः सर्वगर्हितः ।

लौकिको लोकविदित एव अत एव सर्वैः शिष्टै[रन्यै]श्च गर्हितो निन्दितः । नैवेदृशं कश्चित् स्वस्थ[ः] प्रयुङ्क्ते । केवलं लोकविरुद्धो भवन्नेवं भवेदिति इत्थं सम्भवमात्रेण दर्शितः ॥

विरोधो हेतुविद्यासु न्यायाख्यासु निदर्श्यते ॥१७३॥

हेतुविद्यासु आन्वीक्षिकीषु न्याय [इत्य]ाख्या[युक्ता]सु इति न्यायाख्यासु उद्देशे न्यायशब्दोपादानात् । एवमनुसृतो विरो[धो] निर्दिश्यते ॥

सत्यमेवाह सुगतः संस्कारानविनश्वरान् ।
तथा हि सा चकोराक्षी स्थितैवाद्यापि मे हृदि ॥१७४॥

सुगतस्तथागतः संस्कारान् सम्भवहेतुप्रत्ययैः क्रियन्त इति पदार्थानविनश्वरान् नित्यानक्षणिकान् सत्यमाहाब्रवीत् । सत्यमिति वचनविशेषणम् । कथं सत्यमिति ? तदेव समर्थ्यते । तथाहि समर्थने । सा काचिदिष्टा चकोराक्षी स्त्री मे मम हृदि मनसि अद्यापि चिर[कालादा]रभ्य स्थिता इति । यदि तु संस्कारा नश्वराः, कथमेवं घटते ? तदेतत् न्यायविरुद्धम् । संस्काराणां सर्वेषां सौगते न्यायशास्त्रे प्रतिक्षणं विशरारु [त]या व्यवस्थापनादिति ॥

कापिलैरसदुद्भूतिः स्थान एवोपवर्ण्यते ।
असतामेव दृश्यन्ते यस्मादस्माभिरुद्भवाः ॥१७५॥

कापिलैः सांख्यैरसतां शक्तिरूपेणाप्यविद्यमानानां उद्भूतिरुत्पादः स्थान एव सत्यमेव । स्थान इत्येकारान्तो निपातो युक्तार्थसूचकः । उपवर्ण्यते विवृतः । यस्माद् असतामेवार्थानाम् उद्भवा जन्मान्यस्माभिर्दृश्यन्ते । एतदपि हेतुविद्याव्याहतम् । सांख्यमते सतामेव भावानां कथञ्चिदाविर्भावस्य व्यवस्थापनात् ॥



न्यायविरोधं निगमयति—

गतिर्न्यायविरोधस्य सैषा सर्वत्र दृश्यताम् ।
अथागमविरोधस्य प्रस्थानं दर्शयिष्यते ॥१७६॥

[121b] न्यायविरोधस्य हेतुविद्याव्याहतेः काव्ये यस्य यस्य गतिः सैषा यथोक्तप्रकारा सर्वत्र अन्यत्रापि यथासम्भवं दृश्यतामवगम्यताम् । अथानन्तरमागमेन धर्मशास्त्रसहितेन वेदेन विरोधस्य बाधाया भारतीभूमेः प्रस्थानं नीतिः दर्शयिष्यते उदाह्रियते ॥

अनाहिताग्नयोऽप्येते जातपुत्रा वितन्वते ।
विप्रा वैश्वानरीमिष्टिमक्लिष्टाचारभूषणाः ॥१७७॥

आहितो वैदिकेन विधिना परिगृहीतोऽग्निः परिणयकालभावी यैरिति आहिताग्नयः । न तथा अनाहिताग्नयो ये [ते] अपि । अपिशब्दो योगं सूचयति । एते विप्राः । जाताः पुत्रा एषामिति जातपुत्राः । विश्वानरो देवता अस्यामिति वैश्वानरीमिष्टिमिज्याम् । आग्नेय[यज्ञं] वितन्वते कुर्वन्ति । अक्लिष्टः परिशुद्धः आचारश्चारित्रं शास्त्रविहितं भूषणमलङ्कारो येषामित्यक्लिष्टाचारभूषणाः । इदमागमविरुद्धम् । ये हि [साग्निका] उत्पन्नतनयाश्च [त एव] वैश्वानरं यागमनुतिष्ठन्तीति श्रुतेः । कथमन्यथा अक्लिष्टाचारा इति ॥

असावनुपनीतोऽपि वेदानधिजगे गुरोः ।
स्वभावशुद्धः स्फटिको न संस्कारमपेक्षते ॥१७८॥

असौ विवक्षितः कश्चित् । अनुपनीतोऽप्रयुक्तवैदिकसंस्कारविशेषोऽपि गुरोः सकाशाद् वेदा[न्] सामादीन् अधिजगेऽधीतवान् । तथाहि, स्वभावेन प्रकृत्यैव न संस्कारतः । शुद्धो निर्मलः स्फटिको मणिः संस्कारमुत्कर्षाधानं नापेक्षते । इदमपि आगमव्याहतम् । उपनीतो वेदानधीयीतेति श्रुतेः । कथमन्यथा शुद्धिरिति ॥

विरोधः सकलोऽप्येष कदाचित् कविकौशलात् ।
उत्क्रम्य दोषगणनां गुणवीथीं विगाहते ॥१७९॥

सकलोऽप्येप विरोधो देशादिकृतः·········एव कश्चिद् दोषरूपेण गणनां संख्यानं दोषात्मतामुत्क्रम्य परित्यज्य गुणानां वीथीं पदवीं गुणस्वभावतां विगाहते स्वीकरोति कदाचित्। न सर्वदा। कुतः? कवेः प्रयो[गस्य] कौशलात् तादृग्विषयपरिग्रहलक्षणात् नैपुणात् कारणात्। न तु यथा तथा वेति ॥

तस्य राज्ञः प्रभावेण तदुद्यानानि जज्ञिरे ।
आर्द्रांशुकप्रवालानामास्पदं सुरशाखिनाम् ॥१८०॥

तस्याभिमतस्य राज्ञः कस्यचित् प्रभावेण पुण्यानुभावात् अतिमानुषात् तस्यो-[122a]द्यानानि। आर्द्राणि स्निग्धानि अंशुकानि वस्त्राण्येव प्रवालानि किसलयानि येषामित्यार्द्रांशुकप्रवालानां सुरशाखिनां कल्पवृक्षाणामास्पदं सद्म। आस्पदार्थस्य एकार्थ्येन विवक्षितत्वात् उद्यानादिबहुत्वसमानाधिकरण्येऽपि एकवचनम्। जज्ञिरे जातानि । पुण्यप्रभावस्याचिन्त्यत्वात् मनुष्यलोकेऽपि सुरशाखिनः सम्भवः। एवमुक्तमाचार्यशूरेण—

पुण्यानुभावादथ तस्य तस्मि-
न्नपङ्कजं पङ्कजमुद्बभूव ।
अवज्ञयेवावजहास मारं
यच्छुक्लया केशरदन्तपंक्त्या ॥

[जातकमालायाम् ४. १६]

इति तत्र देशाविरोधः ॥

राज्ञां विनाशपिशुनश्चचार खरमारुतः ।
धुन्वन् कदम्बरजसा सह सप्तच्छदोद्गमान् ॥१८१॥

खरो रूक्षो मारुतः कदम्बरजसा कदम्बपुष्परेणुना सह सप्तच्छदोद्गमान् सप्तपर्णकुसुमानि धुन्वन् विकिरन् राज्ञां विनाशस्य पिशुनः पञ्चतां सूचयन् चचार प्रववौ। यद्यपि एकदा कदम्बसप्तपर्णकुसुमासम्भवः कदम्बकुसुमस्य प्रावृषेण्यत्वात् सप्तच्छदपुष्पस्य च शारदत्वात्, तथापि राजविनाशनिमित्तमीदृशमौत्पातिकं सम्भवतीति न कालविरोधः ॥



दोलातिप्रेरणत्रस्तवधूजनमुखोद्गतम् ।
कामिनां लयवैषम्याद् गेयं रागमवर्धयत् ॥१८२॥

दोला प्रेङ्खा तस्या अतिप्रेरणादतिकम्पनाद्। [अन]तिमात्रतत्प्रेरणतो हि न भवेदपि लयवैषम्यम्। तस्मात् त्रस्तस्य भीतवधूजनस्य स्त्रीणां मुखादुद्भवं गेयं गीतं कामिनां रागमवर्धयत् उद्दीपितवत्। कुतः? लयस्य क्रियामानकाललक्षणस्य द्रुतमध्यादिप्रभेदस्य तत्कालपरिदृष्टस्य वैषम्यादयथाकालं प्रवृत्तेः। एतच्च विरुद्धम्। कथं हि लयविषममलक्षणदुष्टं गेयं रञ्जकं भवति? तथापि ईदृशं स्थूलं गीतं शीत्कारायमाणं कामिनां सुतरां रञ्जकम्। किमिव हि तेषामरञ्जकमिति न काल-विरोधः ॥

ऐन्दवादर्चिषः कामी शिशिरं हव्यवाहनम् ।
अबलाविरहक्लेशविक्लवो गणयत्ययम् ॥१८३॥

ऐन्दवादिन्दोः सम्बन्धिनोऽर्चिषो रश्मेरप्यधिकशिशिरं शीतं हव्यवाहमग्निं गणयति। [कः?] अधैर्योऽयं विवक्षितः कश्चित् कामी। [कथम्?] अबलायाः प्रियाया विरहो दुःखं स एव वा क्लेशः। तेन विक्लवो विप्लुतः सन्। विरहविकार-विप्लुतस्य हि तथा प्रतिभास इति न लोकविरोधः ॥

प्रमेयोऽप्यप्रमेयोऽसि सकलोऽप्यसि निष्कलः ।
एकस्त्वमप्यनेकोऽसि नमस्ते विश्वमूर्तये ॥१८४॥

प्रमेयः परिच्छेद्योऽपि व्यक्तक्षित्यादिमूर्त्त्यपेक्षया अप्रमेयोऽसि अव्यक्तः परम-रूपतः। प्रमेयोऽपि वा [122b] अनुमानप्रमाणगम्यत्वादप्रमेयोऽसि [इन्द्रिया]-विषयत्वात्। सकलः सावयवोऽपि [आ]रब्धक्षित्यादिमूर्तत्वात्, निष्कलो निरवयवः असि परमात्मरूपतः। एकोऽपि त्वं शाश्वतब्रह्मरूपेण, अनेकोऽसि परिणामवैचित्र्याद् इत्येवं विश्वमूर्तये सर्वमयाय [ते] तुभ्यं नमः। इतीदृशं न न्यायविरुद्धम्, एवंविधत्वाद् ब्रह्मणः परमस्येति ॥

पञ्चानां पाण्डुपुत्राणां पत्नी पञ्चालकन्यका ।
सतीनामग्रणीश्चासीद् दैवो हि विधिरीदृशः ॥१८५॥

पञ्चानां यु[धि]ष्ठिरादीनां पाण्डोः पुत्राणां पत्नी पञ्चालकन्यका द्रौपदी बभूव। हन्त न तर्हि दृष्टपञ्चपुरुषा सा कुलस्त्री स्यादिति चेदाह— सतीनां पतिव्रतानां मध्ये अग्रणीः प्रधानभूता चासीत्। कथमेवम ? दैवं। दैवसम्बन्धी हि विधिः प्रभाव ईदृशः एवंभूता यदेवंविधमपि घटते। किमत्र क्रियताम् ? को हि दैवं विधानमप्रमाणयितुं शक्नोति। हिशब्देनेदमेव प्रसिद्धं द्योत्यते। ततश्च नागमविरोधः।

काव्यलक्षणं यथाप्रतिज्ञातं निगमन्नयाह—

शब्दार्थालंक्रियाश्चित्रमार्गाः सुकरदुष्कराः।
गुणा दोषाश्च काव्यानामिति संक्षिप्य दर्शिताः ॥१८६॥

काव्यानां शब्दश्चार्थश्च शब्दार्थौ शरीरम्। तयोश्चालंक्रिया शब्दालङ्कारा अर्थालङ्काराश्च। चित्रा नानाप्रकारा सुकराः दुष्कराश्च मार्गा यमकादिरूपाः, चित्रा गुणाः समुदायार्थसम्पत्त्यादयः। दोषाश्च तद्विपक्षाः साधारणा असाधारणाश्च श्लेषविपर्ययादयः। उक्तेन विधिना [एतत् सर्वं] संक्षिप्य समासतो दर्शिताः प्रतिपादिताः ॥

दर्शिता नाम। किमतः इति सर्वारम्भस्य तन्निष्ठत्वात् प्रयोजनदर्शनद्वारेण समापयन्नाह—

व्युत्पन्नबुद्धिरमुना विधिदर्शितेन
मार्गेण दोषगुणयोर्वशवर्तिनीभिः।
वाग्भिः कृताभिसरणो मदिरेक्षणाभि–
र्धन्यो युवेव रमते लभते च कीर्तिम् ॥१८७॥

अमुना अनेन मार्गेण काव्यलक्षणविधिना यथावद् दर्शितेन प्रकाशितेन हेतुना, दोषश्च हेयो भागः, गुणश्चोपादेयः। यथोक्तयोस्तयोः कार्यसम्बन्धिनोः व्युत्पन्ना विवेकिनी हानोपादानसमर्था बुद्धि[र्यस्य तादृशः] काव्यदोषगुणज्ञः पुमान्। अत एव वशवर्तिनी[भिरा]यत्ताभिर्वाग्भिः काव्यरूपाभिरनवद्याभिः कृतमभिसरणं स्वरसत एवोपसर्पणमस्मिन्निति वाक्कृताभिसरणः अभिसृतो रमते प्रीतिमनुत्तरामनुभवति। कीर्तिं च



सत्पुरुषतनुमनश्वरीं गुणमयीं भुव[नातिशा]यिनीमतिमनोहरां लभते प्राप्नोति। उपलक्षणं चैतत्। चतुर्वर्गसिद्धिमपि चाधिगच्छति। यथोक्तं प्रथमे परिच्छेदे [१.३]। कथमिव ? वशवर्तिनीभिर्मदिरेक्षणाभिः कृताभिसरणो धन्यः [123a] ...... सुभगो युवा तरुण इ[व]। यथायं रमते प्रीत्युत्सवं निर्विशति, लभते च कीर्तिं सुभग इति ख्यातिं तथा [व्युत्पन्न]बुद्धिरयमित्युपनेयम् ॥

इति गदितुमवस्थां का[म]पि श्लाघ्यरूपा-
मुपचितगुणता[यां] मत्सरं न श्रियै वः।
कनकमयमिवेदं दीप्त[भास्वत्स]वर्ण
श्रवणसुभगमी[डयं] दण्डिनः काव्यलक्ष्म ॥ 1

कृशतरगुणपूर्णं कालमालोकयद्भि–
र्गुरुरिव गुणलेशोऽप्यद्य संभावनीयः।
जगति विगतमेघे क्षारवारिप्रबन्धे
लव इव सलिलस्य स्वादरो दृश्यमानः ॥ 2

गुणलवमपि सन्तो गृह्णते तेन तेषा–
मतिविपुलगुणत्वं तन्न चित्रीयते नः।
गुरुमपि गुणराशिं दुर्जना विद्विषन्तः
कथमपि गुणभावं तन्वते चित्रमेतत् ॥ 3

चिरंतनो वा कविर[द्य] वा स्फुटं
गुणोत्तरं वाक्यमुपास्यते बुधैः।
तरोः पुराणस्य नवस्य वा फलं
निरस्तशङ्कं मधुरं निषेव्यते ॥ 4

भवति सुगममेव ग्राम्यमप्यर्थजातं
परिणतपदबन्धैः स्पृश्यमानं कवीनाम्।
अविकलरसबन्धैस्तद्विदा बध्यमानं
विमलकनकसंख्यां याति यत्किञ्चिदेव ॥ 5

श्रवणममृतपूर्णं स्वान्तमानन्दरूढं
 नयनमपरिशून्यं हर्षजैरश्रुलेशैः ।
वपुरधिगतरोमोद्भेदमास्वाद्य न[ः] स्या-
 दिदमिति किल काव्यं पठ्यते श्रूयते च ॥ 6

विशेषविज्ञानवितानबुद्धयो
 भवन्ति सूक्तिश्रवणस्य भाजनम् ।
प्रभावितः काव्यरसो मनस्विनां
 तनोति लज्जां पशुषु प्रकाशितः ॥ 7

प्रसन्नशास्त्रेषु सुभाषितप्रिये-
 षु शान्तगर्वेषु विशेषवेदिषु ।
व्रजन्ति वाचः सरसा महोत्सवं
 गृहीतविद्याश्चतुरा इव स्त्रियः ॥ 8

दोषेष्वेव निवेशयन्ति हृदयं सर्वं खलास्ते कथं
 कल्पन्ते गुणवैरिणो गुणवतां ज्ञात्वा गुणानां रसम् ।
दोषा[नेव हि] तत्र केवलममी पश्यन्ति [नित्यं सतां]
 त्यक्त्वा सद्गुणराशिमूर्जितमहो चित्रा खलानां गतिः ॥ 9

मिथ्यादूषणसाहसेन महतां तादृग्विशेषच्युता
 लिप्सन्ते किल दुर्जनाः समतया संभावनां तादृशीम् ।
नायं हेतुरवाप्तये गुणभुवः कीर्तेः सतां संसदि
 व्यामोहादपि वा गुणेषु पतनं तेषां यदेतद्बहु ॥ 10

वचनमिदमिदं च वस्तु नैतत्
 समुचितमत्र निषेव्यमन्यदेव ।
प्रहतमिदमपूर्वमीदृयमित्थं
 कथमपि सिद्धिमुपैति वाक्प्रबन्धः ॥ 11

फलमुपचितमिदं श्रमस्य तस्य
 प्रशमनमश्रुलवः सरोमहर्षः ।
प्रमदभवनविजृम्भितो बुधाना-
 मिदमपि [मत्स]रमा[123b]नयन्ति केचित् ॥ 12



तदधिकमथ तादृशं विधातुं
 चतुरमतिः परदूषणे क्रमेत ।
वितथा बुधविदग्धता विधातः
 प्रवदति यत् तदिदं तु कर्णशूलम् ॥ 13

खलजनपरिनिन्दया गुणानां
 न च विहतिः प्रकृतिस्तु तस्य सैषा ।
भवति तु भणितिस्ततः स्फुटेयं
 न खलु खला गुणवर्जितं द्विषन्ति ॥ 14

शिशिरयन्ति य एव म[न]स्विनः
 शशभृतः किरणा इव सद्गुणाः ।
यदि दहन्ति त एव खलानलं
 क्व भवतामथवा खलवल्लभः ॥ 15

दुःखासिका केमियमेति खलं प्रकाश-
 कान्तैर्गुणैर्गुणवतां क इवास्य नाशः ।
प्रीतिं परां सुजनवत् किमयं न भुङ्क्ते
 प्रीत्यर्थ एव सकलः पुरुषप्रयासः ॥ 16

तारयन्ति परमित्यतिशीतै-
 रभ्युपैति सुजनान् परतापी ।
स्वैर्गुणैरिदमनुक्तमुदात्तै-
 रन्तरं सदसतोरतिदूरम् ॥ 17

वाक्यमक्षतगुणं परात्मनो
 नाद्रियेत सुजनस्य सूरिभिः ।
सर्वथा स्वपरघाति वाग्विषं
 दुर्जनस्य परिगृह्यते कथम् ॥ 18

निन्दितं स्तुतमथापि यत्कृतं
न प्रमाणमुपकल्प्यते क्वचित् ।
तादृशं च लपितं यदीहते
धिग् विडम्बनमनात्मवेदनम् ॥ 19

ईर्ष्ययाधिगुणेषु दीप्तया
स्पर्धया च सदृशेषु दह्यते ।
निर्निमित्तमधमेष्ववज्ञया
केन सोऽयमनुरज्यतां खलः ॥ 20

शिष्यते यदि रुषा प्रदीप्यते
न स्वयं च गुणवर्त्म गाहते ।
दुर्जनः कथमयं चिकित्स्यता-
मूर्जनान्न परमस्य भेषजम् ॥ 21

दोषमेव गुणतो विगाहते
तत्र चान्यमनुशास्ति दुर्मतिः ।
ज्ञातवानपि कथंचिदन्यतः
पक्षभङ्गभयतो न मुञ्चति ॥ 22

इत्यलीकबुधमानदूषितं
दूरतस्तमपवादवर्त्मनः ।
कालदष्टमिव वर्जयन्त्यमी
साधु शासनविदोऽपि साधवः ॥ 23

भक्तिमानधिगुणाद् गुणामृतं
सेवते तदवरेषु वर्षति ।
तद्विवृद्धिपदवीं समं समैः
संकथां दिशति दक्षिणो जनः ॥ 24



नामतोऽपि सुजनः सुखावहः
किं पुनर्गुणमयेन कर्मणा ।
त्रासयत्युभयथापि सर्पवद्
दुर्जनस्त्वयमकाण्डरोषणः ॥ 25

अद्भुतप्रति[भया] विशारदाः
शारदेन्दुविशदा विपश्चितः ।
कस्य नाम न हरन्ति मानसं
दुर्जनः किल न तेषु तुष्यति ॥ 26

नान्तमेति सुजनः सुचेष्टिताद्
दुर्जनोऽपि चरितादसद्गुणात् ।
किंचिदे[व स्थित]मन्तरं तयो-
रागतं प्रकरणात्कथंचन ॥ 27

सर्वथा भुवनपावनात्मने
सज्जनाय गुणराशये नमः ।
सद्गुणप्रणिहिता दुरात्मना-
मस्तु बुद्धिरवधूय दुष्टताम् ॥ 28

सर्वाभ्युन्नतराष्ट्रकूटतिलकस्याशान्तगीत[स्तुते]-
रुद्दामद्विपदन्तकस्य गुणिनां धाम्नो गुणानामपि ।
लक्ष्मीजुष्टपदाम्बुजस्य जयिनः सामन्तचूडामणेः
श्रीम[त्तु]ङ्गनराधिपस्य सुधियः सानाथ्यमेवंविधम् ॥ 29

कीर्तयो विदुषां तुङ्गमहीधरसमाश्रयात् ।
प्रभवन्ति महानद्यो यथा लोकार्थवृत्तयः ॥ 30

यशःकीर्तिरिति ख्यातः श्रीमानन्यभ(?)सूरतः ।
कल्याणमित्रमत्राभूद् भिक्षुः सिन्धुविभूषणः ॥ 31

अन्यस्त्वाह—

आसारगुरुका वाणी वादिनामद्य दुर्भगा ।
तद्विपर्या[स]विन्यासा रत्नश्रीज्ञानभारती ॥ 32

इति दण्डिकाव्यलक्षणटीकायां रत्नश्रीनाम्नि दुष्करपरिच्छेदस्तृतीयः ॥

॥ समाप्ता चेयं टीका रत्नश्रीः ॥

॥ कृतिरियमाचार्यरत्नश्रीज्ञानस्य सिंहलजन्मनः ॥
॥ श्रीराज्यपालस्य राज्ञस्त्रयोविंशसंवत्सरे विरचितेयं टीका ॥[1]

---

1. ग्रन्थस्यैतस्य सम्बन्धि सहस्राणां चतुष्टयम् ।
सहस्रमपरं चैव प्रमाणं परिकीर्तितम् ॥
कृत्यव्यक्तद्युतयश्चेतो हरन्ति लोकानाम् ।
उद्योतनैश्च शार्णैः शुक्तेर्मुक्ता इवोद्धृताः ॥



## ॥ परिशिष्टम् ॥

### १

### खण्डितटीकापूर्तिः[1]

[1b] अथ ग्रन्थारम्भे निखिलाविगीतशिष्टाचारपरम्परानुमितश्रुतिप्रतिपादितप्रारिप्सितग्रन्थपरिसमाप्तिपरिपन्थिव्यूहध्वंससाधनं सरस्वत्युत्कीर्तनरूपं मङ्गलमाचरति—

चतुर्मुखमुखाम्भोजवनहंसवधूर्मम ।
मानसे रमतां दीर्घं सर्वशुक्ला सरस्वती ॥१.१॥

सरस्वती मम मानसे चित्ते [दीर्घं] दीर्घकालं, यावता कालेन ग्रन्थनिर्वाहः स्यात् तावत् कालं रमतां क्रीडत्वित्यर्थः । तत्र रूपणम्– चतुर्मुखेति । चतुर्मुखस्य ब्रह्मणो मुखान्येवाम्भोजवनम् । तत्र हंसवधूः । तथा च तस्यास्तन्मुखपद्मवनस्थित्या यथा चातुर्यातिशयः, तथा ममापि मानसस्थित्या चातुर्यातिशयः स्यादित्याशयः । ननु हंसवधूः कथमन्यत्र रंस्यते इत्यत आह— सर्वशुक्लेति सर्ववत् शिववत् शुक्ला शुद्धा निर्दोषा । अतोऽन्यत्र रमणेऽपि न दोष इति । यद्वा सर्वशुक्लेति प्रतीत्यभिप्रायेण स्वभावाख्यानमिति । अत्र च हंसवधूत्वारोपणेन तद्रमणौचित्येन मानसमेव मानसं सर इत्यारोपो जन्यत इति श्लिष्टपरम्परितं रूपकम् । ××[2a]×× रमतामित्याशीषालङ्कारेण रूपकसंसृष्ट्यलङ्कारोऽपि सूचितः । ×××[2b]××× अथ च मम सरस्वती मानसे पाठयतां पठतां च निर्दोषा रमतामिति भावविभङ्गिः ।

स्वकपोलकल्पनापरिहाराय स्वोक्तस्य प्रामाण्यसूचनाय च काव्यलक्षणं प्रतिजानीते—

पूर्वशास्त्राणि संक्षिप्य प्रयोगानुपलक्ष्य च ।
यथासामर्थ्यमस्माभिः क्रियते काव्यलक्षणम् ॥१.२॥

---

1. रत्नश्रीमातृकायां पूर्णतया अंशतो वा अनुपलब्धानां श्लोकव्याख्याभागानां प्रपूरणाय कृष्णकिङ्करतर्कवागीशकृतकाव्यतत्त्वकौमुदीतः सन्दर्भा अत्र संगृहीताः ।

काव्यं लक्ष्यते परीक्ष्यते अत्रानेन काव्यलक्षणम् अलङ्कारशास्त्रम् । तेनास्माभिः काव्यपरीक्षात्र कर्तव्येति भावः । यथेत्यनेनात्मनोऽनौद्धत्यसूचनम् । तेन च स्वस्य प्रामाणिकत्वं सूचितम् । स्वकपोलकल्पनापरीहारायान्यतो वैलक्षण्यप्रतिपादनाय चाह– [पूर्वशास्त्राणि संक्षिप्ये]ति । अल्पाक्षरैर्बहुसदर्थकथनं संक्षेपः । प्रयोगानुपलक्ष्य बाहुल्येन नानोदाहरणानि प्रायशः प्रदर्श्य इत्यर्थः । बाहुल्येन उदाहरणेऽपि संक्षेपात् कौशलातिशयः । प्रयोगानिति बहुवचनेन बाहुल्यलाभः । उपलक्ष्य इत्यनेन प्रायश इत्यस्य । एकस्याप्यलङ्कारस्य सामग्र्येन उदाहर्तुमशक्यत्वमुक्तम् उपलक्ष्य इत्यनेन । तदुक्तम्— न पर्यन्तो विकल्पानाम् [२. ९२] इति ॥

काव्यस्य उपादेयफलोपायतां सूचयितुं सामान्यतो वाचां व्यवहारोपायतामाह–

इह शिष्टानुशिष्टानां शिष्टानामपि सर्वथा ।
वाचामेव प्रसादेन लोकयात्रा प्रवर्तते ॥१.३॥

इह जगति सर्वथा वाचां साधुत्वेऽसाधुत्वे वा उभयथैव वाचामेव प्रसादेन लोकयात्रा लोकव्यवहारो रामादिवद् वर्तितव्यं न रावणादिवदिति इष्टोपादानानिष्टपरीहाररूपः प्रवर्तते इत्यर्थः । वाचां कीदृशीनाम् ? शिष्टैः पाणिन्यादिभिः श्रुतिस्मृतिव्यवहारसम्पन्नैरनुशिष्टानां प्रकृतिप्रत्ययविभागमुखेन व्युत्पादितानां शिष्टानां साध्वीनाम् । अपि नाम । साध्वीनामपीत्यर्थः । एतेन स्त्रीशूद्रपामरादिष्वसाधुशब्दा[3a]नां व्यवहारः [परास्तः] । × × × करप्रसारणादिचेष्टया [चा]णुदीर्घपरिमाणव्यवहारात् वाचामेवेत्ययुक्तमिति परास्तम्, हस्तसंज्ञादिकृतमूकव्यवहारस्य वर्णमूलभूतसाङ्केतिकव्यवहारसापेक्षत्वादिति भावः ॥

[94a]अव्यपेतादिमध्ययमकमाह—

कालकाल गलकालकालमुखकालकाल
कालकालपनकालकालघनकालकाल ।
कालकालसितकालका ललनिकालकाल-
कालकालगतु कालकाल कलिकालकाल ॥३.५०॥

हे कालकाल हे कालस्य काल यमस्यापि यम ! हे कृष्ण ! कापि ललनिका ललना लक्ष्मीः [94b] आलगतु सङ्गच्छताम् । ललनिका किं भूता ? कालकालसित-



कालका कं जलम् आलाति गृह्णातीति कालं मानसं सरः । तत्र कायन्ति शब्दायन्ते इति कालकाः हंसाः । तद्वदलसितः गमने मन्थरः कालकः पादो यस्याः तादृशी । कालकश्चरणेऽपि स्यादिति त्याडिः । पुनः कृष्णसंबोधनमाह– कालकाल कं मयूरम् अलति अलङ्करोति कालकश्चन्द्रकः तद्वत काल इत्यर्थः । पुनः कृष्णसंबोधनम्– कलिकालकाल कलिकालस्य कालो नाशक इत्यर्थः । पुनः कृष्णसंबोधनम्– हे आलकाल[क] अलीनां भ्रमराणां समूह आलम् । तद्वत् काल कृष्णवर्ण इत्यर्थः । पुनः कृष्णसंबोधनम्– अल[क] हे भूषण ! अर्थात् कमलायाः । पुनः संबोधनमाह– गलकालकालमुखकालकाल, गलकालो महादेवः । कालमुखो वानरभेदः । तद्वत्कालः । ततश्च गलकालकालमुखकालकाल इति श्रीकृष्णसंबोधनमेतत् । पुनः संबोधनमाह– कालकालपनकालकालघनकालकाल कं जलम् आलाति कालो मेघः । तेन कायन्ति शब्दायन्ते । कै गै शब्दे । डप्रत्ययान्तः कालकशब्दो मयूरबोधकः । तथा च कालका मयूराः । तेषाम् आलपनं केका यत्र काले । स च वर्षाकालः । तत्र कालो यो घनो मेघः तस्य कालकं कृष्णत्वं आलाति य इत्यर्थः ॥

ननु सन्दष्टयमकस्थानं कथं नोक्तम् इति चेत्– उक्तम्, उच्यते च—

सन्दष्टयमकस्थानमन्तादिपादयोर्द्वयोः ।
उक्तान्तर्गतमप्येतत् स्वातन्त्र्येणात्र कीर्त्यते ॥३.५१॥

द्वयोः पादयोः अन्तादी सन्दष्टयमकस्थानमिति योजना । उक्तान्तर्गतम् रवेण भौमो ध्वज [३. ४७] इत्यादिश्लोके एतस्याप्युक्तत्वादिति भावः । नोक्तं चेत्– कथं पुनरत्रोच्यत इति वाच्यम् ? नामविशेषाङ्कितत्वेन अस्य सर्वैर्निबन्धृभिः स्वातन्त्र्येण दर्शितत्वात् । एतदेव शङ्कोत्तरभावेनाह– स्वातन्त्र्येणात्रेति ॥

सन्दष्टयमकस्थानमुदाहरति—

उपोढरागाप्यबला मदेन सा
मदेनसा मन्युरसेन योजिता ।
न योजितात्मानमनङ्गतापिता-
ङ्गवापि तापाय ममास नेयते ॥३.५२॥

सा अबला मदेन यौवनभरेण उपोढरागापि प्राप्तरागापि मदेनसा मम यदेनः पापमपराधस्तेन यो मन्युः कोपः तद्रसेन योजिता सती योजितात्मानं योजित आत्मा स्वभावो यया एवंभूताम् अनङ्गतापयोगितां गता अपि मम इयते तापाय अपरिच्छेदाय तापाय न न आस । अपि तु आस एवेत्यर्थः । क्वचिद् धराधरेत्यपि [३.७२] उदाहरणम् । तन्न प्रायशः पुस्तके[षु] दृश्यते ।

समुद्गो नाम यमकमाह—

अर्धाभ्यासः समुद्गः स्यादस्य भेदास्त्रयो मताः ।
पादाभ्यासोऽप्यनेकात्मा व्यज्यते स निदर्शनैः ॥३.५३॥

अर्धाभ्यासः समुद्ग इति लक्षणम् । अत्र अभ्यासः आवृत्तिर्बोध्यः । त्रयो भेदा इति- अस्य समुद्गस्य त्रयो भेदाः । प्रथमतृतीययोरैक्यं द्वितीयचतुर्थयोरैक्यमित्येकः प्रकारः । अपरः प्रथमद्वितीययोस्तृतीयचतुर्थयोरैक्यमिति । अन्यश्च प्रथमचतुर्थयोर्द्वितीयतृतीययोरिति ॥

तत्र प्रथमं प्रथमप्रकारमाह-

नास्थेयःसत्त्वयावर्ज्यः परमायतमानया ।
नास्थेयः स त्वया वर्ज्यः परमायतमानया ॥३.५४॥

दूत्या उक्तिरियम् । स ना पुरुषः त्वया आस्थेयः आदरणीयः । ना किंभूतः ? आवर्ज्यः स्ववशीकरणीयः । किंभूतया त्वया ? परमायतमानया परमम् उत्कृष्टं यथा स्यादेवम् आयतमानया यत्नं कुर्वत्या इत्यर्थः । आङ्पूर्वयत्धातोः शानचो रूपमिदम् । पुनः कीदृश्या? आस्थेयः[सत्त्वया] [96a] स्थिरतरं सत्त्वं गुणो यस्याः तया नेत्यर्थः । स्थिरशब्दादीयसुन्प्रत्यये स्थेय इति । तथा च निर्विकारचित्तया त्वया नेत्यर्थः । पुनः किंभूतः ? वर्ज्यः त्याज्यः । कया ? परमायतमानया इत्यर्थः । तथा च दीर्घमानया इत्यर्थः । दीर्घमाने कृते सन्न्यस्तो [भविष्यती]त्यर्थः ॥



द्वितीयं प्रकारमाह—

नरा जिता माननया समेत्य
न राजिता माननया समेत्य ।
विनाशिता वै भवतायनेन
विनाशिता वैभवतायनेन[1] ।३.५५॥

नृपं प्रत्युक्तिरियम् । अत्र वै संबोधने । हे नृप ! भवता अयनेन उद्यमेन नरा मनुष्या जिताः पराजिताः । किं कृत्वा ? माननया पूजया हेतुभूतया समेत्य सर्वैर्मिलित्वा । किंभूताः नराः ? माननयासं मानश्च नयश्च माननयौ तयोः आसं क्षेपं त्यागम् एत्य प्राप्य न राजिताः न दीप्ताः । न केवलं जिताः अपि तु विनाशिता अपि । किंभूताः ? विना पक्षिणा आशिता भक्षिताः । भवता किंभूतेन ? वैभवतायनेन वैभवस्य विभुत्वस्य तायनेन पालकेन । तायृपालनसन्तानयोरिति ॥

तृतीयं प्रकारमाह—

कलापिनां चारुतयोपयान्ति
वृन्दानि लापोढघनागमानाम् ।
वृन्दानिलापोढघनागमानां
कलापिनां चारुतयोऽपयान्ति[2] ॥३.५६॥

कलापिनां मयूराणां वृन्दानि [चारुतया मनोज्ञतया] उपयान्ति सर्वतो गच्छन्ति । किंभूतानां कलापिनाम् ? लापोढघनागमानां लापेन केकामय्या वाण्या ऊढः सूचितो घनागमो यैस्तेषामित्यर्थः । एवं कलापिनां हंसानाम् आरुतयः शब्दाश्च अपयान्ति दूरीभवन्ति । किंभूतानां हंसानाम् ? वृन्दानिलापोढघनागमानां वृन्दानिलेन सङ्घवातेन अपोढो निवारितो घनागमो येषां तेषामित्यर्थः । शेषकलापिशब्देन के जले लपितुं शीलं येषां ते कलापिनो हंसा इत्युच्यत इति बोध्यम् ॥

१. तापनेनेत्यस्माभिर्भोटपाठानुसारेण मूले स्वीकृतः ॥
२. एकत्र अपयन्तीति रत्नश्रीपाठदर्शनादुभयत्र स एव मूले गृहीतः ।

—०—

# काव्यलक्षणश्लोकसूची


| | | | | | |
|---|---|---|---|---|---|
| अकस्मादेव ते चण्डि | २ | ७१ | अनुकम्पाद्यतिशयः | ३ | १३७ |
| अक्रिया चन्द्रकार्याणाम | २ | ८४ | अनुप्रासधिया गौडैः | १ | ४४ |
| अगागाङ्गाङ्गकाकाक- | ३ | ९१ | अनेकशब्दोपादानात् | २ | ११२ |
| अङ्गाङ्गिभावावस्थानम् | २ | ३५८ | अनेनैव प्रकारेण | २ | ११५ |
| अङ्गुल्यः पल्लवान्यासन् | २ | ६७ | अन्यथैव स्थिता वृत्तिः | २ | २१९ |
| अङ्गुल्यादौ दलादित्वम | २ | ७० | अन्यधर्मस्ततोऽन्यत्र | १ | ९३ |
| अंशुकानि प्रवालानि | २ | २८८ | अपकर्ताहमस्मीति | २ | २९१ |
| अच्युतोऽप्यवृषच्छेदी | २ | ३२० | अपह्नुतिरपह्नुत्य | २ | ३०२ |
| अजित्वा सार्णवामुर्वीम | २ | २८२ | अप्रस्तुतप्रशंसा स्यात् | २ | ३३८ |
| अतः प्रजानां व्युत्पत्तिम | १ | ९ | अपाङ्गभागपातिन्या | २ | २२३ |
| अत्यन्तबहवस्तेषाम | ३ | ३ | अपादः पदसन्तानः | १ | २३ |
| अत्यन्तमसदार्याणाम् | २ | २४८ | अपार्थं व्यर्थमेकार्थम् | ३ | १२५ |
| अत्र धर्मैरभिन्नानाम् | २ | ११४ | अपि त्वनियमो दृष्टः | १ | २५ |
| अत्रोद्याने मया दृष्टा | ३ | ११२ | अपीतक्षीबकादम्बम | २ | १९८ |
| अद्य या मम गोविन्द | २ | २७४ | अभावसाधनायालम | २ | २३७ |
| अधिकेन समीकृत्य | २ | ४८ | अभिन्नवेलौ गम्भीरौ | २ | १८१ |
| अनङ्गः पञ्चभिः पौष्पैः | २ | १२१ | अभ्रूविलासमस्पृष्ट- | २ | १८९ |
| अनङ्गलङ्घनालग्न- | ३ | ६० | अमृतस्यन्दिकिरणः | २ | ३०५ |
| अनञ्जितासिता दृष्टिः | २ | १९९ | अमृतात्मनि पद्मानाम | २ | १५९ |
| अनन्वयससन्देहौ | २ | ३५६ | अम्भोरुहमिवाताम्रम् | २ | १५ |
| अनभ्यासेन विद्यानाम् | २ | २४५ | अयमर्थान्तराक्षेपः | २ | १६४ |
| अनयोरनवद्याङ्गि | १ | ८७ | अयमान्दोलितः प्रौढ- | २ | २३५ |
| अनल्पविटपाभोगः | २ | २०८ | अयमालोहितच्छायः | २ | ८९ |
| अनाहिताग्नयोऽप्येते | ३ | १७७ | अयं परवशाक्षेपः | २ | १५० |
| अनिष्ठुराक्षरप्रायम् | १ | ६९ | अयं मम दहत्यङ्गम् | २ | १७५ |







| | | | | | |
|---|---|---|---|---|---|
| अरण्यं कैश्चिदाक्रान्तम | ३ | ७ | अहो विशालं भूपाल | २ | २१७ |
| अरत्नालोकसंहार्यम् | २ | १९५ | आक्रोशत्यवजानाति | २ | ६२ |
| अर्थमिष्टमनाख्याय | २ | २९३ | आक्षिपन्त्यरविन्दानि | २ | ३५९ |
| अर्थव्यक्तिरनेयत्वम् | १ | ७३ | आदिराजयशोबिम्बम् | १ | ५ |
| अर्थान्तरप्रवृत्तेन | २ | ३४६ | आदौ राजेत्यधीराक्षि | ३ | ११६ |
| अर्थावृत्तिः पदावृत्तिः | २ | ११६ | आधूतकेसरो हस्ती | ३ | १७२ |
| अर्थिनां कृपणा दृष्टिः | १ | ७७ | आनन्दाश्रु प्रवृत्तं मे | २ | २६५ |
| अर्थो न सम्भृतः कश्चित् | २ | १५७ | आभीरादिगिरः काव्ये | १ | ३६ |
| अर्धाभ्यासः समुद्गः स्यात् | ३ | ५३ | आम्नायानामाहान्त्या वाक् | ३ | ८४ |
| अलङ्कारान्तराणाम् | २ | २१८ | आरुह्याक्रीडशैलस्य | ३ | २४ |
| अलङ्कृतमसंक्षिप्तम् | १ | १८ | आर्यादिवत् प्रवेशः किम् | १ | २७ |
| अलिनीलालकलतम् | ३ | ८९ | आविर्भवति नारीणाम् | २ | २५४ |
| अल्पं निर्मितमाकाशम् | १ | ९१ | आवृत्तिः प्रातिलोम्येन | ३ | ७३ |
| अवते भवते बाहुः | ३ | १४९ | आवृत्तिमेवसङ्घात- | १ | ६१ |
| अवध्यैरिन्दुपादानाम | २ | २४३ | आशयस्य विभुतेर्वा | २ | २९८ |
| अवलेपपदेनात्र | २ | ११० | आशीर्नामाभिलषिते | २ | ३५५ |
| अवलेपमनङ्गस्य | २ | १०९ | आसु रात्रिष्विति प्राज्ञैः | ३ | १६१ |
| अविकृत्य मुखाङ्गानि | २ | ७४ | आहुरर्धभ्रमं नाम | ३ | ८० |
| अविशेषेण पूर्वोक्तम् | ३ | १३५ | आहुः समागतां नाम | ३ | ९८ |
| अव्यपेतव्यपेतात्मा | ३ | १ | इक्षुक्षीरगुडादीनाम् | १ | १०२ |
| असावनादराक्षेपः | २ | १४० | इति कारुण्यमुद्रिक्तम् | २ | २८५ |
| असावनुपनीतोऽपि | ३ | १७८ | इति कालविरोधस्य | ३ | १९९ |
| असावनुक्रोशाक्षेपः | २ | १५६ | इति चन्द्रत्वमेवेन्दोः | २ | ३०६ |
| असावनुशयाक्षेपः | २ | १५८ | [इति तत्कालसम्भूतम्] | पृः | ११२ |
| असावुदयमारूढः | २ | ३०९ | इति त्यागस्य वाक्येऽस्मिन् | १ | ७८ |
| अस्तमस्तकपर्यस्त- | १ | ८२ | इति दुष्करमार्गोऽपि | ३ | ९६ |
| अस्ति काचिदवस्था सा | ३ | १३३ | इति पद्येऽपि पौरस्त्याः | १ | ८३ |
| अस्त्यनेको गिरां मार्गः | १ | ४० | इति पादादियमकम् | ३ | १९ |
| अस्त्यभिन्नक्रियः कश्चित् | २ | ३१२ | इति प्रौढाङ्गनाबद्ध- | २ | २०५ |

| | | | | | |
|---|---|---|---|---|---|
| इति मार्गद्वयं भिन्नम् | १ | १०१ | इत्यारुह्य परां कोटिम् | २ | २८१ |
| इति मुक्तः परो युद्धे | २ | २९२ | इत्याशीर्वचनाक्षेपः | २ | १४२ |
| इति मुख्येन्दुराक्षिप्तः | २ | १६० | इत्याह युक्तं विदुरः | २ | २७५ |
| इति लक्ष्म्याः प्रयोगेषु | २ | २४४ | इत्युत्साहः प्रकृष्टात्मा | २ | २८३ |
| इति लौकिक एवायम् | ३ | १७३ | इत्युदाहृतयो दत्ताः | २ | ३५३ |
| इति वैदर्भमार्गस्य | १ | ४२ | इत्येकव्यतिरेकोऽयम् | २ | १८० |
| इति व्यपेतयमक- | ३ | ३३ | इत्येतदसमस्ताख्यम् | २ | ६८ |
| इति श्लेषानुविद्धानाम् | २ | ३४५ | इत्येवमादयो भेदाः | २ | १६९ |
| इति सम्भाव्यमेवैतत् | १ | ८८ | इत्येवमादिराक्षेपः | २ | १६६ |
| इति साक्षात्कृते देवे | २ | २७७ | इत्येवमादेः सौभाग्यम् | २ | ५४ |
| इतिहासकथोद्भूतम् | १ | १५ | इत्येवमादिस्थानेयम् | २ | २६६ |
| इति हृद्यमहृद्यं तु | १ | ९७ | इत्येवं परुषाक्षेपः | २ | १४४ |
| इति हेतुविकल्पस्य | २ | २५८ | इदं मघोनः कुलिशम् | २ | २८९ |
| इतीदं नादृतं गौडैः | १ | ५४ | इदमत्युक्तिरित्युक्तम् | १ | ९२ |
| इत्थं कलाचतुःषष्टौ | ३ | १७१ | इदमन्धं तमः कृत्स्नम् | १ | ४ |
| इत्यनङ्गजयायोग- | २ | १२२ | इदमम्लानमालायाः | २ | २८७ |
| इत्यनालोच्य वैषम्यम् | १ | ५० | इदमस्वस्थचित्तानाम् | ३ | १३० |
| इत्यनुज्ञामुखेनैवम् | २ | १३६ | इदमार्द्रस्मितज्योत्स्नम् | २ | ७८ |
| इत्यनुच्छिन्नरूपत्वात् | २ | २६२ | इन्दुपादाः शिशिराः | ३ | १५७ |
| इत्यनुप्रासमिच्छन्ति | १ | ५८ | इन्दुबिम्बादिवोत्कीर्णम् | २ | ४१ |
| इत्यनुर्जित एवार्थः | १ | ७१ | इववद्वायथाशब्दाः | २ | ५७ |
| इत्यनेकप्रकारोऽयम् | २ | २३८ | इष्टं साधर्म्यवैधर्म्य- | २ | ८८ |
| इत्यपूर्वसमासोक्तिः | २ | २११ | इह शिष्टानुशिष्टानाम् | १ | ३ |
| इत्ययं संशयाक्षेपः | २ | १६२ | ईदृशं वर्ज्यते सद्भिः | २ | ५६ |
| इत्यादिदीपकत्वेऽपि | २ | १०८ | ईदृशं संशयायैव | ३ | १४१ |
| इत्यादिदीपकान्युक्ता- | २ | १०२ | उत्कण्ठयति मेघानाम् | २ | ११८ |
| इत्यादिपादयमक- | ३ | ३७ | उत्कर्षवान् गुणः कश्चित् | १ | ७६ |
| इत्यादि बन्धपारुष्यम् | १ | ६० | उत्कामुन्मनयन्त्येते | ३ | १३६ |
| इत्यादि शास्त्रमाहात्म्य- | ३ | १५१ | उत्पादयति लोकस्य | २ | १७२ |





| | | | | | |
|---|---|---|---|---|---|
| उत्प्रवालान्यरण्यानि | २ | २४० | कथादिः सर्वभाषाभिः | १ | ३८ |
| उत्प्रेक्षाभेद एवासौ | २ | ३५७ | कदा नौ सङ्गमो भावी | २ | २५९ |
| उत्सङ्गे शयनं सख्याः | १ | ९९ | कन्याहरणसंग्राम- | १ | २९ |
| उदयन्नेव सविता | २ | ३४७ | कन्ये कामयमानं माम् | १ | ६३ |
| उदात्तापह्नुतिश्लिष्ट- | २ | ६ | कमलैः समकेशं ते | ३ | २९ |
| उदितैरन्यपुष्टानाम् | ३ | ३१ | करेण ते रणेष्वन्त- | ३ | २६ |
| उद्दिष्टानां पदार्थानाम् | २ | २७१ | करोऽतिताम्रो रामाणाम् | ३ | २१ |
| उद्देशानुगुणोऽर्थानाम् | ३ | १४४ | करोति सहकारस्य | ३ | ११ |
| उद्धृतां राजकादुर्वी | ३ | २५ | कर्णस्य भूषणमिदम् | २ | २२२ |
| उद्यानमारुतोद्धूताः | २ | ३३६ | कर्ता यद्युपमानं स्यात् | २ | २२८ |
| उद्यानसहकाराणाम् | २ | २४९ | कर्पूरपादपामर्श- | ३ | १६५ |
| उपमानोपमेयत्वम् | २ | २२६ | कलं कमुक्तं तनुमध्य- | ३ | ५९ |
| उपमापह्नुतिः पूर्वम् | २ | ३०७ | कलक्वणितगर्भेण | २ | १० |
| उपमारूपकाक्षेप- | २ | ३११ | कलापिनां चारुतया | ३ | ५६ |
| उपमैव तिरोभूत- | २ | ६६ | कल्पदेशीयदेश्यादि- | २ | ६० |
| उपोढरागाप्यबला | ३ | ५२ | कविभावकृतं चिह्नम् | १ | ३० |
| उभयत्र पुमान् कश्चित् | २ | २०९ | कान्तं सर्वजगत्कान्तम् | १ | ८५ |
| उभयव्यतिरेकोऽयम् | २ | १८२ | कान्त्या चन्द्रमसं धाम्ना | २ | ५० |
| एकचक्रो रथो यन्ता | २ | ३२६ | कापिलैरसदुद्भूतिः | ३ | १७५ |
| एकद्वित्रिचतुष्पाद- | ३ | २ | कामार्ता घर्मतप्ता वा | ३ | १४३ |
| एकवाक्ये प्रबन्धे वा | ३ | १३१ | कामेन बाणा निशाताः | ३ | १५८ |
| एकाकारं चतुष्पादम् | ३ | ७० | कामं कन्दर्पचाण्डालः | १ | ६४ |
| एकाङ्गरूपकं चैतत् | २ | ७६ | कामं सर्वोऽप्यलङ्कारः | १ | ६२ |
| एताः षोडश निर्दिष्टाः | ३ | १०६ | कार्याक्षेपः स कार्यस्य | २ | १३४ |
| एष राजा यदा लक्ष्मीम् | १ | ५३ | कालकालगलकाल- | ३ | ५० |
| ऐन्दवादर्चिषः कामी | ३ | १८३ | कालं कालमनालक्ष्य | ३ | ३५ |
| ओजः समासभूयस्त्वम् | १ | ८० | काव्यशोभाकरान् धर्मान् | २ | १ |
| कण्ठे कालः करस्थेन | २ | १२ | काश्चिन्मार्गविभागार्थम् | २ | ३ |
| कथं त्वदुपलम्भाशा | ३ | १२ | किञ्चिदारभमाणस्य | २ | २१९ |

| | | | | | |
|---|---|---|---|---|---|
| किं तु बीजं विकल्पानाम् | २ | २ | गुणदोषानशास्त्रज्ञः | १ | ८ |
| किमयं शरदम्भोदः | २ | १६१ | गुरुगर्भभरक्लान्ताः | १ | ६८ |
| किं पद्ममन्तर्भ्रान्तालि | २ | २६ | गुरोः शासनमत्येतुम् | २ | २६६ |
| कुतः कुवलयं कर्णे | १ | १२३ | गृहाणि नाम तान्येव | १ | ८६ |
| कुब्जामासेवमानस्य | ३ | १०६ | गौर्गौः कामदुघा सम्यक् | १ | ६ |
| कुमुदानि निमीलन्ति | १ | ६४ | चक्षुषी तव रज्येते | २ | १३१ |
| कुमुदान्यपि तापाय | २ | १७७ | चतुर्मुखमुखाम्भोज- | १ | १ |
| कूजितं राजहंसानाम् | २ | ३३२ | चन्दनप्रणयोद्गन्धिः | १ | ४६ |
| कृष्णार्जुनानुरक्तापि | २ | ३३७ | चन्दनारण्यमाधूय | २ | २३६ |
| केन कः सह सम्भूय | ३ | १२२ | चन्दनोदकचन्द्रांशु- | २ | ४० |
| केषाञ्चिदुपमाभ्रान्तिः | २ | २२५ | चन्दनं चन्द्रिका मन्दः | २ | ३०३ |
| कोकिलालापवाचालः | १ | ४८ | चन्द्रबिम्बादिव विषम् | २ | ३६ |
| कोकिलालापसुभगः | २ | ३५२ | चन्द्रमाः पीयते देवैः | २ | ६० |
| क्रीडागोष्ठीविनोदेषु | ३ | ६७ | चन्द्रातपस्य बाहुल्यम् | २ | २१४ |
| क्षणं दर्शनविघ्नाय | २ | १४६ | चन्द्रारविन्दयोः कक्षाम् | २ | ३७ |
| क्षिणोतु कामं शीतांशुः | २ | १७६ | चन्द्रेण त्वन्मुखं तुल्यम् | २ | ३२ |
| क्षितिविजितिस्थिति- | ३ | ८५ | चन्द्रे शरन्निशोत्तंसे | १ | ५६ |
| खातयः कनि काले ते | ३ | १११ | चन्द्रोऽयमम्बरोत्तंसः | २ | १६२ |
| गच्छ गच्छसि चेत् कान्त | २ | १४१ | चपलो निर्दयश्चासौ | २ | २६६ |
| गच्छेति वक्तुमिच्छामि | २ | १४७ | चरन्ति चतुरम्भोधि- | २ | ६६ |
| गतिर्न्यायविरोधस्य | ३ | १७६ | चराचराणां भूतानाम् | ३ | १६३ |
| गतोऽस्तमर्को भातीन्दुः | २ | २४२ | चारुचन्द्रमसं भीरु | १ | ५७ |
| गतः कामकथोन्मादः | २ | २४६ | चित्रमाक्रान्तविश्वोऽपि | २ | १६३ |
| गन्ता चेद्गच्छ तूर्णं ते | २ | १४५ | चोलाः कालागुरुश्यामाः | ३ | १६६ |
| गाम्भीर्यप्रमुखैरत्र | २ | ८६ | छन्दोविचित्यां सकलः | १ | १२ |
| गाम्भीर्येण समुद्रोऽसि | २ | ८६ | जगदानन्दयत्येषः | २ | १७३ |
| गिरा स्खलन्त्या नम्रेण | ३ | ११४ | जयता त्वन्मुखेनास्मान् | ३ | १७ |
| गुणजातिक्रियादीनाम् | २ | ३२१ | जलं जलधरोद्गीर्णम् | २ | १०५ |
| गुणतः प्रागुपन्यस्य | १ | २१ | जहि शत्रुकुलं कृत्स्नम् | ३ | १३२ |





| | | | | | |
|---|---|---|---|---|---|
| जातिक्रियागुणद्रव्यवाचिना | २ | ६७ | त्वदपाङ्गाह्वयं जैत्रम् | २ | २५३ |
| जातिक्रियागुणद्रव्यस्वभाव- | २ | १३ | त्वदर्पितदृशस्तस्याः | २ | २६१ |
| जितः प्रकृष्टकेशाख्यः | ३ | ११८ | त्वदाननमधीराक्षम् | २ | ४४ |
| जित्वा विश्वं भवानत्र | २ | ११६ | त्वदाननमिवोन्निद्रम् | २ | १७ |
| जीविताशाबलवती | २ | १३६ | त्वन्मुखं कमलेनैव | २ | १६ |
| ज्ञेयः सोऽर्थान्तरन्यासः | २ | १६७ | त्वन्मुखं कमलं चेति | २ | १८८ |
| तत्कथाख्यायिकेत्येका | १ | २८ | त्वन्मुखं पुण्डरीकं च | २ | १६१ |
| तत्पदव्यां पदं धत्ते | २ | ६४ | त्वया कर्णोत्पलं कर्णे | २ | १०६ |
| तथापि कटु कर्णानाम् | ३ | १५५ | त्वय्येव त्वन्मुखं दृष्टम् | २ | २२ |
| तदल्पमपि नोपेक्ष्यम् | १ | ७ | त्वं समुद्रश्च दुर्वारौ | २ | १८३ |
| तदस्ततन्द्रैरनिशम् | १ | १०५ | दक्षिणाद्रेरुपसरन् | ३ | १५० |
| तदिदं वाङ्मयं भूयः | ? | ३२ | दण्डे चुम्बति पद्मिन्या | ३ | ११० |
| तदुपश्लेषणार्थोऽयम् | २ | २३१ | दशत्यसौ परभृतः | २ | २६४ |
| तदेतत्काव्यसर्वस्वम् | १ | १०० | दिवो जागर्ति रक्षायै | २ | ४६ |
| तदेतद्वाङ्मयं भूयः | १ | ३२ | दीप्तमित्यपरैर्भूम्ना | १ | ७२ |
| तद्गुरूणां लघूनां च | १ | ८१ | दुष्करं जीवितोपायम् | २ | १५२ |
| तनुमध्यं पृथुश्रोणि | २ | ३३४ | दूरकार्यस्तत्सहजः | २ | २५१ |
| तव तन्वङ्गि मिथ्यैव | २ | १२७ | दूरे प्रियतमः सोऽयम् | २ | १३३ |
| तव प्रिया सच्चरिता- | ३ | ४१ | देवधिष्ण्यमिवाराध्यम् | १ | ६० |
| तवाननमिवाम्भोजम् | २ | १८ | देवानां नन्दनो देवः | ३ | ६३ |
| तस्य चानुकरोतीति | २ | ६५ | देशकालकलालोक- | ३ | १२६ |
| तस्य मुष्णाति सौभाग्यम् | २ | ६३ | देशोऽद्रिवनराष्ट्रादिः | ३ | १६२ |
| तस्य राज्ञः प्रभावेण | ३ | १८० | दोलातिप्रेरणत्रस्त- | ३ | १८२ |
| तापसेनापि रामेण | २ | ३४२ | दोषाकरेण संबध्नन् | २ | ३१० |
| ताम्राङ्गुलिदलश्रेणि | २ | ६६ | दोषानपरिसंख्येयान् | ३ | १०७ |
| तुण्डैराताम्रकुटिलैः | २ | ६ | दोषाभासो गुणः कोऽपि | २ | २७० |
| तेऽमी प्रयोगमार्गेषु | २ | २५२ | धनं च बहु लभ्यं ते | २ | १३७ |
| तेषु तेष्वयथारूढम् | ३ | १६४ | धराधराकारधरा | ३ | ७२ |
| तैः शरीरं च काव्यानाम् | १ | १० | धर्माक्षेपोऽयमाक्षिप्तम् | २ | १२८ |

| | | |
|---|---|---|
| धर्म्याक्षेपोऽयमाक्षिप्तः | २ | १३० |
| धैर्यलावण्यगाम्भीर्य- | २ | १७९ |
| ध्रुवं ते चोरिता तन्वि | २ | २७२ |
| न कठोरं न वा तीक्ष्णम् | २ | ३२२ |
| नगरार्णवशैलर्तु- | १ | १६ |
| न चिरं मम तापाय | २ | १३५ |
| न जातु शक्तिरिन्दोस्ते | २ | ३४ |
| न देवकन्यका नापि | २ | ३२३ |
| न पद्मं मुखमेवेदम् | २ | ३६ |
| न पद्मस्येन्दुनिग्राह्य- | २ | २७ |
| न पर्यन्तो विकल्पानाम् | २ | ९६ |
| न प्रपञ्चभयाद्भेदाः | ३ | ३८ |
| न बद्धा भ्रुकुटिर्नापि | २ | ३२४ |
| न मन्दयावर्जित- | ३ | ५७ |
| न मया गोरसाभिज्ञम् | ३ | १०८ |
| न मीलयन्ति पद्मानि | २ | ८३ |
| नयनानन्दजनने | ३ | ८८ |
| नयानयालोचनया | ३ | ४६ |
| न रथा न च मातङ्गाः | २ | ३२५ |
| नरा जिता माननया | ३ | ५५ |
| न लिङ्गवचने भिन्ने | २ | ५१ |
| नलिन्या इव तन्वङ्ग्याः | २ | ४५ |
| न विद्यते यद्यपि | १ | १०४ |
| न श्रद्दधे वाचम् | ३ | ६५ |
| न संहितां विवक्षामि | ३ | १५९ |
| न स्तूयसे नरेन्द्र त्वम् | २ | १६५ |
| न स्पृशत्यायुधम् | ३ | १२१ |
| नाघ्रातं न कृतं कर्णे | २ | १५५ |
| नादिनोऽमदना धीः स्वा | ३ | ७५ |
| नानावस्थं पदार्थानाम् | २ | ८ |
| नायकेनैव वाच्यान्या | १ | २४ |
| नासिक्यमध्या परितः | १ | ११४ |
| नास्थेयः सत्त्वया वर्ज्यः | ३ | ५४ |
| निगृह्य केशेष्वाकृष्टा | २ | २८० |
| निगृह्य नेत्रे कर्षन्ति | ३ | १३ |
| नियमाक्षेपरूपोक्तिः | २ | ३१३ |
| निर्णयार्थं प्रयुक्तानि | ३ | १३९ |
| निर्णेतुं शक्यमस्तीति | २ | २१६ |
| निर्वर्त्ये च विकार्ये च | २ | २३८ |
| निवृत्तव्यालसंसर्गः | २ | २१० |
| निष्ठ्यूतोद्गीर्णवान्तादि | १ | ९५ |
| निसर्गादिपदैरत्र | २ | २०२ |
| निस्त्रिंशत्वमसावेव | २ | ३१७ |
| नूनं नुन्नानि नानेन | ३ | ९५ |
| नृत्यन्ति निचुलोत्सङ्गे | २ | १०३ |
| नेदृशं बहु मन्यन्ते | १ | ७५ |
| नैकोऽपि त्वादृशोऽद्यापि | २ | ४७ |
| नैतन्मुखमिदं पद्मम् | २ | ९४ |
| नैसर्गिकी च प्रतिभा | १ | १०३ |
| न्यूनमप्यत्र यैः कैश्चित् | १ | २० |
| पद्मानां पाण्डुपुत्राणाम् | ३ | १८५ |
| पदसन्धानवृत्त्या वा | १ | ६६ |
| पद्मसंमीलनादत्र | २ | २६० |
| पद्मं तावत् तवान्वेति | २ | २० |
| पद्मं बहुरजश्चन्द्रः | २ | ३० |
| पद्मानामेव दण्डेषु | २ | ३१८ |
| पद्मान्यर्कांशुनिष्ठ्यूताः | १ | ९६ |
| पद्मिनी नक्तमुन्निद्रा | ३ | १६७ |





| | | |
|---|---|---|
| पद्यं गद्यं च मिश्रं च | १ | ११ |
| पन्थाः स एष विवृतः | २ | ३६५ |
| पयोधरतटोत्सङ्ग- | १ | ८४ |
| पयोमुचः परीतापम् | २ | १७१ |
| परदाभिलाषो मे | ३ | १३४ |
| परम्पराया बलवा | ३ | ६४ |
| परं प्रहृत्य विश्रान्तः | १ | ६७ |
| परस्परोपकारित्वम् | २ | ३६२ |
| परागतरुराजीव | ३ | २७ |
| पवनो दक्षिणः पर्णम् | २ | ९८ |
| पश्चात् पर्यस्य किरणान् | २ | २५५ |
| पश्याम्यनङ्गजातङ्क- | ३ | १४२ |
| पाणिपद्मानि भूपानाम् | २ | २५७ |
| पातु वो भगवान् विष्णुः | ३ | २८ |
| पायं पायं तवारीणाम् | २ | २८६ |
| पिबन्मधु यथाकामम् | २ | १०४ |
| पुंसः पुराणादाच्छिद्य | २ | ३४३ |
| पूर्वत्र शब्दवत् साम्यम् | २ | १९४ |
| पूर्वत्राशयमाहात्म्यम् | २ | ३०१ |
| पूर्वशास्त्राणि संहृत्य | १ | २ |
| पूर्वस्मिन् भेदमात्रोक्तिः | २ | १९० |
| पूष्ण्यातप इवाह्नीव | २ | ४२ |
| प्रतिज्ञाहेतुदृष्टान्त- | ३ | १२७ |
| प्रतिपक्षप्रतिद्वन्द्वि- | २ | ५८ |
| प्रतिबिम्बप्रतिच्छन्द- | २ | ५९ |
| प्रतिषेधोक्तिराक्षेपः | २ | १२० |
| प्रतीयमानसौक्ष्म्यादि- | २ | १९३ |
| प्रत्याचक्षानया हेतून् | २ | १३८ |
| प्रभावतो नामन | ३ | ६३ |
| प्रमेयोऽप्यप्रमेयोऽसि | ३ | १८४ |
| प्रवृत्तैव प्रयामीति | २ | १५३ |
| प्रसादवत् प्रसिद्धार्थम् | १ | ४५ |
| प्रसिद्धहेतुव्यावृत्त्या | २ | १९७ |
| प्राक् प्रीतिर्दर्शिता सेयम् | २ | २८९ |
| प्रागभावादिरूपस्य | २ | २५० |
| प्रावृषेण्यैर्जलधरैः | २ | ३३३ |
| प्रीत्युत्पादनयोग्यस्य | २ | २३५ |
| प्रेयः प्रियतराख्यानम् | २ | २७३ |
| बध्नन्नङ्गेषु रोमाञ्चम् | २ | ११ |
| बन्धुत्यागस्तनुत्यागः | ३ | १४७ |
| बिभर्ति भूमेर्वलयम् | ३ | ६१ |
| ब्रह्मणोऽप्युद्भवः पद्मः | २ | ३१ |
| भगवन्तौ जगन्नेत्रे | २ | १७० |
| भगिनी भगवत्यादि | १ | ६८ |
| भवादृशा नाथ न | ३ | ४२ |
| भवानिव महीपालः | २ | ५३ |
| भाविकत्वमिति प्राहुः | २ | ३६१ |
| भुजङ्गभोगसंसक्ता | २ | ३४४ |
| मञ्जरीकृत्य घर्माम्बु | २ | ७२ |
| मण्डलीकृत्य बर्हाणि | १ | ७० |
| मतान्धुनानारमताम् | ३ | ४९ |
| मदनो मदिराक्षीणाम् | ३ | ७९ |
| मदपाटलगण्डेन | २ | ७५ |
| मदरक्तकपोलेन | २ | ८० |
| मधुपानकलात् कण्ठात् | २ | १७४ |
| मधुरं मधुरम्भोज- | ३ | ८ |
| मधुरं रसवद् वाचि | १ | ५१ |
| मधुरा रागवर्धिन्यः | २ | ३१५ |

| | | | | | |
|---|---|---|---|---|---|
| मधुरेणदृशां मानम | ३ | २० | मेघनादेन हंसानाम् | ३ | ५ |
| मध्यन्दिनार्कसन्तप्तः | २ | २२० | यच्च सन्ध्यङ्गवृत्त्यङ्ग- | २ | ३६४ |
| मनोभव तवानीकम् | ३ | ८१ | यत्नः सम्बन्धविज्ञान- | ३ | १४६ |
| मनोरथप्रियालोक- | ३ | १४० | यत्नाक्षेपः स यत्नस्य | २ | १४८ |
| मन्दानिलेन चरता | ३ | १६० | यथा कथञ्चित् सादृश्यम् | २ | १४ |
| मन्दो गन्धवहः क्षारः | २ | १०४ | यथेन्दुरिव ते वक्त्रम् | २ | २३० |
| मन्ये शङ्के ध्रुवं प्रायः | २ | २३२ | यदपीतादिजन्म स्यात् | २ | २०० |
| मया मयालम्भ्यकला- | ३ | ४८ | यदि किञ्चित् भवेत् पद्मम् | २ | २४ |
| मय्येवास्या मुखश्रीः | २ | २३ | यदि निन्दन्निव स्तौति | २ | ३४१ |
| मल्लिकामालभारिण्यः | २ | २१३ | यदि लेपनमेवेष्टम् | २ | २२७ |
| महाराष्ट्राश्रयां भाषाम् | १ | ३४ | यदि सत्यैव यात्रा ते | २ | १४३ |
| महीभृद्भूरिकटकः | २ | ३१९ | यमः कुबेरो वरुणः | २ | ३२९ |
| मही महावराहेण | १ | ७४ | यया कयापि श्रुत्या यत् | १ | ५२ |
| मानमस्या निराकर्तुम् | २ | २९७ | यशश्च ते दिक्षु रजश्च | ३ | ६० |
| मानयोग्यां करोमीति | २ | २४१ | यस्याः कुसुमशय्यापि | २ | २८४ |
| मानिनी मा निनीषुस्ते | ३ | १६ | यः स्वरस्थानवर्णानाम् | ३ | ८३ |
| मानेन मानेन सखि | ३ | ४ | याति चन्द्रांशुभिः स्पृष्टा | २ | ३४८ |
| [मानेर्ष्ये इह शीर्यते] | पृ: | २६७ | यानमानयमाराविं | ३ | ७६ |
| मिश्राणि नाटकादीनि | १ | ३१ | यामताश कृतायासा | ३ | ७४ |
| मुक्तकं कुलकं कोशः | १ | १३ | याम यामत्रयाधीना | ३ | ३६ |
| मुखचन्द्रस्य चन्द्रत्वम् | २ | ९१ | युवैव गुणवान् राजा | २ | २६७ |
| मुखपङ्कजरङ्गेऽस्मिन् | २ | ९३ | योगमालात्मकं नाम | ३ | १०४ |
| मुखादित्वं निवर्त्यैव | २ | ९५ | यो लिम्पत्यमुना तुल्यम् | २ | २२९ |
| मुखेन्दुरपि ते चण्डि | २ | ९२ | रत्नभित्तिषु संक्रान्तैः | २ | ३०० |
| [मुग्धा कान्तस्य यात्रोक्ति-] | पृ: | ११२ | रमणी रमणीया मे | ३ | १८ |
| मुदा रमणमन्वीत | ३ | ३० | रवेण भौमो ध्वजवर्ति- | ३ | ४७ |
| मृगेक्षणाङ्कं ते वक्त्रम् | २ | ३५ | रागमादर्शयन्नेषः | २ | ३१६ |
| मृणालबाहु रम्भोरु | २ | ३३५ | राजकन्यानुरक्तं माम् | २ | २६४ |
| मृतेति प्रेत्य संगन्तुम् | २ | २७८ | राजन्वत्यः प्रजा जाताः | ३ | ६ |





| | | | | | |
|---|---|---|---|---|---|
| राजहंसोपभोगार्हम् | २ | ८७ | वारणो वा रणोद्दामः | ३ | ९ |
| राजितैराजितैक्ष्णयेन | ३ | १० | विकसन्ति कदम्बानि | २ | ११७ |
| राजीवमिव ते वक्त्रम् | २ | १६ | विजितात्मभवद्वेषि | ३ | १२० |
| राज्ञां विनाशपिशुनः | ३ | १८१ | विनायकेन भवता | ३ | ६८,६९ |
| राज्ञां हस्तारविन्दानि | २ | २५६ | विप्रलम्भैर्विवाहैश्च | १ | १७ |
| रूढमूलः फलभरैः | २ | २०७ | विरुद्धानां पदार्थानाम् | २ | ३३१ |
| रूपणादङ्गिनोऽङ्गानाम् | २ | ७९ | विरोधः सकलोऽप्येषः | ३ | १७९ |
| रे रे रोरुरुरूरोरु- | ३ | ९२ | विवक्षया विशेषस्य | २ | २१२ |
| रोषाक्षेपोऽयमुद्रिक्तः | २ | १५४ | विवक्षितगुणोत्कृष्टैः | २ | ३२८ |
| लास्यच्छलितशम्यादि | १ | ३९ | विशदा विशदामत्त- | ३ | १४ |
| लिम्पतीव तमोऽङ्गानि | २ | २२४ | विशेषणसमग्रस्य | २ | ८२ |
| लीलास्मितेन शुचिना | ३ | ४३ | विशेष्यमात्रभिन्नापि | २ | २०६ |
| लुप्ते पदान्ते शिष्टस्य | ३ | १५४ | विश्वव्यापी विशेषस्थः | २ | १६८ |
| लेशो लेशेन निर्भिन्नम् | २ | २६३ | विषमं विषमन्वेति | ३ | १५ |
| लोकातीत इवात्यर्थम् | १ | ८९ | विष्णुना विक्रमस्थेन | २ | १०१ |
| वक्त्रं चापरवक्त्रं च | १ | २६ | वीरश्रृङ्गारयोर्भावौ | ३ | १७० |
| वक्त्रं निसर्गसुरभि | २ | २०१ | वीर्योत्कर्षस्तुतिर्निन्दा | २ | २६८ |
| वनान्यमूनि न गृहा- | २ | २४७ | व्यक्तिरुक्तिक्रमवशात् | २ | ३६३ |
| वंशवीर्यश्रुतादीनि | १ | २२ | व्युत्क्रान्तातिव्यवहित- | ३ | ९९ |
| वर्णानां न्यूनताधिक्ये | ३ | १५६ | व्युत्पन्नबुद्धिरमुना | ३ | १८७ |
| वर्णानामेकरूपत्वम् | ३ | ७८ | व्युत्पन्नमिति गौडीयैः | १ | ४६ |
| वर्णावृत्तिरनुप्रासः | १ | ५५ | शतपत्रं शरच्चन्द्रः | २ | ३३ |
| वर्धते सह पान्थानाम् | २ | ३५१ | शब्दहीनमनालक्ष्य- | ३ | १४८ |
| वल्गितभ्रुगलद्घर्म- | २ | ७३ | शब्दार्थालंक्रियाश्चित्र- | ३ | १८६ |
| वस्तु किञ्चिदभिप्रेत्य | २ | २०३ | शब्देऽपि ग्राम्यतास्त्येव | १ | ६५ |
| वस्तु किञ्चिदुपन्यस्य | २ | ४६ | शब्दोपात्ते प्रतीते वा | २ | १७८ |
| वहन्नपि महीं कृत्स्नाम् | २ | १८६ | शब्दोपादानसादृश्य- | २ | १८७ |
| वाक्यार्थेनैव वाक्यार्थः | २ | ४३ | शयनीये परावृत्त्य | ३ | ११९ |
| वाच्यस्याग्राम्यतायोनिः | २ | २९० | शशीत्युत्प्रेक्ष्य तन्वङ्गि | २ | २५ |

| | | |
|---|---|---|
| शस्त्रप्रहारं ददता | २ | ३५४ |
| शिशिरांशुप्रतिद्वन्द्वि | २ | २८ |
| शुक्लः श्वेतार्चिषो वृद्ध्यै | २ | १०७ |
| शैशिर्यमभ्युपेत्यैव | २ | ३०४ |
| श्यामलाः प्रावृषेण्याभिः | २ | १०० |
| श्रव्यहंसगिरो वर्षाः | ३ | १६८ |
| श्रीदीप्ती ह्रीकीर्ती | ३ | ८६ |
| श्रीमानमानमरवर्त्म- | ३ | ४४ |
| श्लाघ्यैर्विशेषणैर्युक्तम् | १ | ७६ |
| श्लिष्टमस्पृष्टशैथिल्यम् | १ | ४३ |
| श्लिष्टमिष्टमनेकार्थम् | २ | ३०८ |
| श्लेषः प्रसादः समता | १ | ४१ |
| श्लेषः सर्वासु पुष्णाति | २ | ३६० |
| श्लोकेषु नियतस्थानम् | ३ | १५२ |
| स एष कारणाक्षेपः | २ | १३२ |
| स एष श्लेषरूपत्वात् | २ | १८४ |
| सकलापोल्लसनया | ३ | २२ |
| सकृद्द्विस्त्रिश्च योऽभ्यासः | ३ | ६७ |
| सङ्ख्याता नाम संख्यानम् | ३ | १०१ |
| सङ्गतानि मृगाक्षीणाम् | २ | ३३० |
| सङ्गमय्य सखीं यूना | २ | २६५ |
| सत्यं ब्रवीमि न त्वं माम् | २ | १२३ |
| सत्यमेवाह सुगतः | ३ | १७४ |
| सन्दष्टयमकस्थानम् | ३ | ५१ |
| सन्नाहितोमानम | ३ | ६६ |
| सभासु राजन्नसुराहतैः | ३ | ४० |
| सभा सुराणामबला | ३ | ५८ |
| समं बन्धेष्वविषमम् | १ | ४७ |
| समानया समानया | ३ | ७१ |
| समानरूपा गौणार्था | ३ | १०० |
| समानशब्दोपन्यस्त- | ३ | १०३ |
| समासश्च बहुव्रीहिः | २ | ६१ |
| समासातिशयोत्प्रेक्षा | २ | ५ |
| समुच्चयोपमाप्यस्ति | २ | २१ |
| समुदायार्थशून्यं यत् | ३ | १२८ |
| समुद्रः पीयते देवैः | ३ | १२६ |
| संस्कृतं नाम दैवी वाक् | १ | ३३ |
| संस्कृतं सर्गबन्धादि | १ | ३७ |
| सरूपशब्दवाच्यत्वात् | २ | २६ |
| सर्गबन्धो महाकाव्यम् | १ | १४ |
| सर्वत्र भिन्नवृत्तान्तैः | १ | १६ |
| सर्वपद्मप्रभासार- | २ | ३८ |
| स वर्तमानाक्षेपोऽयम् | २ | १२४ |
| सह दीर्घा मम श्वासैः | २ | ३५० |
| सहया सगजा सेना | २ | १२३ |
| सहिष्ये विरहं नाथ | २ | १५१ |
| सहोक्तिः परिवृत्त्याशीः | २ | ७ |
| सहोक्तिः सहभावस्य | २ | ३४६ |
| साचिव्याक्षेप एवैष | २ | १४६ |
| सा दिनामयमायामा | ३ | ७७ |
| सा नामान्तरितामिश्र- | ३ | १२४ |
| सा नामान्तरिता यस्याः | ३ | १०२ |
| सा भवेदुभयच्छन्ना | ३ | १०५ |
| सामायामा मायामासा | ३ | ८२,८७ |
| सारयन्तमुरसा रमयन्ती | ३ | ४५ |
| सालं सालम्बकलिका | ३ | ३४ |
| सुखं जीवन्ति हरिणाः | २ | ३३६ |
| सुन्दरी सा न वेत्येषः | २ | १२६ |





| | | |
|---|---|---|
| सुराजितह्रियो यूनाम् | ३ | ३२ |
| सुराः सुरालये स्वैरम् | ३ | ११३ |
| सूरिः सुरासुरासारि | ३ | ६४ |
| सेयमप्रस्तुतैवात्र | २ | ३४० |
| सैषा हेतुविशेषोक्तिः | २ | ३२७ |
| सोमः सूर्यो मरुद्भूमिः | २ | २७६ |
| सोऽयं भविष्यदाक्षेपः | २ | १२६ |
| सौरसेनी च गौडी च | १ | ३५ |
| स्तनयोर्जघनस्यापि | २ | २१५ |
| स्त्रीणां संगीतविधि- | ३ | १५३ |
| स्त्रीव गच्छति षण्ढोऽयम् | २ | ५२ |
| स्थितिनिर्माणसंहार- | ३ | १४५ |
| स्थितिमानपि धीरोऽपि | २ | १८५ |
| स्थिरायते यतेन्द्रियः | ३ | ३६ |
| स्नातुं पातुं बिसान्यत्तुम् | २ | २२१ |
| स्मरः खरः खलः कान्तः | १ | ५६ |
| स्मरानलो मानविवर्धितो यः | ३ | ६२ |
| स्मितपुष्पोज्ज्वलं लोल- | २ | ७७ |
| स्वजातिव्यतिरेकोऽयम् | २ | १६६ |
| स्वभावमधुराः स्निग्धाः | २ | ३१४ |
| स्वभावाख्यानमुपमा | २ | ४ |
| स्वयमेव गलन्मान- | ३ | २३ |
| हन्यते सा वरारोहा | ३ | १३८ |
| हंसीव धवलश्चन्द्रः | २ | ५५ |
| हरत्याभोगमाशानाम् | २ | १११ |
| हरिपादः शिरोलग्न- | २ | ८१ |
| हृतद्रव्यं नरं त्यक्त्वा | ३ | ११७ |
| हृद्यगन्धवहास्तुङ्गाः | २ | ११३ |
| हेतुर्निर्वर्तनीयस्य | २ | २३६ |
| हेतुश्च सूक्ष्मलेशौ च | २ | २३३ |

३

## रत्नश्रीसमुद्दिष्टविशिष्टनामसूची


| | |
|---|---|
| अन्त्यभसूरः | २८१ |
| अश्वघोषः | ६१ |
| आचार्यशूरः | ५९ |
| आन्वीक्षिकी | ११४, २५२ |
| कम्बलः | ६३ |
| कादम्बरी | २१ |
| कुन्तला | २४ |
| कोहलः | २२ |
| किरातार्जुनीयम् | २१ |
| जातकमाला | २३, ३४ |
| तुङ्गः | २८१ |
| दक्षिणसागरः | १२४ |
| दमयन्तीचम्पूः | २३ |
| धर्मकीर्त्तिः | ५८ |
| नाट्यशास्त्रम् | २२ |
| पाणिनिः | २ |
| प्रवरसेनः | २४ |
| भरतः | २२, १९९ |
| भामहः | १७,१९,२०–२२,२७,२५० |
| भारविः | १९७ |
| मन्वादिस्मृतिः | २६९ |
| मल्लनागः | २,६ |
| महाराष्ट्राः | २४ |
| माघः | १२ |
| मातृचेटः | ६०,६२,६३ |
| मुरला | २४ |
| मेधावी | ६७ |
| यशःकीर्तिः | २८१ |
| रघुवंशम् | ८,३४ |
| रत्नप्रभा | २६ |
| राज्यपालः | २८२ |
| रामशर्मा | ६९,२४४ |
| लीलावतीकथा | २० |
| रामायणम् | ११ |
| शब्दार्थचिन्ताविवृतिः | १४३ |
| शिशुपालवधम् | ९ |
| श्यामवादी | ६७ |
| समन्तकूटः | १२४ |
| सिंहलः | १२४ |
| सेतुबन्धम् | २५ |
| सौगतन्यायशास्त्रम् | २७२ |
| हयग्रीववधम् | १५ |
| हरिवृद्धः | २३,२४ |
| हर्षचरितम् | १७ |


—०—



४

## रत्नश्रीसंगृहीतविशिष्टसन्दर्भसूची


| | | |
|---|---|---|
| अक कुटिलायां गतौ | चान्द्रधातुपाठे [१.५३४] | २३७ |
| अकोऽकि दीर्घः | चान्द्रव्याकरणे [५.१.१०६] | २६५,२६७ |
| अक्षणोराधूर्णनं वाक्यम् | रत्नश्रियः | ७० |
| अग्निचित् कपिला सत्री | [?] | ५२ |
| अङ्गनासरसीं रम्याम् | रत्नश्रियः | ९५ |
| अण्णो हिअएएहि | हरिवृद्धस्य | २४ |
| अद्भुतप्रतिभया विशारदाः | रत्नश्रियः | २८१ |
| अदृष्टया हरिणी दृष्टः | रत्नश्रियः | १५२ |
| अद्य याता वयं देव | रत्नश्रियः | ५२ |
| अधरस्तव तन्वङ्गि | रत्नश्रियः | १०१ |
| अधीत्य तावत् | मातृचेटस्य | ६१ |
| अन्येषां दृश्यते | चान्द्रव्याकरणे [५.२.१४५] | २१२ |
| अन्यैः स्वरचितं तस्य | भामहस्य [काव्यालङ्कारे] | १७ |
| अपि स्वदेहात् | कालिदासस्य [रघुवंशे] | ४ |
| अभ्यासयोगेन शुभाशुभानि | आचार्यशूरस्य [जातकमालायाम्] | ५९ |
| अभ्युदयनिःश्रेयसहेतुर्धर्मः | वैशेषिकसूत्रे | ११ |
| अयं कुणालो | [?] | ६६ |
| अर्थप्रधाना प्रतिकर्मितेयम् | रत्नश्रियः | ८६ |
| अर्थः प्रकरणं लिङ्गम् | भर्तृहरेः | ६० |
| अशोकवनिकाचोद्यम् | | १५ |
| आतः प्रादिभ्यः कः | चान्द्रव्याकरणे [१ १.१४२] | २३७ |
| आलस्यं यदि न भवेत् | अश्वघोषस्य [?] | ६१ |

| | | |
|---|---|---|
| आवर्तते स एवार्थः | [?] | ६१ |
| आसारगुरुकावाणी | [?] | २८२ |
| इति गदितुमवस्थाम् | रत्नश्रियः | २७७ |
| इत्थमप्रक्रमेणैवम् | रत्नश्रियः | १८५ |
| इत्यलीकबुधमानदूषितम् | रत्नश्रियः | २८० |
| इयमाद्या विधेः सृष्टिः | रत्नश्रियः | ११७ |
| इष्टकेत्यादिना ह्रस्वः | चान्द्रव्याकरणे १.२.७४ | १३५ |
| ईर्ष्ययाधिगुणेषु | रत्नश्रियः | २८० |
| उज्जहार खुरक्षुण्ण- | रत्नश्रियः | ४५ |
| उत्कण्ठयति मेघानाम् | रत्नश्रियः | १०३ |
| उपक्षेपः परिकरः | भरतस्य [नाट्यशास्त्रे] | १६८ |
| उपमानेन तद्भावम् | भामहस्य [काव्यालङ्कारे] | १६२ |
| उपमानेन तत्त्वं च | भामहस्य [काव्यालङ्कारे] | १६२ |
| उपमानोपमेयत्वम् | भामहस्य [काव्यालङ्कारे] | ७३ |
| उपायाद् वापि येऽहेयाः | [?] | १४३ |
| उष्णमधुन्यायः | | ४५ |
| ऊहइ अ विविह भासा | [?] | २४ |
| ऋजुस्वभावो न च बध्यते | रत्नश्रियः | ६४ |
| एकस्तावद् रचयितुमलम् | [?] | ६१ |
| एषा किंशुकराजी | रत्नश्रियः | १६३ |
| कथं कथामार्ग- | मातृचेटस्य [?] | ६२ |
| कन्याहरणसंग्राम- | भामहस्य [काव्यालङ्कारे] | २० |
| कवेरभिप्रायमशब्दगोचरम् | [?] | ३१ |
| कः पद्मनालदलकेसर- | [?] | १३१ |
| कस्यचित् सहसोत्थानम् | रत्नश्रियः | ४३ |
| काचिदेषा सुरस्त्रीणाम् | रत्नश्रियः | ११६ |
| कान्ते इन्दुशिरोरत्ने | भामहस्य [काव्यालङ्कारे] | २६७ |





| | | |
|---|---|---|
| काव्यान्यपि यदीमानि | भामहस्य [काव्यालङ्कारे] | २४० |
| किमयं शशी न स दिवापि | भामहस्य [काव्यालङ्कारे] | १६२,१६३ |
| कीर्तयो विदुषां तुङ्गमहीधर- | रत्नश्रियः | २८१ |
| कृतो ज्ञानमयः श्रीमान् | रत्नश्रियः | ६८ |
| कृत्यव्यक्तद्युतयः | रत्नश्रियः | ८२ |
| कृशतरगुणपूर्णम् | रत्नश्रियः | २७७ |
| कोकिलालापवाचालः | रत्नश्रियः | ३३ |
| खलजनपरिनिन्दया | रत्नश्रियः | २७६ |
| गतोऽस्तमर्को भातीन्दुः | भामहस्य [काव्यालङ्कारे] | १४६ |
| गत्वा देशान्तरं वित्तम् | रत्नश्रियः | २१३ |
| गान्धर्वं त्रिविधं विद्यात् | भरतस्य [नाट्यशास्त्रे] | २६८ |
| गुञ्जद्भृङ्गमिवाम्भोजम् | रत्नश्रियः | ६५ |
| गुणलवमपि सन्तः | रत्नश्रियः | २७७ |
| गुणेभ्य एव | [?] | ६१ |
| गुणौघपुण्यस्य | मातृचेटस्य [?] | ६४ |
| गौडीयमिदमेतत्तु | भामहस्य [काव्यालङ्कारे] | २८ |
| गौडेश्वराडम्बरः | बाणस्य [हर्षचरिते] | ३४ |
| ग्रन्थस्यैतस्य सम्बन्धि | रत्नश्रियः | २८२ |
| घोषलीग्रामकायस्थ- | | ६६ |
| चन्दनप्रणयोद्गन्धिः | रत्नश्रियः | ३३ |
| चन्द्रो हंस इवाभाति | रत्नश्रियः | ८५ |
| चिरन्तनो वा कविरद्य | रत्नश्रियः | २७७ |
| जगतां प्रीतिसर्वस्वम् | रत्नश्रियः | १६१ |
| जगदेतत् प्रियासर्वम् | रत्नश्रियः | १७३ |
| जितेन्द्रियतया साद्य | रत्नश्रियः | २१३ |
| जित्वा विश्वं भवानद्य | रत्नश्रियः | १०३ |
| जृम्भितं श्वसितम् | रत्नश्रियः | १४६ |
| त एत उपमादोषाः | भामहस्य [काव्यालङ्कारे] | ८५ |

| | | |
|---|---|---|
| ततः प्रसादोत्तमसस्य- | मातृचेटस्य [?] | ६१ |
| तदधिकमथ तादृशम् | रत्नश्रियः | २७६ |
| तदर्थहेतुसिद्धान्त- | भामहस्य [काव्यालङ्कारे] | २५३ |
| तदप्यलं सोढुमपण्डितात् | मातृचेटस्य [?] | ६४ |
| तद्रूपं सर्वतो भिन्नम् | धर्मकीर्तेः [प्रमाणवार्त्तिके] | ५८ |
| त्यज मानधने मानम् | रत्नश्रियः | २१३ |
| तव तन्वङ्गि वदनम् | रत्नश्रियः | ६५ |
| तस्य योनिर्भवेत् कण्ठः | भरतस्य [नाट्यशास्त्रे] | २६८ |
| ताण्डवमशक्नुवत्या | [?] | २६ |
| तारयन्ति परमित्यति- | रत्नश्रियः | २७६ |
| तामनुस्मृत्य पद्माक्षीम् | रत्नश्रियः | १५८ |
| ताम्बूलरागवलयम् | भामहस्य [काव्यालङ्कारे] | १६२ |
| ताम्बूलवल्लीपरिणद्धपूगा- | कालिदासस्य [रघुवंशे] | ३४ |
| तीव्राभिषङ्ग प्रभवेण | कालिदासस्य [कुमारसम्भवे] | ३६ |
| तुल्योदयोऽवसानत्वात् | भामहस्य [काव्यालङ्कारे] | १६४ |
| त्वन्नामग्रहणादेव | रत्नश्रियः | ४८ |
| दहत्यपि नरेन्द्राणाम् | रत्नश्रियः | ६८ |
| दिगन्तबद्धनिर्घोषम् | रत्नश्रियः | ६६ |
| दुःखासिका किमियम् | रत्नश्रियः | २७६ |
| दूते सन्धानमायत्तम् | कामन्दकस्य [नीतिसारे] | १३ |
| दृष्टिरामन्थरा ताम्रा | रत्नश्रियः | १४६ |
| दोषमेव गुणतो विगाहते | रत्नश्रियः | २८० |
| दोषेष्वेव निवेशयन्ति | रत्नश्रियः | २७८ |
| धाविता अपि ते दन्ताः | रत्नश्रियः | ५१ |
| न कदाचिदभूत् | रत्नश्रियः | १५२ |
| न किञ्चिन्मार्दवम् | रत्नश्रियः | १८१ |
| न खड्गधारा निशिता | रत्नश्रियः | १०१ |
| नदृश्यतः | चान्द्रव्याकरणे [?] | २६३ |





| | | |
|---|---|---|
| नन्दिग्रहात्यादि | चान्द्रव्याकरणे [१.१.१४०] | १२५ |
| नन्वहं प्रणत एव | रत्नश्रियः | ४२ |
| न पठ्यते साधुजनः | मातृचेटस्य [?] | ६२ |
| न प्रसीदसि तन्वङ्गि | रत्नश्रियः | ११७ |
| नमस्त्रयाय रत्नानाम् | रत्नश्रियः | ११ |
| नमः सम्पन्नकृत्याय | रत्नश्रियः | ३६ |
| न वक्त्रापरवक्त्राभ्याम् | भामहस्य [काव्यालङ्कारे] | १८,१६ |
| न विषं विषमं किञ्चित् | रत्नश्रियः | १८१ |
| न शस्त्रं निशितम् | रत्नश्रियः | १८१ |
| न सज्जनाद् दूरतरः | [?] | १५० |
| न स्तनद्वयमेतत्ते | रत्नश्रियः | १७४ |
| नानाधात्वर्थगम्भीरा | भामहस्य [काव्यालङ्कारे] | २४० |
| नान्तमेति सुजनः | रत्नश्रियः | २८१ |
| नामतोऽपि सुजनः | रत्नश्रियः | २८१ |
| नायकं प्रागुपन्यस्य | भामहस्य [काव्यालङ्कारे] | १४ |
| निन्दितं स्तुतमथापि | रत्नश्रियः | २८० |
| निरस्तदौर्गत्यसमृद्धि- | रत्नश्रियः | ६६ |
| निर्विशेषं न सामान्यम् | रत्नश्रियः | ५७ |
| निवृत्तनिःशेषविशेषविप्लवम् | रत्नश्रियः | ६५ |
| निर्वृतिं परमां वक्ति | रत्नश्रियः | १४६ |
| निष्ठ्यूतामति नाम | [?] | ५५ |
| नीलया तव लोलाक्षि | रत्नश्रियः | १३८ |
| नीला नेत्रद्युतिः शुद्धा | रत्नश्रियः | १३८ |
| नृशंसो नृपतिः सोऽयम् | रत्नश्रियः | १०० |
| नेयं विरौति भृङ्गाली | भामहस्य [काव्यालङ्कारे] | १७३ |
| पतन्तः पद्मगर्भेषु | रत्नश्रियः | ३१ |
| पद्मिनीयं न सा तन्वी | रत्नश्रियः | १५२ |
| पयोधरयुगे तन्वि | रत्नश्रियः | ६५ |

